ॐ क्षिं हृदयाय नमः । पं शिरसे स्वाहा । ॐ शिखायै वषट् । स्वां कवचाय हुम् । हां अस्त्राय फट्

ध्यानम् - गरुडः सर्वदा ध्येयः सुधापूर्णं हिरण्मयम् ।
दधानः कुम्भमभयं पीतः शुक्लारुणो हरिः ॥
कृष्णश्च जानुतो नाभेः कण्ठात् कादन्त एव च ।
प्रियायुङ् पुरतो विष्णोः पक्षतुण्डसमन्वितः ॥
जङ्गमस्थावरविषहृदयं सर्वकामदः ।

मन्त्रः- ॐ क्षिप ॐ स्वाहा

द्वारपालदेवता मन्त्राः - ॐ न्रों नन्दाय नमः । ॐ स्रों सुन्दाय नमः
ॐ वं वज्रनाभाय नमः । ॐ हं हरीशाय नमः

निर्माल्यधारिमन्त्रः - शाण्डिल्य ऋषिः । गायत्री छन्दः । विष्वक्सेनो देवता
ॐ ह्रां हृदयाय नमः। ह्रीं शिरसे स्वाहा । ह्रूं शिखायै वषट् । ह्रैं कवचाय हुम् । ह्रौं नेत्रत्रयाय वौषट् । ह्रः अस्त्राय फट्

ध्यानम् - शङ्खं चक्रं गदां चैव हलायुधविधारिणम् ।
किरीटादिविभूषाङ्गं आसीनं पद्मपीठके ॥
प्रसार्य दक्षिणं पादं वामपादं सुकुञ्चितम् ।
विष्वक्सेनं सदा देवं भक्तिज्ञानादि साधकम् ॥

मन्त्रः - ॐ ह्रूं वैं विष्वक्सेनाय नमः
ॐ विष्वक्सेनाय विद्महे वेत्रहस्ताय धीमहि । तन्नः सेनेशः प्रचोदयात् ॥

## ॥ लक्ष्मीमन्त्र सङ्ग्रह ॥

मूलमन्त्रः - ब्रह्मा ऋषिः । पङ्क्तिश्छन्दः । महालक्ष्मिर्देवता
ॐ श्रियै हृदयाय नमः । लक्ष्म्यै शिरसे स्वाहा । मायै शिखायै वषट् । इन्दिरायै कवचाय हुम् । रमायै अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ श्रीं नमः (पादयोः) । श्रिं (हृदि) । यैं (शिरसि) । नं (नाभौ) । मः (मुखे)

ध्यानम् - कौशेयपीतवसनामरविन्दनेत्रां
पद्मद्वयाभयवरोद्यतपद्महस्ताम् ।
उद्यच्छतार्कसदृशां परमाङ्कसंस्थां
ध्यायेद्विधीशनतपादयुगां जनित्रीम् ॥

मन्त्रः - ॐ श्रीं श्रियै नमः

**उपचारमन्त्रः** - ॐ श्रीं ह्रीं क्लीं ऐं लक्ष्म्यै कमलधारिण्यै सिंहवहिन्यै स्वाहा

**वेदोक्तमन्त्रः** - गन्धद्वारां चिक्लीतेन्दिराऽनुष्टप् ।
ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥

**गायत्री** - ॐ महादेव्यै च विद्महे विष्णुपत्न्यै च धीमहि ।
तन्नो लक्ष्मीः प्रचोदयात् ॥

**पीठमन्त्राः** : वामे - ॐ श्रीगुरुभ्यो नमः । दक्षिणे - सर्वदेवताभ्यो । पनर्वामे- सर्वगुरुभ्यो । पीठोर्ध्वभागे आग्नेय्यां - धर्माय । नैर्ऋत्ये - ज्ञानाय । वायव्ये - वैराग्याय । ऐशान्ये - ऐश्वर्याय । पीठस्य पूर्वगात्रे - अधर्माय । दक्षिणगात्रे - अज्ञानाय । पश्चिमगात्रे - अवैराग्याय । उत्तरगात्रे - अनैश्वर्याय । पीठस्य अधोभागे(आधारपीठे) - परमपुरुषाय । तदुपरि(निधिकुम्भे)- आधारशक्त्यै । तदुपरि (शिलाकूर्मे) - कूर्माय । तदुपरि (योगनाले) - अनन्ताय । तदुपरि (ब्रह्मशिलायां) - पृथिव्यै । पीठमध्ये - क्षीरसागराय । श्वेतद्वीपाय । महते दिव्यरत्नमण्डपाय । पं पद्माय । कर्णिकायां पूर्वे - हं अर्कमण्डलाय । नैऋत्ये- सं सोममण्डलाय । वायव्ये - रं वह्निमण्डलाय । ईशान्ये - श्रीं सत्वाय । आग्नेय्यां - क्लीं रजसे । पश्चिमे - ह्रीं तमसे । पूर्वाद्यष्टदलेषु - इन्दिरायै । रमायै । लक्ष्म्यै । हिरण्यायै । गगनायै । रक्तायै । रक्ततरायै । भूत्यै । कर्णिकायां- ॐ विभूत्यै नमः । समष्टि- ॐ श्रीं ह्रीं क्लीं ऐं पराशक्त्यै नारायणाङ्कस्थायै योगपद्मासनायै नमः

**आवरणमन्त्राः :** परितः पूर्वादिदिक्षु क्रमेण - ॐ श्रियै नमः । लक्ष्म्यै । मायै । इन्दिरायै । आग्नेयादिविदिक्षु - ॐ रमायै नमः (इति प्रथमावरणम्)

परितः पूर्वादिदिक्षु क्रमेण - ॐ मायायै नमः । जयायै । कृत्यै । ॐ शान्त्यै नमः (इति द्वितीयावरणम्)

तद्बहिः मेषादिराशिदिक्षु क्रमेण - ॐ श्रियै नमः । लक्ष्म्यै । कमलायै । पद्मायै । पद्मिन्यै । कमलालयायै । रमायै । वृषाकप्यै । धन्यायै । वृद्ध्यै । यज्ञायै । ॐ इन्दिरायै नमः (इति तृतीयावरणम्)

तद्बहिः मेषादिराशिदिक्षु क्रमेण - ॐ वेदायै नमः । वेदवत्यै । धात्र्यै । महालक्ष्म्यै । सुखालयायै । हरिण्यै । सीतायै । रुग्मिण्यै । रेवत्यै । प्रभायै । अनन्तायै । ॐ विश्वरूपायै नमः (इति चतुर्थावरणम्)

तद्बहिः पूर्वादिदिक्षु क्रमेण - ॐ अनन्ताय नमः । ब्रह्मणे । वायवे । ईशानाय । अग्रे - गरुडाय । आग्नेयादिविदिक्षु - वारुण्यै । गायत्र्यै । भारत्यै । गिरिजायै । गरुडस्य वामे - ॐ सौपर्ण्यै नमः (इति पञ्चमावरणम्)

पूर्वाद्यष्टदिक्षु क्रमेण - ॐ इन्द्राय सुराधिपतये शचीसहिताय वज्रहस्ताय सपरिग्रहाय लक्ष्मीनारायणपार्षदाय नमः । अग्नये तेजोधिपतये स्वाहासहिताय शक्तिधराय सपरिग्रहाय लक्ष्मीनारायणपार्षदाय नमः । यमाय धर्माधिपतये श्यामलासहिताय दण्डहस्ताय सपरिग्रहाय लक्ष्मीनारायण पार्षदाय नमः । निर्ऋतये रक्षोधिपतये कालिकासहिताय खड्गहस्ताय सपरिग्रहाय लक्ष्मीनारायणपार्षदाय नमः । वरुणाय जलाधिपतये गङ्गासहिताय पाशधराय सपरिग्रहाय लक्ष्मीनारायणपार्षदाय नमः । वायवे प्राणाधिपतये भारतीसहिताय गदाहस्ताय सपरिग्रहाय लक्ष्मीनारायणपार्षदाय नमः । सोमाय नक्षत्राधिपतये रोहिणीसहिताय कुमुदहस्ताय सपरिग्रहाय लक्ष्मीनारायण पार्षदाय नमः । ईशानाय विद्याधिपतये गिरिजासहिताय शूलधराय सपरिग्रहाय लक्ष्मीनारायणपार्षदाय नमः । नैर्ऋत्यपश्चिमयोर्मध्ये - अनन्ताय नागाधिपतये वारुणीसहिताय हलायुधहस्ताय सपरिग्रहाय लक्ष्मीनारायणपार्षदाय नमः ।

ईशान्यपूर्वयोर्मध्ये - ब्रह्मणे लोकाधिपतये ब्रह्माणीसहिताय पद्महस्ताय सपरिग्रहाय लक्ष्मीनारायणपार्षदाय नमः (इति षष्ठावरणम्)

अस्त्रमन्त्रः - सुदर्शनास्त्रम्

वाहनमन्त्रः - गरुडमन्त्रम्

द्वारपालदेवतामन्त्राः - ॐ चण्ड्यै नमः । ॐ प्रचण्ड्यै नमः
ॐ सावित्र्यै नमः । ॐ वाग्देव्यै नमः

निर्माल्यधारिमन्त्रः - सुमुखीं स्थापयेद्विष्वक्सेनस्थाने चतुर्भुजाम् ।
वेत्रहस्तां दक्षिणेन तर्जनीं चापि कुर्वतीम् ॥
अपराभ्यां धारयन्तीं पद्मं पीतनिभं तथा ।

मन्त्रः - ॐ सुमुख्यै नमः

## ॥ दुर्गामन्त्र सङ्ग्रह ॥

मूलमन्त्रः - ब्रह्मा ऋषिः । गायत्री छन्दः । दुर्गा देवता

ॐ दुः हृदयाय नमः । दुं शिरसे स्वाहा । गाँ शिखायै वषट् । यैं कवचाय हुम् । नं नेत्रत्रयाय वौषट् । मःअस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ दुः नमः (पादयोः) । दुं (हृदि) । गाँ (शिरसि) । यैं (नाभौ) । नं (मुखे) । मः (ललाटे)

ध्यानम् - ध्यायेद्दुर्गां त्रिनयनां चक्रशङ्खविधारिणीम् ।
शूलतर्जनसंयुक्तां पीताम्बरविभूषिताम् ॥
तेजोमयीं दुरितघ्नां श्यामाङ्गीं सिंहवाहिनीम् ।
विष्णुप्रियां महामायां नारायणीं नमाम्यहम् ॥

मन्त्रः - ॐ दुः दुर्गायै नमः

उपचारमन्त्रः - ॐ ह्रीं श्रीं क्लीं दुर्गायै स्वाहा

वेदोक्तमन्त्रः - जातवेदसे इति कश्यप दुर्गात्रिष्टुप् ।

ॐ ॐ जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥

गायत्री - ॐ कात्यायनाय विद्महे कन्याकुमारि धीमहि ।
तन्नो दुर्गा प्रचोदयात् ॥

पीठमन्त्राः : वामे - ॐ श्रीगुरुभ्यो नमः । दक्षिणे - सर्वदेवताभ्यो । पनर्वामे-सर्वगुरुभ्यो । पीठोर्ध्वभागे आग्नेय्यां - धर्माय । नैर्ऋत्ये - ज्ञानाय । वायव्ये - वैराग्याय । ऐशान्ये - ऐश्वर्याय । पीठस्य पूर्वगात्रे - अधर्माय । दक्षिणगात्रे - अज्ञानाय । पश्चिमगात्रे - अवैराग्याय । उत्तरगात्रे - अनैश्वर्याय । पीठस्य अधोभागे(आधारपीठे) - परमपुरुषाय । तदुपरि(निधिकुम्भे)- आधारशक्त्यै । तदुपरि (शिलाकूर्मे) - कूर्माय । तदुपरि (योगनाले) - अनन्ताय । तदुपरि (ब्रह्मशिलायां) - पृथिव्यै । पीठमध्ये - पं पद्माय । कर्णिकायां पूर्वे - हं अर्कमण्डलाय । नैऋत्ये - सं सोममण्डलाय । वायव्ये - रं वह्निमण्डलाय । ईशान्ये - श्रीं सत्वाय । आग्नेय्यां - क्लीं रजसे । पश्चिमे - ह्रीं तमसे । पूर्वाद्यष्टदलेषु क्रमेण - आं प्रभायै । ईं मायायै । ऊं जयायै । एं सूक्ष्मायै । ऐं विशुद्धायै । ओं नन्दिन्यै । औं सुप्रभायै । अं विजयायै । कर्णिकायां - ॐ अः सर्वसिद्धिदायै नमः । मध्ये - ॐ वज्रनखदंष्ट्रायुधाय महासिंहाय हूं नमः
समष्टि - ॐ ह्रीं दुर्गायै योगपद्मपीठात्मिकायै नमः

आवरणमन्त्राः : परितः पूर्वादिदिक्षु क्रमेण - ॐ पुष्टै नमः । तुष्ट्यै । सृष्टै । प्रीत्यै । आग्नेयादिविदिक्षु - शङ्खाय । चक्राय । धनुषे । ॐ शूलाय नमः (इति प्रथमावरणम्) । ॐ दुः हृदयाय नमः । दुं शिरसे स्वाहा । र्गां शिखायै वषट् । यैं कवचाय हुम् । अग्रे - नं नेत्रत्रयाय वौषट् । आग्नेयादिविदिक्षु - मः अस्त्राय फट् (इति द्वितीयावरणम्)

तद्बहिः पूर्वाद्यष्टदिक्षु क्रमेण - ॐ जयायै नमः । विजयायै । कीर्त्यै । प्रीत्यै । प्रभायै । श्रद्धायै । मेधायै । ॐ श्रुत्यै नमः (इति तृतीयावरणम्)

तद्बहिः पूर्वाद्यष्टदिक्षु - ॐ ब्राह्म्यै नमः । माहेश्वर्यै । कौमार्यै । वैष्णव्यै । वाराह्यै । नारसिंह्यै । ऐन्द्रै । ॐ चामुण्डायै नमः (इति चतुर्थावरणम्)

पूर्वाद्यष्टदिक्षु क्रमेण - ॐ इन्द्राय सुराधिपतये शचीसहिताय वज्रहस्ताय सपरिग्रहाय दुर्गापार्षदाय नमः । अग्नये तेजोधिपतये स्वाहासहिताय शक्तिधराय सपरिग्रहाय दुर्गापार्षदाय नमः । यमाय धर्माधिपतये श्यामलासहिताय दण्डहस्ताय सपरिग्रहाय दुर्गापार्षदाय नमः । निर्ऋतये रक्षोधिपतये कालिकासहिताय खड्गहस्ताय सपरिग्रहाय दुर्गापार्षदाय नमः । वरुणाय जलाधिपतये गङ्गासहिताय पाशधराय सपरिग्रहाय दुर्गापार्षदाय नमः । वायवे प्राणाधिपतये भारातीसहिताय गदाहस्ताय सपरिग्रहाय दुर्गापार्षदाय नमः । सोमाय नक्षत्राधिपतये रोहिणीसहिताय कुमुदहस्ताय सपरिग्रहाय दुर्गा पार्षदाय नमः । ईशानाय विद्याधिपतये गिरिजासहिताय शूलधराय सपरिग्रहाय दुर्गापार्षदाय नमः । नैर्ऋत्यपश्चिमयोर्मध्ये - अनन्ताय नागाधिपतये वारुणीसहिताय हलायुधहस्ताय सपरिग्रहाय दुर्गापार्षदाय नमः । ईशान्यपूर्वयोर्मध्ये - ब्रह्मणे लोकाधिपतये ब्रह्माणीसहिताय पद्महस्ताय सपरिग्रहाय दुर्गापार्षदाय नमः

अस्त्रमन्त्रः - सुदर्शनास्त्रम्

वाहनमन्त्रः - ॐ वज्रनखदंष्ट्रायुधाय महासिंहाय हुं नमः
ॐ वज्रनखाय विद्महे तीक्ष्णदंष्ट्राय धीमहि । तन्नः सिंहः प्रचोदयात् ॥

द्वारपालदेवतामन्त्राः - ॐ जयायै नमः । ॐ विजयायै नमः
ॐ चण्डिकायै । ॐ अम्बिकायै नमः

निर्माल्यधारिमन्त्रः - अभयं पानपात्रं च दधतीं करपङ्कजैः ।
मुण्डिनीमम्बुजसंस्थां तुङ्गकुचद्वयान्विताम् ॥

मन्त्रः - ॐ क्लीं मुण्डिन्यै नमः

## ॥ ब्रह्ममन्त्र सङ्ग्रह ॥

**मूलमन्त्रः** - भृगु ऋषिः । गायत्री छन्दः । ब्रह्मा देवता

ॐ ब्रह्मणे हृदयाय नमः । धात्रे शिरसे स्वाहा । विरिञ्चाय शिखायै वषट् । अजाय कवचाय हुम् । पद्माय अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ हिं नमः (पादयोः) । रं (हृदि) । ण्यं (शिरसि) । गं (नाभौ) । र्भा (मुखे) । यं (ललाटे) । नं (नासिकायां) । मः (नेत्रयोः)

ध्यानम् - ध्यायेन्निषण्णमजमच्युतनाभिपद्मे ।
प्रोद्यद्दिवाकरसमूहनिकाशमग्र्यम् ॥
मातृप्रकारकरमुत्तमकान्तिमद्भिः ।
वक्त्रैः सृजन्तमखिलैः परमार्थविद्याम् ॥

मन्त्रः - ॐ हिरण्यगर्भाय नमः

**उपचारमन्त्रः** - ॐ हंसात्मको यो अपामग्नेस्तेजसा दीप्यमानः ।
स नो मृत्योस्त्रायत नमो ब्रह्मणे विश्वनाभिः ॥

**वेदोक्तमन्त्रः** - ब्रह्मणाते गाधिनो विश्वामित्रो ब्रह्मा त्रिष्टुप् ।

ॐ ब्रह्मणा ते ब्रह्मयुजा युनज्मि हरी सखाया सधमाद आशू ।
स्थिरं रथं सुखमिन्द्राधितिष्ठन्प्रजानन्विद्वाँ उप याहि सोमम् ॥

**गायत्री** - ॐ वेदात्मनाय विद्महे हिरण्यगर्भाय धीमहि ।
तन्नो ब्रह्मा प्रचोदयात् ॥

**पीठमन्त्राः** : वामे - ॐ श्रीगुरुभ्यो नमः । दक्षिणे - महागणपतये । पीठस्य अधोभागे(आधारपीठे)- परमपुरुषाय । तदुपरि(निधिकुम्भे) - आधारशक्त्यै । तदुपरि (शिलाकूर्मे) - कूर्माय । तदुपरि (योगनाले) - अनन्ताय । तदुपरि (ब्रह्मशिलायां) - पृथिव्यै । पीठाधोभागे आग्नेयादि विदिक्षु - ऋग्वेदाय । यजुर्वेदाय । सामवेदाय । अथर्ववेदाय । पीठोर्ध्वभागे ईशानादि विदिक्षु -

शिक्षाय । कल्पाय । व्याकरणाय । निरुक्ताय । पूर्वादि दिक्षु - छन्दोभ्यो । ज्योतिषे । उपवेदाय । इतिहासपुराणाभ्यां । पीठोर्ध्वभागे आग्नेय्यां - धर्माय । नैर्ऋत्ये - ज्ञानाय । वायव्ये - वैराग्याय । ऐशान्ये - ऐश्वर्याय । पीठस्य पूर्वगात्रे- अधर्माय । दक्षिणगात्रे - अज्ञानाय । पश्चिमगात्रे - अवैराग्याय । उत्तरगात्रे - अनैश्वर्याय । पीठमध्ये - क्षीरसागराय । अनन्ताय । विष्णवे । पं पद्माय । कर्णिकायां नैऋत्ये - सरस्वत्यै । वायव्ये - सावित्रै । पूर्वे - गायत्रै । ईशान्ये - भूः वह्निमण्डलाय । आग्नेय्यां - भुवः सोममण्डलाय । पश्चिमे - सुवः सूर्यमण्डलाय । पूर्वाद्यष्टदलेषु क्रमेण - सृष्ट्यै । ऋद्ध्यै । स्मृत्यै । मेधायै । कान्त्यै । द्युत्यै । प्रज्ञायै । धारणायै । कर्णिकायां - ॐ सिद्ध्यै नमः

समष्टि - ॐ नमो ब्रह्मणे जगत्कारणपद्मासनाय नमः

आवरणमन्त्राः : वामे - ॐ सरस्वत्यै नमः । दक्षे - ॐ सावित्र्यै नमः (इति प्रथमावरणम् ) । परितः पूर्वादिदिक्षु क्रमेण - ॐ ब्रह्मणे नमः । धात्रे । विरिञ्चाय । अजाय । आग्नेयादिविदिक्षु - ॐ पाद्माय नमः (इति द्वितीयावरणम्) तद्बहिः पूर्वाद्यष्टदिक्षुक्रमेण - ॐ चतुर्मुखाय नमः । धात्रे । विधात्रे । विधये । कर्त्रे । विरिञ्चये । भूतेशाय । शतानन्दाय नमः (इति तृतीयावरणम्)

पूर्वाद्यष्टदिक्षु - ॐ कपिलाय नमः । रुद्राय । मनवे । भृगवे । नारदाय । काश्यपाय । कामाय । ॐ प्राणाय नमः (इति चतुर्थावरणम्)

परितः पूर्वादिदिक्षु क्रमेण - ॐ सनकाय नमः - सनन्दनाय (द्वौ पूर्वे) । सनातनाय (दक्षिणे) । सनत्कुमाराय (पश्चिमे) । सनत्सुजाताय (उत्तरे) । आग्नेयादिविदिक्षु - विद्यायै । ज्ञानायै । क्षमायै । शमायै नमः (इति पञ्चमावरणम्) तद्बहिः पूर्वाद्यष्टदिक्षु क्रमेण - ॐ मरीचये नमः । वसिष्ठाय । अङ्गिरसे । अत्रये । पुलस्त्याय । क्रतवे । दक्षाय । ॐ मित्राय नमः (इति षष्ठावरणम्)

पूर्वाद्यष्टदिक्षु क्रमेण - ॐ इन्द्राय सुराधिपतये शचीसहिताय वज्रहस्ताय सपरिग्रहाय नमः । अग्नये तेजोधिपतये स्वाहासहिताय शक्तिधराय सपरिग्रहाय नमः । यमाय धर्माधिपतये श्यामला सहिताय दण्डहस्ताय सपरिग्रहाय नमः । निर्ऋतये रक्षोधिपतये कालिकासहिताय खड्गहस्ताय सपरिग्रहाय नमः । वरुणाय जलाधिपतये गङ्गासहिताय पाशधराय सपरिग्रहाय नमः । वायवे प्राणाधिपतये भारतीसहिताय गदाहस्ताय सपरिग्रहाय नमः । सोमाय नक्षत्राधिपतये रोहिणी सहिताय कुमुदहस्ताय सपरिग्रहाय नमः । ईशानाय विद्याधिपतये गिरिजासहिताय शूलधराय सपरिग्रहाय नमः । नैर्ऋत्य पश्चिमयोर्मध्ये - अनन्ताय नागाधिपतये वारुणीसहिताय हलायुधहस्ताय सपरिग्रहाय नमः । ईशान्यपूर्वयोर्मध्ये - ब्रह्मणे लोकाधिपतये ब्रह्माणीसहिताय पद्महस्ताय सपरिग्रहाय नमः (इति सप्तमावरणम् )

**अस्त्रमन्त्रः** - प्रजापति ऋषिः । गायत्री छन्दः । ब्रह्मा देवता

**ध्यानम्** - चतुर्मुखं वेदगर्भममरारिविनाशनम् ।
मुञ्जमेखलदण्डाक्षस्रुवदर्भकृताजिनम् ॥

**मन्त्रः** - ॐ ॐ ब्रह्मास्त्राय फट्

**वाहनमन्त्रः** - ॐ हंसाय नमः

**द्वारपालदेवतामन्त्राः** - ॐ सत्याय नमः । ॐ धर्माय नमः
ॐ धात्रे नमः । ॐ विधात्रे नमः

**निर्माल्यधारिमन्त्रः** - ॐ मरीचये नमः

## ॥ सरस्वतीमन्त्र सङ्ग्रह ॥

**मूलमन्त्रः** - दीर्घतमा ऋषिः । पङ्क्तिश्छन्दः । सरस्वतिर्देवना

ॐ ब्रं हृदयाय नमः । ह्यां शिरसे स्वाहा । ण्यैं शिखायै वषट् । नं कवचाय हुम् । मः अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ब्रं नमः (पादयोः) । ह्मां (हृदि) । ण्यैं (शिरसि) । नं (नाभौ) । मः (मुखे)

ध्यानम् - उद्यद्दिवाकरसमूहनिभां स्वभर्तुरङ्कस्थितामभयसद्वरबाहुयुग्माम् ।
मुद्रां च तत्वदृशये वरपुस्तकं च दोर्युग्मकेन दधतीं स्मरताऽत्मविद्याम् ॥

मन्त्रः - ॐ ब्रह्माण्यै नमः

उपचारमन्त्रः - ॐ ऐं सरस्वत्यै ऐं नमः

वेदोक्तमन्त्रः - यस्ते स्तनः इति दीर्घतमा सरस्वतिस्त्रिष्टुप् ।

ॐ यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि ।
यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवे कः ॥

गायत्री - ॐ सरस्वत्यै च विद्महे ब्रह्मपत्न्यै च धीमहि ।
तन्नो वाणी प्रचोदयात् ॥

पीठमन्त्राः : वामे - ॐ श्रीगुरुभ्यो नमः । दक्षिणे - महागणपतये । पीठस्य अधोभागे(आधारपीठे)- परमपुरुषाय । तदुपरि(निधिकुम्भे) - आधारशक्त्यै । तदुपरि (शिलाकूर्मे) - कूर्माय । तदुपरि (योगनाले) - अनन्ताय । तदुपरि (ब्रह्मशिलायां) - पृथिव्यै । पीठोर्ध्वभागे आग्नेय्यां - धर्माय । नैर्ऋत्ये - ज्ञानाय । वायव्ये - वैराग्याय । ऐशान्ये - ऐश्वर्याय । पीठस्य पूर्वगात्रे - अधर्माय । दक्षिणगात्रे - अज्ञानाय । पश्चिमगात्रे - अवैराग्याय । उत्तरगात्रे - अनैश्वर्याय । पीठमध्ये - वर्णाब्जाय । कर्णिकायां नैऋत्ये - सरस्वत्यै । वायव्ये - सावित्रै । पूर्वे - गायत्रै । ईशान्ये - हं सूर्यमण्डलाय । आग्नेय्यां - सं सोममण्डलाय । पश्चिमे - रं वह्निमण्डलाय । पूर्वाद्यष्टदलेषु क्रमेण - मेधायै । प्रज्ञायै । प्रभायै । विद्यायै । धियै । धृत्यै । स्मृत्यै । बुद्ध्यै । कर्णिकायां - ॐ विद्येश्वर्यै नमः

समष्टि - ॐ ह्रीं ऐं वर्णाब्जाय सरस्वत्यासनाय नमः

**आवरणमन्त्राः** - परितः पूर्वादिदिक्षु क्रमेण - ॐ ब्रं हृदयाय नमः । ह्मां शिरसे स्वाहा । ण्यैं शिखायै वषट् । नं कवचाय हुम् । आग्नेयादिविदिक्षु - मः अस्त्राय फट् (इति प्रथमावरणम्)

तद्बहिः पूर्वाद्यष्टदिक्षु क्रमेण - ॐ योगायै नमः । सत्यायै । विमलायै । ज्ञानायै । बुद्ध्यै । स्मृत्यै । मेधायै । ॐ प्रज्ञायै नमः (इति द्वितीयावरणम्)

पूर्वादिदिक्षु क्रमेण - ॐ कपिलाय नमः । रुद्राय । मनवे । भृगवे । नारदाय । काश्यपाय । क्रतवे । ॐ दक्षाय नमः (इति तृतीयावरणम्)

पूर्वादिदिक्षु क्रमेण - ॐ सनकाय नमः - सनन्दनाय । सनातनाय । सनत्कुमाराय । सनत्सुजाताय । आग्नेयादिविदिक्षु - विद्यायै । ज्ञानायै । क्षमायै । ॐ शमायै नमः(इति चतुर्थावरणम्)

तद्बहिः - ॐ इन्द्राय नमः । अग्नये । यमाय । निर्ऋतये । वरुणाय । वायवे । सोमाय । ॐ ईशानाय नमः (इति पञ्चमावरणम्)

**अस्त्रमन्त्रः** - कण्व ऋषिः । गायत्री छन्दः । वागीश्वरी देवता

ध्यानम् - रक्ताकल्पां रक्तवर्णां पद्मासनां त्रिलोचनाम् ।
वामहस्तेषु च वरं विद्यां पाशं च धारिणीम् ॥
अभयं लेखनीं चैव दक्षहस्तेषु चाङ्कुशम् ।

मन्त्रः - ॐ सरस्वत्यस्त्राय फट्

**वाहनमन्त्रः** - ॐ हंसाय नमः

**द्वारपालदेवतामन्त्राः** - ॐ मेधायै नमः । ॐ प्रज्ञायै नमः

**निर्माल्यधारिमन्त्रः** - ॐ मत्यै नमः

## ॥ हनुमन्मन्त्र सङ्ग्रह ॥

**मूलमन्त्रः** - सदाशिव ऋषिः । गायत्री छन्दः । हनुमद्देवता

ॐ रां हृदयाय नमः । रामदूताय शिरसे स्वाहा । स्वाहा शिखायै वषट् । रां कवचाय हुम् । रामदूताय नेत्राभ्यां वौषट् । स्वाहा अस्त्राय फट्

**मन्त्राक्षरन्यासः - ॐ रां नमः (पादयोः) । रां (हृदि) । मं (शिरसि) । दूं (नाभौ) । तां (मुखे) । यं (ललाटे) । स्वां (नासिकायां) । हां (नेत्रयोः)**

**ध्यानम् - ध्यायेद्बालदिवाकरद्युतिनिभं देवारिदर्पापहम् ।**
**देवेन्द्रप्रमुखप्रशस्तयशसं देदीप्यमानं रुचा ॥**
**सुग्रीवादिसमस्तवानरयुतं सुव्यक्ततत्वप्रियम् ।**
**संरक्तारुणलोचनं पवनजं पीताम्बरालङ्कृतम् ॥**

**[श्यामं वर्णसुवर्णकुण्डलधरं कौपीनमौञ्जीधरं**
**पुच्छं श्रोणिधरं त्रिशूलवदनं यज्ञोपवीतान्वितम् ।**
**ऊर्ध्वं दक्षिणमुद्धृताभयकरं वामे करे पङ्कजं**
**मृत्युं रावणराक्षसस्य नितरां प्राणं भजेत्सन्ततम् ॥**
**चन्द्राभं चरणारविन्दवदनं कौपीनमौञ्जीधरं**
**बालं श्रोणिधरं त्रिशूलवदनं यज्ञोपवीतान्वितम् ।**
**हस्ताभ्यामवलम्ब्य साञ्जलिपुटं हारावलीकुण्डलं**
**पश्चाल्लम्बशिखःप्रसन्नवदनं श्रीप्राणदेवं भजेत् ॥]**

**मन्त्रः - ॐ रां रामदूताय स्वाहा**

**उपचारमन्त्रः - ॐ नमस्ते रामदूताय कपिवर्याय धीमते ।**
**हेमकूटनिवासाय नमः सागरलङ्घिने ॥**

**वेदोक्तमन्त्रः - बळित्था तद्वपुषे इति भृगु ऋषिः । जगती छन्दः । हनुमद्देवता**
**ॐ बळित्था तद्वपुषे धायि दर्शतं देवस्य भर्गः सहसो यतो जनि ।**
**यदीमुप ह्वरते साधते मतिर्ऋतस्य धेना अनयन्त सस्रुतः ॥**

**गायत्री - ॐ आञ्जनेयाय विद्महे रामदूताय धीमहि ।**
**तन्नो वेगी प्रचोदयात् ॥**

**पीठमन्त्राः : वामे - ॐ श्रीगुरुभ्यो नमः । दक्षिणे - महागणपतये । पीठस्य अधोभागे(आधारपीठे) - परमपुरुषाय । तदुपरि(निधिकुम्भे)- आधारशक्त्यै । तदुपरि (शिलाकूर्मे) - कूर्माय । तदुपरि (योगनाले) - अनन्ताय । तदुपरि**

(ब्रह्मशिलायां) - पृथिव्यै । पीठोर्ध्वभागे आग्नेय्यां - धर्माय । नैर्ऋत्ये - ज्ञानाय । वायव्ये - वैराग्याय । ऐशान्ये - ऐश्वर्याय । पीठस्य पूर्वगात्रे - अधर्माय । दक्षिणगात्रे - अज्ञानाय । पश्चिमगात्रे - अवैराग्याय । उत्तरगात्रे - अनैश्वर्याय । पीठमध्ये - पं पद्माय । कर्णिकायां ईशान्ये - हं सूर्यमण्डलाय । आग्नेय्यां - सं सोममण्डलाय । पश्चिमे - रं वह्निमण्डलाय । पूर्वाद्यष्टदलेषु क्रमेण - ज्ञानायै । वैराग्यायै । प्रज्ञायै । मेधायै । धृत्यै । स्थित्यै । योगायै । बलायै । कर्णिकायां - ॐ प्राणायै नमः

समष्टि - ॐ हं हनुमते योगपद्मपीठात्मने नमः

आवरणमन्त्राः : परितः पूर्वादिदिक्षु क्रमेण - ॐ रां हृदयाय नमः । रामदूताय शिरसे स्वाहा । स्वाहा शिखायै वषट् । रां कवचाय हुम् । अग्रे - रामदूताय नेत्राभ्यां वौषट् । आग्नेयादिविदिक्षु - स्वाहा अस्त्राय फट् (इति प्रथमावरणम्)

तद्बहिः पूर्वाद्यष्टदिक्षु क्रमेण - ॐ रामभक्ताय नमः । महातेजसे । कपीश्वराय । महाबलाय । द्रोणाद्रिहारकाय । मेरुपीठार्चन- कारकाय । दक्षिणभास्कराय । विघ्नविनाशिने नमः (इति द्वितीयावरणम्)

तद्बहिः पूर्वाद्यष्टदिक्षु - ॐ सुग्रीवाय नमः । अङ्गदाय । नीलाय । जाम्बवते । नलाय । सुषेणाय । द्विविदाय । ॐ मयन्दाय नमः (इति तृतीयावरणम्)

तद्बहिः इन्द्रादिभिः चतुर्थावरणम्

अस्त्रमन्त्रः - वसिष्ठ ऋषिः । गायत्री छन्दः । वायुर्देवता

वायुर्भीमो भीमनादो महौजाः सर्वेषां च प्राणिनां प्राणभूतः ।
अनावृत्तिर्देहिनां देहपाते तस्माद्वायुर्देवदेवो विशिष्टः ।

मन्त्रः - ॐ वायव्यया या हुं फट्

वाहनमन्त्रः - ॐ अनिवेगाय नमः

द्वारपालदेवतामन्त्राः - ॐ वज्रदन्ताय नमः । ॐ शान्ताय नमः
ॐ सुगन्धाय नमः । ॐ सुमन्ताय नमः

**निर्माल्यधारिमन्त्रः - ॐ पिशङ्गिने नमः**

## ॥ शिवमन्त्र सङ्ग्रह ॥

**मूलमन्त्रः - वामदेव ऋषिः । पङ्क्तिश्छन्दः । सदाशिवरुद्रो देवता**

**ॐ नं हृदयाय नमः । मं शिरसे स्वाहा । शिं शिखायै वषट् । वां कवचाय हुम् । यं अस्त्राय फट्**

**मन्त्राक्षरन्यासः - ॐ नं ईशानाय नमः (पादयोः) । मं तत्पुरुषाय (हृदि) । शिं अघोराय (शिरसि) । वां वामदेवाय (नाभौ) । यं सद्योजाताय (मुखे)**

**ध्यानम् - ध्येयः पञ्चमुखो रुद्रः स्फटिकामलकान्तिमान् ।**
विद्युच्छुभ्रासितरजः श्यामान्यस्य मुखानि तु ॥
जटावबद्धेन्दुकलः प्रियायुङ् नागभूषणः ।

**मन्त्रः - ॐ नमः शिवाय**

**उपचारमन्त्रः - ॐ हां हैं शिवाय नमः**

**वेदोक्तमन्त्रः - अघोरःकाण्वो रुद्रो गायत्री ।**

ॐ कद्रुद्राय प्रचेतसे मीळ्हुष्टमाय तव्यसे । वोचेम शन्तमं हृदे ॥

**गायत्री - ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥**

**पीठमन्त्राः :** वामे - ॐ श्रीगुरुभ्यो नमः । दक्षिणे - महागणपतये । पीठस्य अधोभागे(आधारपीठे)- परमपुरुषाय । तदुपरि(निधिकुम्भे) - आधारशक्त्यै । तदुपरि (शिलाकूर्मे) - कूर्माय । तदुपरि (योगनाले) - अनन्ताय । तदुपरि (ब्रह्मशिलायां) - पृथिव्यै । पीठोर्ध्वभागे आग्नेय्यां - धर्माय । नैर्ऋत्ये - ज़ानाय । वायव्ये - वैराग्याय । ऐशान्ये - ऐश्वर्याय । पीठस्य पूर्वगात्रे - अधर्माय । दक्षिणगात्रे - अज्ञानाय । पश्चिमगात्रे - अवैराग्याय । उत्तरगात्रे - अनैश्वर्याय । पीठमध्ये- कैलासगिरये । रत्नमण्डपाय । सिंहासनाय । पं पद्माय । कर्णिकायां ईशान्ये-हं सूर्यमण्डलाय । आग्नेय्यां- सं सोममण्डलाय ।

पश्चिमे - रं वह्निमण्डलाय । पूर्वाद्यष्टदलेषु क्रमेण - वामायै । ज्येष्ठायै । रौद्र्यै । काल्यै । कलविकलिन्यै । बलविकलिन्यै । बलप्रमथिन्यै । सर्वभूतदमन्यै । कर्णिकायां - ॐ मनोन्मन्यै नमः

समष्टि - ॐ हां शिवासनाय नमः

आवरणमन्त्राः : पूर्वादिक्रमेण - ॐ तत्पुरुषाय नमः । अघोराय । सद्योजाताय । वामदेवाय । मध्ये - ॐ ईशानाय नमः (इति पञ्चवक्त्रान् पूजयेत्) । सदाशिवाङ्के - ॐ पार्वत्यै नमः (इति प्रथमावरणम्)

पूर्वादिदिक्षु क्रमेण - ॐ नं हृदयाय नमः । मं शिरसे स्वाहा । शिं शिखायै वषट् । वां कवचाय हुम् । आग्नेयादिविदिक्षु - यं अस्त्राय फट् (इति द्वितीयावरणम्) । पूर्वाद्यष्टदिक्षु - रुद्राय । सर्वाय । पशुपतये । उग्राय । अशन्ये । भवाय । महादेवाय । ॐ ईशानाय नमः (इति तृतीयावरणम्)

तद्बहिः पूर्वाद्यष्टदिक्षु - ॐ अनन्ताय नमः । सूक्ष्माय । शिवोत्तमाय । एकनेत्राय । एकरुद्राय । त्रिमूर्तये । श्रीकण्ठाय । ॐ शिखण्डिने नमः (इति चतुर्थावरणम्) । तद्बहिः पूर्वाद्यष्टदिक्षु क्रमेण - ॐ मालिन्यै नमः । निष्ठुरायै । पद्मायै । कालकण्ठै । मुकुलायै । शशिकन्यायै । ध्वजायै । ॐ अञ्जल्यै नमः (इति पञ्चमावरणम्) । पूर्वाद्यष्टदिक्षु क्रमेण - ॐ विनायकाय नमः । स्कन्दाय । नन्दिने । भृङ्गीशाय । वीरभद्राय । वृषभाय । चण्डेश्वराय । ॐ महाकालाय नमः (इति षष्ठावरणम्)

तद्बहिः - ॐ इन्द्राय नमः । अग्नये । यमाय । निर्ऋतये । वरुणाय । वायवे । सोमाय । ॐ ईशानाय नमः (इति सप्तमावरणम्)

अस्त्रमन्त्रः - अघोर ऋषिः । त्रिष्टुप् छन्दः । पशुपतिरुद्रो देवता

ॐ ॐ हृदयाय नमः । श्लीं शिरसे स्वाहा । पं शिखायै वषट् । शुं कवचाय हुम् । हुं नेत्रत्रयाय वौषट् । फट् अस्त्राय फट्

ध्यानम् - मध्याह्नार्कसमप्रभं शशिधरं भीमाट्टहासोज्ज्वलम् ।

त्र्यक्षं पन्नगभूषणं शिखिशिखाश्मश्रुस्फुरन्मूर्धजम् ॥
हस्ताब्जैस्त्रिशिखं समद्गरमसिं शक्तिं दधानं विभुम् ।
दंष्ट्राभीमचतुर्मुखं पशुपतिं दिव्यास्त्ररूपं स्मरेत् ॥

मन्त्रः - ॐ श्लीं पशु हुं फट्

**वाहनमन्त्रः** - सुचारुकर्णलाङ्गूलशृङ्गाङ्घ्र्युदरदृङ्मुखम् ।
ककुद्मन्तं वृषं श्वेतं नौमि शङ्करवाहनम् ॥

मन्त्रः - ॐ वृं वृषभाय नमः

ॐ चतुष्पादाय विद्महे दीर्घशृङ्गाय धीमहि । तन्नो वृषः प्रचोदयात् ॥

**द्वारपालदेवतामन्त्राः** - ॐ नन्दिने नमः । ॐ महाकालाय नमः
ॐ शूलपाणये नमः । ॐ परशुपाणये नमः

**निर्माल्यधारिमन्त्रः** - वैयाघ्रवसनस्त्र्यक्षः शूलदण्डकुटारभृत् ।
वराभयकरश्चण्डः चन्द्रखण्डाहिभूषितः ॥

मन्त्रः - ॐ चण्डेश्वराय नमः

## ॥ पार्वतीमन्त्र सङ्ग्रह ॥

**मूलमन्त्रः** - वामदेव ऋषिः । पङ्क्तिश्छन्दः । पार्वतिर्देवता

ॐ नं हृदयाय नमः । मं शिरसे स्वाहा । शिं शिखायै वषट् । वां कवचाय हुम् । यैं अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ नं नमः (पादयोः) । मं (हृदि) । शिं (शिरसि) । वां (नाभौ) । यैं (मुखे)

ध्यानम् - ध्यायेद्गौरवर्णां शिवां स्फुरन्मुकुटधारिणीम् ।
वरदाभयधरीं त्वां शिवार्धांगीं मनोन्मयीम् ॥
हिमाचलेन्द्रतनयां पीताम्बरविभूषिताम् ।
गणेशस्कन्दजननीं पार्वतीं प्रणमाम्यहम् ॥

मन्त्रः - ॐ नमः शिवायै

**उपचारमन्त्रः** - ॐ ह्रीं साः महागौरि रुद्रदयिते स्वाहा

**वेदोक्तमन्त्रः** - गौरीर्मिमाय औचथ्यो दीर्घतमा उमा जगती ।

ॐ गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।

अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥

**गायत्री** - ॐ गिरिजायै च विद्महे शिवपत्न्यै च धीमहि ।

तन्नो गौरी प्रचोदयात् ॥

**पीठमन्त्राः** : वामे - ॐ श्रीगुरुभ्यो नमः । दक्षिणे - महागणपतये । पीठस्य अधोभागे(आधारपीठे)- परमपुरुषाय । तदुपरि(निधिकुम्भे) - आधारशक्त्यै । तदुपरि (शिलाकूर्मे) - कूर्माय । तदुपरि (योगनाले) - अनन्ताय । तदुपरि (ब्रह्मशिलायां) - पृथिव्यै । पीठोर्ध्वभागे आग्नेय्यां - धर्माय । नैर्ऋत्ये - ज्ञानाय । वायव्ये - वैराग्याय । ऐशान्ये - ऐश्वर्याय । पीठस्य पूर्वगात्रे - अधर्माय । दक्षिणगात्रे - अज्ञानाय । पश्चिमगात्रे - अवैराग्याय । उत्तरगात्रे - अनैश्वर्याय । पीठमध्ये - कैलासगिरये । रत्नमण्डपाय । सिंहासनाय । पं पद्माय । कर्णिकायां ईशान्ये-हं सूर्यमण्डलाय । आग्नेय्यां- सं सोममण्डलाय । पश्चिमे- रं वह्निमण्डलाय । पूर्वाद्यष्टदलेषु क्रमेण - ॐ वाच्यै नमः । रागिण्यै । ज्वालिन्यै । शमायै । ज्येष्ठायै । बुद्ध्यै । इच्छायै । ज्ञानायै । कर्णिकायां - ॐ क्रियायै नमः

समष्टि - ॐ ह्रौं रौं क्रौं नवशक्तिमयाय गौर्यासनाय नमः

**आवरणमन्त्राः** : दक्षे - ॐ विनायकाय नमः । वामे - ॐ स्कन्दाय नमः (इति प्रथमावरणम्) । पूर्वादिदिक्षु क्रमेण - ॐ नं हृदयाय नमः । मं शिरसे स्वाहा । शिं शिखायै वषट् । वां कवचाय हुम् । आग्नेयादिविदिक्षु - यैं अस्त्राय फट् (इति द्वितीयावरणम्)

पूर्वाद्यष्टदिक्षु क्रमेण - ॐ उमायै नमः । गौर्यै । शिवायै । रुद्राण्यै । भवान्यै । गिरिजायै । शर्वाण्यै । ॐ मात्रे नमः (इति तृतीयावरणम्)

पूर्वादिदिक्षु - ॐ सुभगायै नमः । ललितायै । कामिन्यै । ॐ कामशालिन्यै नमः (इति चतुर्थावरणम्)

तद्बहिः - ॐ इन्द्राय नमः । अग्नये । यमाय । निर्ऋतये । वरुणाय । वायवे । सोमाय । ॐ अशन्यै नमः (इति पञ्चमावरणम् )

अस्त्रमन्त्रः - शक्ति ऋषिः । गायत्री छन्दः । रुद्राण्युमा देवता

ध्यानम् - चतुर्हस्तां शूलटङ्कवराभयसमन्विताम् ।
पीनोत्तुङ्गस्तनां देवीं श्यामलां सत्रिलोचनाम् ॥
बद्धचण्डातकां रौद्रां सर्वासुरभयङ्करीम् ।
पिङ्गोर्ध्वकेशां नानाहिभूषणां सौम्यभीषणाम् ॥

मन्त्रः - ॐ उमास्त्राय फट्

वाहनमन्त्रः - ॐ वृं वृषभाय नमः

द्वारपालदेवतामन्त्राः - ॐ जयायै नमः । ॐ विजयायै नमः
ॐ पालिन्यै नमः । ॐ प्लाविन्यै नमः

निर्माल्यधारिमन्त्रः - ॐ सुभगायै नमः

## ॥ शेषमन्त्र सङ्ग्रह ॥

मूलमन्त्रः - सनत्कुमार ऋषिः । गायत्री छन्दः । शेषो देवता

ॐ शें हृदयाय नमः । शें शिरसे स्वाहा । षां शिखायै वषट् । यं कवचाय हुम् । नं नेत्राभ्यां वौषट् । मः अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ शें नमः (पादयोः) । शें (हृदि) । षां (शिरसि) । यं (नाभौ) । नं (मुखे) । मः (ललाटे)

ध्यानम् - दधानो हलसौनन्दौ श्वेतवर्णः कृताञ्जलिः ।
सहस्रमूर्ध्नाऽद्वितीयकर्णभूषः प्रियायुतः ।
वनमाली नीलवासा ध्येयो विष्णोस्तु पृष्ठतः ॥

मन्त्रः - ॐ शें शेषाय नमः

**उपचारमन्त्रः** - ॐ रसातळगतः श्रीमदनन्तो भगवान्प्रभुः ।
जगद्धारयते योऽसौ तस्मै शेषात्मने नमः ॥

**वेदोक्तमन्त्रः** - नमो अस्तु सर्पेभ्यो इति अरो नाम ऋषिः । पङ्क्तिश्छन्दः । अनन्तो देवता

ॐ नमो॑ अस्तु स॒र्पेभ्यो॒ ये के च॑ पृथि॒वीमनु॑ ।
ये अ॒न्तरि॑क्षे॒ ये दि॒वि तेभ्यः॑ स॒र्पेभ्यो॒ नमः॑ ॥

**गायत्री** - ॐ तत्पुरुषाय विद्महे विष्णुतल्पाय धीमहि ।
तन्नः शेषः प्रचोदयात् ॥

**पीठमन्त्राः** : वामे - ॐ श्रीगुरुभ्यो नमः । दक्षिणे - महागणपतये । पीठस्य अधोभागे(आधारपीठे)- परमपुरुषाय । तदुपरि(निधिकुम्भे) - आधारशक्त्यै । तदुपरि (शिलाकूर्मे) - कूर्माय । तदुपरि (योगनाले) - अनन्ताय । तदुपरि (ब्रह्मशिलायां) - पृथिव्यै । पीठोर्ध्वभागे आग्नेय्यां - धर्माय । नैर्ऋत्ये - ज्ञानाय । वायव्ये - वैराग्याय । ऐशान्ये - ऐश्वर्याय । पीठस्य पूर्वगात्रे - अधर्माय । दक्षिणगात्रे - अज्ञानाय । पश्चिमगात्रे - अवैराग्याय । उत्तरगात्रे - अनैश्वर्याय । पीठमध्ये - क्षीरसागराय । पं पद्माय । कर्णिकायां ईशान्ये - हं सूर्यमण्डलाय । आग्नेय्यां - सं सोममण्डलाय । पश्चिमे - रं वह्निमण्डलाय । पूर्वाद्यष्टदलेषु क्रमेण - शेषाय । अनन्ताय । नराय । लक्ष्मणाय । बलाय । सङ्कर्षणाय । नीलवाससे । जगद्रक्षाय । कर्णिकायां - ॐ जलेशयाय नमः
समष्टि - ॐ श्रीमदनन्ताय योगपद्मपीठात्मने नमः

**आवरणमन्त्राः** : शेषस्य वामे - ॐ वारुण्यै नमः (इति प्रथमावरणम्)
पूर्वादिदिक्षु क्रमेण - ॐ शें हृदयाय नमः । शें शिरसे स्वाहा । षां शिखायै वषट् । यं कवचाय हुम् । अग्रे - नं नेत्राभ्यां वौषट् । आग्नेयादिविदिक्षु - ॐ मः अस्त्राय फट् (इति द्वितीयावरणम्)

पूर्वाद्यष्टदिक्षु क्रमेण - ॐ अनन्ताय नमः । नराय । लक्ष्मणाय । बलाय । सङ्कर्षणाय । नीलवाससे । जगद्रक्षाय । ॐ जलेशयाय नमः (इति तृतीयावरणम्) । तद्बहिः पूर्वाद्यष्टदिक्षु क्रमेण - ॐ शें शेषाय नमः । वां वासुकये । तं तक्षकाय । कं कार्कोटकाय । पं पद्माय । मं महापद्माय । शं शङ्खपालाय । ॐ कुं कुलिकाय नमः (इति चतुर्थावरणम्)

तद्बहिः पूर्वाद्यष्टदिक्षु क्रमेण - ॐ शेषकुलनागेभ्यो नमः । वासुकीकुल-नागेभ्यो । कार्कोटककुलनागेभ्यो । पद्मकुलनागेभ्यो । महापद्मकुलनागेभ्यो । शङ्खपालकुलनागेभ्यो । ॐकुलिककुलनागेभ्यो नमः (इति पञ्चमावरणम्)

तद्बहिः - ॐ इन्द्राय नमः । अग्नये । यमाय । निर्ऋतये । वरुणाय । वायवे । सोमाय । ॐ ईशानाय नमः (इति षष्ठावरणम्)

अस्त्रमन्त्रः - सुदर्शनास्त्रम्

वाहनमन्त्रः - ॐ कूर्माय नमः

द्वारपालदेवतामन्त्राः - ॐ नीलाय नमः । ॐ अनीलाय नमः

निर्माल्यधारिमन्त्रः - ॐ पुष्पदंष्ट्राय नमः

## ॥ गरुडमन्त्र सङ्ग्रह ॥

मूलमन्त्रः - काश्यप ऋषिः । पङ्क्तिश्छन्दः । गरुडो देवता

ॐ क्षिं हृदयाय नमः । पं शिरसे स्वाहा । ॐ शिखायै वषट् । स्वां कवचाय हुम् । हां अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ क्षिं नमः (पादयोः) । पं (हृदि) । ॐ (शिरसि) । स्वां (नाभौ) । हां (मुखे)

ध्यानम् - गरुडः सर्वदा ध्येयः सुधापूर्णं हिरण्मयम् ।
दधानः कुम्भमभयं पीतः शुक्लारुणो हरिः ॥
कृष्णश्चा जानुतो नाभेः कण्ठात् कादन्त एव च ।
प्रियायुङ् पुरतो विष्णोः पक्षतुण्डसमन्वितः ॥

जङ्गमस्थावरविषहृदयं सर्वकामदः ।

**मन्त्रः** - ॐ क्षिप ॐ स्वाहा

**उपचारमन्त्रः** - ॐ नमस्ते पक्षिराजाय वेदपक्षयुग प्रभो ।
वैनतेय नमस्तेऽस्तु गरुडाय नमो नमः ॥

**वेदोक्तमन्त्रः** - त्यमूषु इति ताक्ष्योऽरिष्टनेमिः गरुडस्त्रिष्टुप् ।
ॐ त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् ।
अरिष्टनेमिं पृतनाजमाशुं स्वस्तये ताक्ष्यमिहा हुवेम ॥

**गायत्री** - ॐ तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि ।
तन्नो गरुडः प्रचोदयात् ॥

**पीठमन्त्राः :** वामे - ॐ श्रीगुरुभ्यो नमः । दक्षिणे - महागणपतये । पीठस्य अधोभागे(आधारपीठे)- परमपुरुषाय । तदुपरि(निधिकुम्भे) - आधारशक्त्यै । तदुपरि (शिलाकूर्मे) - कूर्माय । तदुपरि (योगनाले) - अनन्ताय । तदुपरि (ब्रह्मशिलायां) - पृथिव्यै । पीठोर्ध्वभागे आग्नेय्यां - धर्माय । नैर्ऋत्ये - ज्ञानाय । वायव्ये - वैराग्याय । ऐशान्ये - ऐश्वर्याय । पीठस्य पूर्वगात्रे - अधर्माय । दक्षिणगात्रे - अज्ञानाय । पश्चिमगात्रे - अवैराग्याय । उत्तरगात्रे - अनैश्वर्याय । पीठमध्ये - क्षीरसागराय । श्वेतद्वीपाय । पं पद्माय । कर्णिकायां ईशान्ये - हं सूर्यमण्डलाय । आग्नेय्यां - सं सोममण्डलाय । पश्चिमे - रं वह्निमण्डलाय । पूर्वाद्यष्टदलेषु- सुपर्णाय । गरुडाय । वैनतेयाय । महाशनाय । नववर्णाय । पञ्चवर्णाय । पन्नगाशाय । अमृताकराय । कर्णिकायां - सर्ववेदात्मने । समष्टि - ॐ कं खं गं घं ङं वैनतेयाय योगपद्मपीठात्मने नमः

**आवरणमन्त्राः :** वामे - ॐ सुपर्ण्यै नमः (इति प्रथमावरणम्)

पूर्वादिदिक्षु क्रमेण - ॐ क्षिं हृदयाय नमः । पं शिरसे स्वाहा । ॐ शिखायै वषट् । स्वां कवचाय हुम् । आग्नेयादिविदिक्षु - हां अस्त्राय फट् (इति द्वितीयावरणम्) । पूर्वादिदिक्षु क्रमेण - ॐ सुपर्णाय नमः । वैनतेयाय ।

महाशनाय । नववर्णाय । पञ्चवर्णाय । पन्नगाशाय । अमृताकराय । सर्ववेदात्मने नमः (इति तृतीयावरणम्)

तद्बहिः पूर्वे - ॐ सुमुखाय नमः । नैर्ऋत्ये - सुवर्णाय । वायव्ये - सुबलाय । पश्चिमे - सुनामाय । ऐशान्ये - सुनेत्राय । आग्नेय्यां - ॐ सुवर्चसे नमः (इति चतुर्थावरणम्) । तद्बहिः - ॐ इन्द्राय नमः । अग्नये । यमाय । निर्ऋतये । वरुणाय । वायवे । सोमाय । ॐ ईशानाय नमः (इति पञ्चमावरणम्)

अस्त्रमन्त्रः - सुदर्शनास्त्रम्

वाहनमन्त्राः - ॐ रुद्राय नमः । ॐ सुकीर्त्यै नमः

द्वारपालदेवतामन्त्राः - ॐ सुमुखाय नमः । ॐ पूर्णाय नमः

निर्माल्यधारिमन्त्रः - ॐ तार्क्ष्यदासाय नमः

## ॥ काममन्त्र सङ्ग्रह ॥

मूलमन्त्रः - संवनन ऋषिः । गायत्री छन्दः । कामो देवता

ॐ क्लीं हृदयाय नमः । कां शिरसे स्वाहा । मां शिखायै वषट् । यं कवचाय हुम् । नं नेत्राभ्यां वौषट् । मः अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ क्लीं नमः (पादयोः) । कां (हृदि) । मां (शिरसि) । यं (नाभौ) । नं (मुखे) । मः (ललाटे)

ध्यानम् - कामं रक्तनिभं रक्तप्रसवाम्बरधारिणम् ।
हस्ताभ्यामैक्षवं चापं बिभ्राणं सुमनःशरान् ॥

मन्त्रः - ॐ क्लीं कामाय नमः

उपचारमन्त्रः - ॐ ॐ नमः पञ्चबाणाय जगदाह्लादकारिणे ।
मन्मथाय जगन्नेत्रे रतिप्रीतिप्रियाय च ॥
पुण्डरीकाक्षपुत्राय नमस्ते मीनकेतवे ।

वेदोक्तमन्त्रः - अरं कामाय इति आङ्गिरसो बरुः कामो जगती ।
ॐ अरं कामाय हरयो दधन्विरे स्थिराय हिन्वन्हरयो हरी तुरा ।

अर्वद्भिर्यो हरिभिर्जोषमीयते सो अस्य कामं हरिवन्तमानशे ॥

**गायत्री** - ॐ मनोभवाय विद्महे पञ्चबाणाय धीमहि ।

तन्नो कामः प्रचोदयात् ॥

**पीठमन्त्राः :** वामे - ॐ श्रीगुरुभ्यो नमः । दक्षिणे - महागणपतये । पीठस्य अधोभागे(आधारपीठे)- परमपुरुषाय । तदुपरि(निधिकुम्भे) - आधारशक्त्यै । तदुपरि (शिलाकूर्मे) - कूर्माय । तदुपरि (योगनाले) - अनन्ताय । तदुपरि (ब्रह्मशिलायां) - पृथिव्यै । पीठोर्ध्वभागे आग्नेय्यां - धर्माय । नैर्ऋत्ये - ज्ञानाय । वायव्ये - वैराग्याय । ऐशान्ये - ऐश्वर्याय । पीठस्य पूर्वगात्रे - अधर्माय । दक्षिणगात्रे - अज्ञानाय । पश्चिमगात्रे - अवैराग्याय । उत्तरगात्रे - अनैश्वर्याय । पीठमध्ये - पं पद्माय । कर्णिकायां ईशान्ये - हं सूर्यमण्डलाय । आग्नेय्यां - सं सोममण्डलाय । पश्चिमे - रं वह्निमण्डलाय । पूर्वाद्यष्टदलेषु क्रमेण - मोहिन्यै । क्षोभिण्यै । त्रास्यै । स्तम्भिन्यै । कार्षिण्यै । द्राविण्यै । आह्लादिन्यै । क्लिन्नायै । कर्णिकायां - ॐ क्लेदिन्यै नमः

समष्टि - ॐ क्लीं सर्वकामदाय योगपद्मासनाय नमः

**आवरणमन्त्राः :** पूर्वादिदिक्षु - ॐ वसन्ताय नमः । मदाय । रागाय । सोमाय । आग्नेयादिविदिक्षु - रत्यै । वारुण्यै । उषायै । मकराय नमः (इति प्रथमावरणम्) । पूर्वादिदिक्षु क्रमेण - ॐ क्लीं हृदयाय नमः । कां शिरसे स्वाहा । मां शिखायै वषट् । यं कवचाय हुम् । अग्रे - नं नेत्राभ्यां वौषट् । आग्नेयादिविदिक्षु - मः अस्त्राय फट् (इति द्वितीयावरणम्)

पूर्वाद्यष्टदिक्षु - ॐ तापिन्यै नमः । मोहिन्यै । मर्दन्यै । प्रमाथिन्यै । आग्नेयादिविदिक्षु - ॐ हरिण्यै नमः (इति तृतीयावरणम्)

पूर्वाद्यष्टदिक्षु क्रमेण - ॐ कामाय नमः । भस्मशरीराय । अनङ्गाय । मन्मथाय । वसन्तसखाय । स्मराय । इक्षुधनुर्धराय । ॐ पुष्पबाणाय नमः

**(इति चतुर्थावरणम्) । तद्बहिः - ॐ इन्द्राय नमः । अग्नये । यमाय । निर्ऋतये । वरुणाय । वायवे । सोमाय । पुष्पाङ्गाय (इति पञ्चमावरणम्)**

**अस्त्रमन्त्रः - सुदर्शनास्त्रम्**

**वाहनमन्त्रः - ॐ शुकाय नमः**

**द्वारपालदेवतामन्त्राः - ॐ शोषणाय नमः । ॐ मोहनाय नमः**

**निर्माल्यधारिमन्त्रः - ॐ पुष्पाङ्गाय नमः**

## ॥ स्कन्दमन्त्र सङ्ग्रह ॥

**मूलमन्त्रः - कौशिक ऋषिः । गायत्री छन्दः । स्कन्दो देवता**

**ॐ रं हृदयाय नमः । स्कं शिरसे स्वाहा । दां शिखायै वषट् । यं कवचाय हुम् । नं नेत्राभ्यां वौषट् । मः अस्त्राय फट्**

**मन्त्राक्षरन्यासः - ॐ रं नमः (पादयोः) । स्कं (हृदि) । दां (शिरसि) । यं (नाभौ) । नं (मुखे) । मः (ललाटे)**

**ध्यानम् -** षडाननं वह्निवर्णं तेजोपूर्णं शिवात्मजम् ।
शक्तिचापधरं स्कन्दं कामदं भयनाशनम् ॥
मयूरवाहनं देवं पीतवस्त्रसुशोभितम् ।
देवसेनापतिं वन्दे तारकासुरमर्दनम् ॥

**मन्त्रः - ॐ रं स्कन्दाय नमः**

**उपचारमन्त्रः -** ॐ वं वरदसेनान्ये बाहुलेयवचद्भुवे
स्कन्द स्कन्दसुब्रह्मण्याय नमः

**वेदोक्तमन्त्रः -** कुमारं माता स्कन्दः स्कन्दस्त्रिष्टुप् ।
ॐ कुमारं माता युवतिः समुब्धं गुहां बिभर्ति न ददाति पित्रे ।
अनीकमस्य न मिनज्जनासः पुरः पश्यन्ति निहितमरतौ ॥

**गायत्री -** ॐ कार्तिकेयाय विद्महे शक्तिहस्ताय धीमहि ।

तन्नः स्कन्दः प्रचोदयात् ॥

**पीठमन्त्राः :** वामे - ॐ श्रीगुरुभ्यो नमः । दक्षिणे - महागणपतये । पीठस्य अधोभागे(आधारपीठे)- परमपुरुषाय । तदुपरि(निधिकुम्भे) - आधारशक्त्यै । तदुपरि (शिलाकूर्मे) - कूर्माय । तदुपरि (योगनाले) - अनन्ताय । तदुपरि (ब्रह्मशिलायां) - पृथिव्यै । पीठोर्ध्वभागे आग्नेय्यां - धर्माय । नैर्ऋत्ये - ज्ञानाय । वायव्ये - वैराग्याय । ऐशान्ये - ऐश्वर्याय । पीठस्य पूर्वगात्रे - अधर्माय । दक्षिणगात्रे - अज्ञानाय । पश्चिमगात्रे - अवैराग्याय । उत्तरगात्रे - अनैश्वर्याय । पीठमध्ये - सिंहासनाय । तन्मध्ये - षड्दलपद्माय । पूर्वादि षड्दलेषु - कन्दाय । बीजाङ्कुराय । नाळाय । दळाय । केसरकर्णिकायै । बीजाय । मध्ये - पं पद्माय । कर्णिकायां ईशान्ये - हं सूर्यमण्डलाय । आग्नेय्यां- सं सोममण्डलाय । पश्चिमे - रं वह्निमण्डलाय । पूर्वाद्यष्टदलेषु - शं शकुन्यै । रं रेवत्यै । पं पूतायै । मं महापूतायै । नं निशीथिन्यै । मं मालिन्यै । शं श्यामलायै । बं बुद्ध्यै । कर्णिकायां - ॐ वं विश्वतोमुख्यै नमः

समष्टि - ॐ रं नवशक्तियुक्त मयूरकमलासनाय नमः

**आवरणमन्त्राः :** पूर्वादिदिक्षु - ॐ देवसेनायै नमः । विद्यायै । मेधायै । प्रज्ञायै । आग्नेयादिविदिक्षु - ॐ शक्तये नमः । कुक्कुटाय । मयूराय । ॐ गजाय नमः (इति प्रथमावरणम्)

पूर्वादिदिक्षु क्रमेण - ॐ रं हृदयाय नमः । स्कं शिरसे स्वाहा । दां शिखायै वषट् । यं कवचाय हुम् । अग्रे - नं नेत्राभ्यां वौषट् । आग्नेयादिविदिक्षु - मः अस्त्राय फट् (इति द्वितीयावरणम्)

पूर्वाद्यष्टदिक्षु क्रमेण - ॐ कार्तिकेयाय नमः । विशाखाय । गुहाय । असुरान्तकाय । सेनान्ये । षण्मुखाय । मयूरवाहनाय । ॐ शक्तिपाणये नमः (इति तृतीयावरणम्)

पूर्वादिदिक्षु - ॐ इन्द्राय नमः । अग्नये । यमाय । निऋतये । वरुणाय । वायवे । सोमाय । ॐ सुमित्राय नमः (इति चतुर्थावरणम्)

अस्त्रमन्त्रः - वैश्वानर ऋषिः । गायत्री छन्दः । ज्वालामालिनी देवता

ॐ ज्वां हृदयाय नमः । लां शिरसे स्वाहा । मां शिखायै वषट् । लिं कवचाय हुम् । नि नेत्रत्रयाय वौषट् । हुं अस्त्राय फट्

ध्यानम् - ज्वलज्ज्वलनसङ्काशां माणिक्यमुकुटोज्वलाम् ।
षड्वक्त्रां द्वादशभुजां सर्वाभरणभूषिताम् ॥
पाशाङ्कुशौ खेटखड्गौ चापबाणौ गदादरौ ।
शूलवह्नी वराभीती दधानां करपङ्कजैः ॥
स्वसमानाभिरभितः शक्तिभिः परिवारिता ।
चारुस्मितलसद्वक्त्रसरोजां त्रीक्षणान्विताम् ॥

मन्त्रः - ॐ ज्वालामालिनि हुम्

वाहनमन्त्रः - चित्रवर्णं सुरारिघ्नं भुजगोद्धृतवक्त्रकम् ।
महाबलं महाकायं मयूरं प्रणमाम्यहम् ॥

मन्त्रः - ॐ म्रीं मयूराय नमः

द्वारपालदेवतामन्त्राः - ॐ सुदेहाय नमः । ॐ सुमुखाय नमः
ॐ शक्तिपाणये नमः । ॐ वज्रपाणये नमः

निर्माल्यधारिमन्त्रः - द्विनेत्रं द्विभुजं रक्तं सुवक्त्रं च सुयौवनम् ।
दक्षिणे शक्तिहस्तं च वामं च कटिबन्धनम् ॥
अलकं ज्योतिसंयुक्तं दंष्ट्रिणं रुचिराननम् ।
करण्डमुकुटं वाऽपि जटामुकुटमेव वा ॥
हस्तौ मुकुलवद्बद्धौ दक्षिणं शक्तिसंयुतम् ।
सर्वाभरणसंयुक्तमासनस्थानकं तु वा ॥
यज्ञोपवीतसंयुक्तं पद्मपीठोपरिस्थितम् ।

मन्त्रः - ॐ सुं सुमित्राय नमः

## ॥ सूर्यमन्त्र सङ्ग्रहः ॥

**मूलमन्त्रः** - कौशिक ऋषिः । गायत्री छन्दः । सूर्यो देवता

ॐ घृणिः हृदयाय नमः । सूर्यः शिरसे स्वाहा । आदित्यः शिखायै वषट् । आदित्यः कवचाय हुम् । सूर्यः नेत्राभ्यां वौषट् । घृणि अस्त्राय फट्

**मन्त्राक्षरन्यासः** - ॐ ॐ नमः (पादयोः) । घृं (हृदि) । णिः (शिरसि) । सूं (नाभौ) । र्यं (मुखे) । आं (ललाटे) । दिं (नासिकायां) । त्यः (नेत्रयोः)

**ध्यानम्** - आदित्यं पद्मनयनं पद्मद्वयधरं रविम् ।
पद्ममित्रं महातेजं सर्वालङ्कारभूषितम् ॥
अरुणाङ्गं काश्यपेयं सप्ताश्वरथवाहनम् ।
दिवाकरं जगत्पालं भास्करं प्रणमाम्यहम् ॥
[मार्ताण्डं द्विभुजं रक्तं रक्ताम्बरधरं स्थितम् ।
पृष्ठभागे शिरश्चक्रं स्थाने विपुलमण्डलम् ॥
बिभ्राणं कमलद्वन्द्वं हस्ताभ्यां च किरीटिनम् ।
उरः प्रदेशे विपुले स्यमन्तकमहामणिम् ॥
आसीनं वा सुखं बिम्बे पद्मेऽष्टदलसंयुते ।]

**मन्त्रः** - ॐ ॐ घृणिः सूर्य आदित्यः

**उपचारमन्त्रः** - ॐ हं खषोल्काय स्वाहा

**वेदोक्तमन्त्रः** - सप्तत्वा इति काण्वःप्रस्कण्वः सूर्यो गायत्री ।
ॐ सप्त त्वा॑ ह॒रितो॒ रथे॑ वह॑न्ति देव सूर्य । शो॒चिष्के॑शं विचक्षण ॥

**गायत्री** - ॐ प्रभाकराय विद्महे दिवाकराय धीमहि ।
तन्नः सूर्यः प्रचोदयात् ॥

**पीठमन्त्राः** : वामे - ॐ श्रीगुरुभ्यो नमः । दक्षिणे - महागणपतये । पीठस्य अधोभागे(आधारपीठे) - परमपुरुषाय । तदुपरि(निधिकुम्भे)- आधारशक्त्यै । तदुपरि (शिलाकूर्मे) - कूर्माय । तदुपरि(योगनाले) - अनन्ताय । तदुपरि

(ब्रह्मशिलायां) - पृथिव्यै । पीठोर्ध्वभागे आग्नेय्यां - धर्माय । नैर्ऋत्ये - ज्ञानाय । वायव्ये - वैराग्याय । ऐशान्ये - ऐश्वर्याय । पीठस्य पूर्वगात्रे - अधर्माय । दक्षिणगात्रे - अज्ञानाय । पश्चिमगात्रे - अवैराग्याय । उत्तरगात्रे - अनैश्वर्याय । पीठमध्ये - पं पद्माय । पीठोर्ध्वभागे आग्नेय्यां - प्रभूताय । नैर्ऋत्ये- विमलाय । वायव्ये - साराय । ऐशान्ये - समाराध्याय । मध्ये - परमसुखाय । कर्णिकायां ईशान्ये - हं सूर्यमण्डलाय । आग्नेय्यां - सं सोममण्डलाय । पश्चिमे- रं वह्निमण्डलाय । पूर्वाद्यष्टदलेषु क्रमेण - रां दीप्तायै । रीं सूक्ष्मायै । रूं जयायै । रें भद्रायै । रैं विभूत्यै । रों विमलायै । रौं अमोघायै । रं विद्युतायै । कर्णिकायां - ॐ रः सर्वतोमुख्यै नमः । समष्टि - ॐ अं अर्कासनाय नमः

आवरणमन्त्राः : ॐ राज्ञै नमः । ॐ निक्षुभायै नमः (इति प्रथमावरणम्)

पूर्वादिदिक्षु क्रमेण - ॐ घृणिः हृदयाय नमः । सूर्यः शिरसे स्वाहा । आदित्यः शिखायै वषट् । आदित्यः कवचाय हुम् । अग्रे - सूर्यः नेत्राभ्यां वौषट् । आग्नेयादिविदिक्षु - घृणि अस्त्राय फट् (इति द्वितीयावरणम्)

तद्बहिः पूर्वादिदिक्षु क्रमेण - ॐ आदित्याय नमः । रवये । भानवे । भास्कराय । आग्नेयादिविदिक्षु - उषायै । प्रज्ञायै । प्रभायै । ॐ सन्ध्यायै नमः (इति तृतीयावरणम्) । पूर्वाद्यष्टदिक्षु क्रमेण - ॐ सहस्रकिरणाय नमः । आदित्याय । रवये । भास्कराय । प्रभाकराय । दिवाकराय । अंशवे । ॐ भानवे नमः (इति चतुर्थावरणम्) । पूर्वे - बृहस्पतये । दक्षिणे - शुक्राय । पश्चिमे - शनैश्चराय । उत्तरे - सोमाय । आग्नेय्यां - अङ्गारकाय । नैर्ऋते - बुधाय । वायव्ये- राहवे । ऐशान्ये - केतवे नमः (इति पञ्चमावरणम्)

अस्त्रमन्त्रः - देवभाग ऋषिः । गायत्री छन्दः । सूर्यो देवता

ॐ मं हृदयाय नमः । हों शिरसे स्वाहा । ज्वं शिखायै वषट् । लं कवचाय हुम् । हुं नेत्रत्रयाय वौषट् । फट् अस्त्राय फट्

ध्यानम् - रक्तं रक्तविभूषणं त्रिनयनं देवारिविध्वंसनम् ।

शत्रूणां भयदं रणे विजयदं केयूरहारान्वितम् ॥
खड्गं खेटमहाभयं वरकरैः पद्मं दधानं रविम् ।
सोमादिग्रहसंयुतं दिनकरं मध्याह्नसूर्यं भजे ॥

**मन्त्रः** - ॐ महोज्वल हुं फट्

**वाहनमन्त्रः** - अरुणं पीतवस्त्रं च दीप्तकुण्डलधारिणम् ।
रक्तहस्ताङ्घ्रिनेत्रं च कवचेनोपशोभितम् ॥
रथस्थाने समासीनं कुर्यात् सिंहासनेऽपि वा ।
शुक्लो जयन्तो विजयो नैकवर्णो हुताशनः ॥
हुतार्चिर्व्यापकश्चैव अश्वाः सप्त प्रकीर्तिताः ।

**मन्त्राः** - ॐ अरुणाय नमः । ॐ सप्ताश्वाय नमः

**द्वारपालदेवतामन्त्राः** - ॐ दण्डिने नमः । ॐ पिङ्गलाय नमः
ॐ उग्राय नमः । ॐ प्रशान्ताय नमः

**निर्माल्यधारिमन्त्रः** - यजेत् त्रिनेत्रं पिङ्गाक्षं रक्तं रक्ताम्बरादिकम् ।
तेजश्चण्डो महावक्त्रो द्विभुजः पद्मखड्गभृत् ॥

**मन्त्रः** - ॐ अं तेजश्चण्डाय नमः

## ॥ गणपतिमन्त्र सङ्ग्रह ॥

**मूलमन्त्रः** - कौशिक ऋषिः । गायत्री छन्दः । गणपतिर्देवता
ॐ क्षिप्रप्रसादाय हृदयाय नमः । नमः शिरसे स्वाहा । क्षिप्रप्रसादाय शिखायै वषट् । नमः कवचाय हुम् । क्षिप्रप्रसादाय नेत्राभ्यां वौषट् । नमः अस्त्राय फट्

**मन्त्राक्षरन्यासः** - ॐ क्षिं नमः (पादयोः) । प्रं (हृदि) । प्रं (शिरसि) । सां (नाभौ) । दां (मुखे) । यं (ललाटे) । नं (नासिकायां) । मः (नेत्रयोः)

**ध्यानम्** - रक्ताम्बरो रक्ततनुः रक्तमाल्यानुलेपनः ।
महोदरो गजमुखः पाशदन्ताङ्कुशाभये ॥
बिभ्रद्ध्येयो विघ्नहरः कामदस्त्वरया ह्ययम् ।

**मन्त्रः - ॐ क्षिप्रप्रसादाय नमः**

**उपचारमन्त्रः - ॐ श्रीं ह्रीं क्लीं गणेशाय ब्रह्मरूपाय चारवे ।**
**सर्वसिद्धिप्रदेशाय विघ्नेशाय नमो नमः ॥**

**वेदोक्तमन्त्रः - आ तू न इति काण्वः कुसीदी गणपतिर्गायत्री ।**
**ॐ आ तू नं इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय । महाहस्ती दक्षिणेन ॥**

**गायत्री - ॐ एकदन्ताय विद्महे वक्रतुण्डाय धीमहि ।**
**तन्नो दन्ती प्रचोदयात् ॥**

**पीठमन्त्राः : वामे - ॐ श्रीगुरुभ्यो नमः । दक्षिणे - महागणपतये । पीठस्य अधोभागे(आधारपीठे)- परमपुरुषाय । तदुपरि(निधिकुम्भे) - आधारशक्त्यै । तदुपरि (शिलाकूर्मे) - कूर्माय । तदुपरि (योगनाले) - अनन्ताय । तदुपरि (ब्रह्मशिलायां) - पृथिव्यै । पीठोर्ध्वभागे आग्नेय्यां - धर्माय । नैरृत्ये - ज्ञानाय । वायव्ये - वैराग्याय । ऐशान्ये - ऐश्वर्याय । पीठस्य पूर्वगात्रे - अधर्माय । दक्षिणगात्रे - अज्ञानाय । पश्चिमगात्रे - अवैराग्याय । उत्तरगात्रे - अनैश्वर्याय । पीठमध्ये - इक्षुसागराय । रत्नद्वीपाय । मणिमण्डपाय । रत्नसिंहासनाय । पं पद्माय । कर्णिकायां ईशान्ये - हं सूर्यमण्डलाय । आग्नेय्यां- सं सोममण्डलाय । पश्चिमे - रं वह्निमण्डलाय । पूर्वाद्यष्टदलेषु क्रमेण - तीव्रायै । ज्वालिन्यै । नन्दायै । भोगदायै । कामरूपिण्यै । उग्रायै । तेजोवत्यै । सत्यायै । कर्णिकायां - ॐ विघ्नविनाशिन्यै नमः**

**समष्टि - ॐ ह्रीं गं नवशक्तिमयकमलासनाय नमः**

**आवरणमन्त्राः : पूर्वादिदिक्षु क्रमेण - ॐ पुष्ट्यै नमः (इति प्रथमावरणम्) पूर्वादिदिक्षु क्रमेण - ॐ क्षिप्रप्रसादाय हृदयाय नमः । नमः शिरसे स्वाहा । क्षिप्रप्रसादाय शिखायै वषट् । नमः कवचाय हुम् । अग्रे - क्षिप्रप्रसादाय नेत्राभ्यां वौषट् । आग्नेयादिविदिक्षु - नमः अस्त्राय फट् (इति द्वितीयावरणम्)**

तद्बहिः पुर्वे-ॐ विघ्नाय नमः । विनायकाय । वीराय । शूराय । हस्तिमुखाय । एकदन्ताय । क्षिप्रप्रसादाय । ॐ गणेश्वराय नमः (इति तृतीयावरणम्) पूर्वादिदिक्षु क्रमेण - ॐ अमोदाय नमः । सिद्ध्यै । आग्नेय्याम् - प्रमोदाय । समृद्ध्यै । ऐशान्ये - सुमुखाय । कीर्त्यै । वारुणे - दुर्मुखाय । मदनावत्यै । नैर्ऋत्ये - विघ्नाय । मदद्रवायै । वायव्ये - विघ्नकर्ताराय । ॐ द्रविणायै नमः (इति चतुर्थावरणम्)

तद्बहिः - ॐ विश्वरूपाय नमः । विशालाक्षाय । अक्षयाय । मदविभ्रमाय । उन्मत्ताय । ललिताय । भीमाय । तीक्ष्णदंष्ट्राय नमः (इति पञ्चमावरणम्)

अस्त्रमन्त्रः - अङ्कुशास्त्रं गणेशस्युरस्त्रं स्त्रीविग्रहं यजेत् ।

मन्त्रः - ॐ ह्रीं अं अङ्कुश्यै हुं फट्

वाहनमन्त्रः - धूम्रवर्णस्तथा चाखू रक्तनेत्रसुदंष्ट्रवान् ।
तीक्ष्णपुच्छश्चतुष्पादः किङ्किणीदामभूषितः ॥

मन्त्रः - ॐ मूषकाय नमः

ॐ दीर्घवक्त्राय विद्महे ह्रस्वपादाय धीमही । तन्नो आखुः प्रचोदयात् ॥

द्वारपालदेवतामन्त्राः - ॐ अविघ्नाय नमः । ॐ विघ्नराजाय नमः
ॐ विकटाय नमः । ॐ भीमाय नमः

निर्माल्यधारिमन्त्रः - कुम्भोदरश्चतुर्हस्तष्टङ्कशूलासिदण्डधृक् ।
रक्तवर्णो महादीप्तो भद्रपीठोपरिस्थितः ॥

मन्त्रः - ॐ कुम्भोदराय नमः

## ॥ कुबेरमन्त्र सङ्ग्रह ॥

मुलमन्त्रः - विश्रवस ऋषिः । गायत्री छन्दः । धनदो देवता
ॐ भूं हृदयाय नमः । कुबेराय शिरसे स्वाहा । नमः शिखायै वषट् । भूं कवचाय हुम् । कुबेराय नेत्राभ्यां वौषट् । नमः अस्त्राय फट्
मन्त्राक्षरन्यासः - ॐ भूं नमः (पादयोः) । कुं (हृदि) । बें (शिरसि) । रां (नाभौ) । यं (मुखे) । नं (ललाटे) । मः (नासिकायां)

ध्यानम् - लम्बोदरं महाकायं धनदं यक्षपूजितम् ।
निष्टप्तकनकप्रख्यं वरदं दण्डिनं प्रभुम् ॥

मन्त्रः - ॐ भूं कुबेराय नमः

उपचारमन्त्रः - ॐ वैश्रवणाय धनधान्याधिपतये स्वाहा

वेदोक्तमन्त्रः - तस्याः कुबेरो इति अयर्वा कुबेरो बृहती ।
ॐ तस्याः कुबेरो वैश्रवणो वत्स आसीदामपात्रं पात्रम् ।
तां रजतनाभिः कबेरकोऽधोक् तां तिरोधामेवाधोक् ॥

गायत्री - ॐ धनाधिपाय विद्महे वैश्रवणाय धीमहि ।
तन्नः श्रीदः प्रचोदयात् ॥

पीठमन्त्राः : वामे - ॐ श्रीगुरुभ्यो नमः । दक्षिणे - महागणपतये । पीठस्य अधोभागे(आधारपीठे)- परमपुरुषाय । तदुपरि(निधिकुम्भे) - आधारशक्त्यै । तदुपरि (शिलाकूर्मे) - कूर्माय । तदुपरि (योगनाले) - अनन्ताय । तदुपरि (ब्रह्मशिलायां) - पृथिव्यै । पीठोर्ध्वभागे आग्नेय्यां - धर्माय । नैर्ऋत्ये - ज्ञानाय । वायव्ये - वैराग्याय । ऐशान्ये - ऐश्वर्याय । पीठस्य पूर्वगात्रे - अधर्माय । दक्षिणगात्रे - अज्ञानाय । पश्चिमगात्रे - अवैराग्याय । उत्तरगात्रे - अनैश्वर्याय । पीठमध्ये- नवरत्नमयपर्वताय । मणिमण्डपाय । रत्नसिंहासनाय । पं पद्माय । कर्णिकायां ईशान्ये - हं सूर्यमण्डलाय । आग्नेय्यां - सं सोममण्डलाय । पश्चिमे - रं वह्निमण्डलाय । पूर्वाद्यष्टदलेषु क्रमेण - लक्ष्म्यै नमः । शब्दनिध्यै । कामदायै । प्रीतिवर्धिन्यै । यशस्कर्यै । शान्तिदायै । पुष्ट्यै । तुष्ट्यै । कर्णिकायां - ॐ इष्टदायै नमः ।
समष्टि - ॐ वैश्रवणाय सकलसम्पत्प्रदाय योगपद्मपीठात्मने नमः

आवरणमन्त्राः : वामे - ॐ भद्रायै नमः (इति प्रथमावरणम्)

पूर्वादिदिक्षु क्रमेण - ॐ भूं हृदयाय नमः । कुबेराय शिरसे स्वाहा । नमः शिखायै वषट् । भूं कवचाय हुम् । अग्रे - कुबेराय नेत्राभ्यां वौषट् । आग्नेयादिविदिक्षु - नमः अस्त्राय फट् (इति द्वितीयावरणम्)

पूर्वाद्यष्टदिक्षु क्रमेण- ॐ वैश्रवणाय नमः । कुबेराय । धनदाय । महाबलाय । धनाधिपाय । पद्महस्ताय । दण्डधराय । यक्षाधिपाय नमः (इति तृतीयावरणम्)

पूर्वादिदिक्षु - ॐ जम्भलाय नमः । मणिभद्रकाय । नलकूबराय । शिबि-कुण्डलाय । अग्नेय्याम् - शङ्खनिधये । ऐशान्ये । पद्मनिधये नमः (इति चतुर्थावरणम्)

अस्त्रमन्त्रः - पाशुपतास्त्रम्

वाहनमन्त्रः - ॐ सार्वभौमाय नमः

द्वारपालदेवतामन्त्राः - ॐ हिरण्याक्षाय नमः । ॐ विरूपाक्षाय नमः

निर्माल्यधारिमन्त्रः - ॐ शुभ्राय नमः

## ॥ विष्णोः मन्त्रप्रभेदाः ॥

**प्रणवमन्त्रः** - अन्तर्यामी ऋषिः । दैवी गायत्री छन्दः । परमात्मा देवता

ॐ भूः हृदयाय नमः । भुवः शिरसे स्वाहा । स्वः शिखायै वषट् । भूर्भुवःस्वः कवचाय हुम् । सत्यं अस्त्राय फट्

**मन्त्राक्षरन्यासः** - ॐ अं विश्वाय नमः ॐ (नाभौ) । उं तेजसाय (हृदये) । ॐ मं प्राज्ञाय नमः ॐ (शिरसि)

**ध्यानम्** - उद्यद्भास्वत्समाभासश्चिदानन्दैकदेहवान् ।

चक्रशङ्खगदापद्मधरो ध्येयोऽहमीश्वरः ॥

लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः ।

ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ॥

सेव्यमानोऽधिकं भक्त्या नित्यनिश्शेषशक्तिमान् ।

मूर्तयोऽष्टावपि ध्येयाश्चक्रशङ्खवराभयैः ॥

युक्ताः प्रदीपवर्णाश्च सर्वाभरणभूषिताः ।

**मन्त्रः** - ॐ ॐ ॐ

**व्याहृतिमन्त्रः** - प्रजापति ऋषिः । दैवी गायत्री छन्दः । परमात्मा देवता

ॐ ॐ हृदयाय नमः । भूः शिरसे स्वाहा । भुवः शिखायै वषट् । स्वः कवचाय हुम् । भूर्भुवःस्वः अस्त्राय फट्

**मन्त्राक्षरन्यासः** - ॐ भूः अनिरुद्धाय नमः ॐ (नाभौ) । भुवः प्रद्युम्नाय (हृदये) । स्वः सङ्कर्षणाय (शिरसि) । ॐ भूर्भुवःस्वः वासुदेवाय नमः ॐ (सर्वाङ्गेषु)

**ध्यानम्** - उद्यदादित्यवर्णश्च ज्ञानमुद्राऽभयोद्यतः ।

लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः ॥

ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ।

सेव्यमानोऽधिकं भक्त्या नित्यनिश्शेषशक्तिमान् ॥

वासुदेवादिकाः शुक्लरक्तपीतासितोज्ज्वलाः ।

चक्रशङ्खगदाब्जेतः प्रथमो मुसली हली ॥

सचक्रशङ्खस्त्वपरस्तृतीयः शार्ङ्गबाणवान् ।

सशङ्खचक्रस्तुर्यस्तु चक्रशङ्खासिचर्मवान् ॥

मन्त्रः - ॐ भूर्भुवःस्वः ॐ

षडक्षरमन्त्रः - अन्तर्यामि ऋषिः । दैवी गायत्री छन्दः । परमात्मा देवता

ॐ विं हृदयाय नमः । षं शिरसे स्वाहा । णं शिखायै वषट् । वें कवचाय हुम् । नं नेत्राभ्यां वौषट् । मः अस्त्राय फट्

मन्त्राक्षरन्यासः-ॐ विं विश्वाय नमः ॐ (पादयोः) । षं तेजसाय (जान्वोः) । णं प्राज्ञाय (नाभौ) । वें तुरीयाय (हृदये) । नं आत्मने (वाचि) । ॐ मः अन्तरात्मने नमः ॐ (शिरसि)

ध्यानम् - मेघश्यामसमाभासश्चिदानन्दैक देहवान् ।

चक्रशङ्खगदापद्मधरो ध्येयोऽहमीश्वरः ॥

लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः ।

ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ॥

सेव्यमानोऽधिकं भक्त्या नित्यनिश्शेषशक्तिमान् ।

मूर्तयश्चात्र षड् ध्येयाश्चक्रशङ्खवराभयैः ॥

युक्ताः प्रदीपवर्णाश्च सर्वाभरणभूषिताः ।

मन्त्रः - ॐ विष्णवे नमः ॐ

द्वादशाक्षरमन्त्रः - अन्तर्यामी ऋषिः । जगती छन्दः । परमात्मा देवता

ॐ ॐ हृदयाय नमः । नमो शिरसे स्वाहा । भगवते शिखायै वषट् । वासुदेवाय कवचाय हुम् । ॐ नमो भगवते वासुदेवाय अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ॐ केशवाय नमः ॐ (पादयोः) । नं नारायणाय (जान्वोः) । मों माधवाय (नाभौ) । भं गोविन्दाय (हृदये) । गं विष्णवे (वाचि)। वं मधुसूदनाय (नासायां) । तें त्रिविक्रमाय (नेत्रयोः) । वां वामनाय (शिरसि)। सुं श्रीधराय (दक्षिणबाहौ) । दें हृषीकेशाय (वामबाहौ) । वां पद्मनाभाय (दक्षिणोरसि) । ॐ यं दामोदराय नमः ॐ (वामोरसि)

ध्यानम् - अच्छवर्णोऽभयवरकरो ध्येयोऽमितद्युतिः ।

## ॥ विष्णोः मन्त्रप्रभेदाः ॥

**प्रणवमन्त्रः** - अन्तर्यामी ऋषिः । दैवी गायत्री छन्दः । परमात्मा देवता ॐ भूः हृदयाय नमः । भुवः शिरसे स्वाहा । स्वः शिखायै वषट् । भूर्भुवःस्वः कवचाय हुम् । सत्यं अस्त्राय फट्

**मन्त्राक्षरन्यासः** - ॐ अं विश्वाय नमः ॐ (नाभौ) । उं तेजसाय (हृदये) । ॐ मं प्राज्ञाय नमः ॐ (शिरसि)

**ध्यानम्** - उद्यद्भास्वत्समाभासश्चिदानन्दैकदेहवान् ।
चक्रशङ्खगदापद्मधरो ध्येयोऽहमीश्वरः ॥
लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः ।
ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ॥
सेव्यमानोऽधिकं भक्त्या नित्यनिश्शेषशक्तिमान् ।
मूर्तयोऽष्टावपि ध्येयाश्चक्रशङ्खवराभयैः ॥
युक्ताः प्रदीपवर्णाश्च सर्वाभरणभूषिताः ।

**मन्त्रः** - ॐ ॐ ॐ

**व्याहृतिमन्त्रः** - प्रजापति ऋषिः । दैवी गायत्री छन्दः । परमात्मा देवता ॐ ॐ हृदयाय नमः । भूः शिरसे स्वाहा । भुवः शिखायै वषट् । स्वः कवचाय हुम् । भूर्भुवःस्वः अस्त्राय फट्

**मन्त्राक्षरन्यासः** - ॐ भूः अनिरुद्धाय नमः ॐ (नाभौ) । भुवः प्रद्युम्नाय (हृदये) । स्वः सङ्कर्षणाय (शिरसि) । ॐ भूर्भुवःस्वः वासुदेवाय नमः ॐ (सर्वाङ्गेषु)

**ध्यानम्** - उद्यदादित्यवर्णश्च ज्ञानमुद्राऽभयोद्यतः ।
लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः ॥
ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ।
सेव्यमानोऽधिकं भक्त्या नित्यनिश्शेषशक्तिमान् ॥
वासुदेवादिकाः शुक्लरक्तपीतासितोज्जलाः ।
चक्रशङ्खगदाब्जेतः प्रथमो मुसली हली ॥
सचक्रशङ्खस्त्वपरस्तृतीयः शार्ङ्गबाणवान् ।

सशङ्खचक्रस्तुर्यस्तु चक्रशङ्खासिचर्मवान् ॥

मन्त्रः - ॐ भूर्भुवःस्वः ॐ

**षडक्षरमन्त्रः - अन्तर्यामि ऋषिः । दैवी गायत्री छन्दः । परमात्मा देवता**

**ॐ विं हृदयाय नमः । षं शिरसे स्वाहा । णं शिखायै वषट् । वें कवचाय हुम् । नं नेत्राभ्यां वौषट् । मः अस्त्राय फट्**

**मन्त्राक्षरन्यासः-ॐ विं विश्वाय नमः ॐ (पादयोः) । षं तेजसाय (जान्वोः) । णं प्राज्ञाय (नाभौ) । वें तुरीयाय (हृदये) । नं आत्मने (वाचि) । ॐ मः अन्तरात्मने नमः ॐ (शिरसि)**

**ध्यानम् - मेघश्यामसमाभासश्चिदानन्दैक देहवान् ।**

चक्रशङ्खगदापद्मधरो ध्येयोऽहमीश्वरः ॥
लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः ।
ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ॥
सेव्यमानोऽधिकं भक्त्या नित्यनिश्शेषशक्तिमान् ।
मूर्तयश्चात्र षड् ध्येयाश्चक्रशङ्खवराभयैः ॥
युक्ताः प्रदीपवर्णाश्च सर्वाभरणभूषिताः ।

मन्त्रः - ॐ विष्णवे नमः ॐ

**द्वादशाक्षरमन्त्रः - अन्तर्यामी ऋषिः । जगती छन्दः । परमात्मा देवता**

ॐ ॐ हृदयाय नमः । नमो शिरसे स्वाहा । भगवते शिखायै वषट् । वासुदेवाय कवचाय हुम् । ॐ नमो भगवते वासुदेवाय अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ॐ केशवाय नमः ॐ (पादयोः) । नं नारायणाय (जान्वोः) । मों माधवाय (नाभौ) । भं गोविन्दाय (हृदये) । गं विष्णवे (वाचि)। वं मधुसूदनाय (नासायां) । तें त्रिविक्रमाय (नेत्रयोः) । वां वामनाय (शिरसि)। सुं श्रीधराय (दक्षिणबाहौ) । दें हृषीकेशाय (वामबाहौ) । वां पद्मनाभाय (दक्षिणोरसि) । ॐ यं दामोदराय नमः ॐ (वामोरसि)

ध्यानम् - अच्छवर्णोऽभयवरकरो ध्येयोऽमिततद्युतिः ।

लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः ॥
ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ।
सेव्यमानोऽधिकं भक्त्या नित्यनिश्शेषशक्तिमान् ॥
ध्येयाश्च केशवाद्या द्वादशतपनप्रभास्समानेन ।
अरिदरगदाब्जहस्ताः पीतांशुकविविधभूषणोल्लसिताः ॥

मन्त्रः - ॐ ॐ नमो भगवते वासुदेवाय ॐ

**सविता गायत्री** - प्रजापति ऋषिः । दैवी गायत्री छन्दः । परमात्मा देवता ॐ ॐ हृदयाय नमः । भूः शिरसे स्वाहा । भुवः शिखायै वषट् । स्वः कवचाय हुम् । भूर्भुवःस्वः अस्त्राय फट्

मन्त्राक्षरन्यासः - दक्षिणहस्तसन्ध्यग्रेषु क्रमेण - ॐ तं केशवाय नमः ॐ । त्सं नारायणाय । विं माधवाय । तुं गोविन्दाय । र्वं विष्णवे । वामहस्त सन्ध्यग्रेषु क्रमेण - रें मधुसूदनाय । णिं त्रिविक्रमाय । यं वामनाय । भं श्रीधराय । र्गो हृषीकेशाय । दक्षिणपादसन्ध्यग्रेषु क्रमेण - दें पद्मनाभाय । वं दामोदराय । स्यं संकर्षणाय । धीं वासुदेवाय । मं प्रद्युम्नाय । वामपादसन्ध्यग्रेषु क्रमेण - हिं अनिरुद्धाय । धिं पुरुषोत्तमाय । यों अधोक्षजाय । यों नारसिंहाय । नः अच्युताय । शिरसि - प्रं जनार्दनाय । मुखे- चों उपेन्द्राय । हृदि - दं हरये । नाभौ - ॐ यां कृष्णाय नमः ॐ

ध्यानम् - उद्यदादित्यवर्णश्च सूर्यमण्डलमध्यगः ।
चक्रशङ्खधरोऽङ्कस्थदोर्द्वयो ध्येय एव च ॥
ध्येयाश्च केशवाद्या चतुर्विंशतितपनसमानेन ।
अरिदरगदाब्जहस्ताः पीतांशुकविविधभूषणोल्लसिताः ॥

मन्त्रः - ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ॐ ॥

**केशवमन्त्रः** - ब्रह्मा ऋषिः । गायत्री छन्दः । केशवरूपी परमात्मा देवता ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ॐ नमः (पादयोः) । कें (हृदि) । शं (शिरसि) । वां (नाभौ) । यं (मुखे) । नं (ललाटे) । मः (नासिकायां)

ध्यानम् - केशवस्तु सुवर्णाभः संयुतश्च श्रिया सदा ।
शङ्खचक्रगदापद्मधरो ध्येयोऽखिलैर्जनैः ॥

मन्त्रः - ॐ ॐ केशवाय नमः

नारायणध्यानम् - नारायणः श्यामवर्णः सदा लक्ष्म्यायुतः प्रभुः ।
पद्मगदाचक्रशङ्खधरो ध्येयोऽखिलैर्जनैः ॥

माधवमन्त्रः - ब्रह्मा ऋषिः । गायत्री छन्दः । माधवरूपी परमात्मा देवता ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

मन्त्राक्षरन्यासः- ॐ ॐ नमः (पादयोः) । मां (हृदि) । धं (शिरसी) । वां (नाभौ) । यं (मुखे) । नं (ललाटे) । मः (नासिकायां)

ध्यानम् - माधवो ह्युत्पलाभश्च सदा कमलया युतः ।
चक्रशङ्खपद्मगदाधरो ध्येयोऽखिलैः प्रभुः ॥

मन्त्रः - ॐ ॐ माधवाय नमः

गोविन्दमन्त्रः - ब्रह्मा ऋषिः । गायत्री छन्दः । गोविन्दरूपी परमात्मा देवता ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ॐ नमः (पादयोः) । गों (हृदि) । विं (शिरसि) । दां (नाभौ) । यं (मुखे) । स्वां (ललाटे) । हां (नासिकायां)

ध्यानम् - गोविन्दः शशिवर्णश्च पद्मया च युतः प्रभुः ।
गदापद्मशङ्खचक्रधरो ध्येयोऽखिलैर्जनैः ॥

मन्त्रः - ॐ ॐ गोविन्दाय स्वाहा

विष्णुध्यानम् - विष्णुश्च गौरवर्णाभो पद्मिनीदेविसंयुतः ।
पद्मशङ्खचक्रगदाधरो ध्येयः सदा प्रभुः ॥

मधुसूदनमन्त्रः - ब्रह्मा ऋषिः । गायत्री छन्दः । मधुसूदनरूपी परमात्मा देवता ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

**मन्त्राक्षरन्यासः- ॐ ॐ नमः(पादयोः) । मं(हृदि) । धुं(शिरसि) । सूं(नाभौ)। दं (मुखे) । नां (ललाटे) । यं (नासिकायां) । स्वां (नेत्रयोः) । हां (जान्वो)**

**ध्यानम् - मधुसूदनः शोणवर्णः प्रिया तु कमलालया ।**

**शङ्खपद्मगदाचक्रधरो ध्येयोऽखिलैर्जनैः ॥**

**मन्त्रः - ॐ ॐ मधुसूदनाय स्वाहा**

**त्रिविक्रममन्त्रः - ब्रह्मा ऋषिः । गायत्री छन्दः । त्रिविक्रमरूपी परमात्मा देवता । ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्**

**मन्त्राक्षरन्यासः- ॐ ॐ नमः (पादयोः) । त्रिं (हृदि) । विं (शिरसि) । क्रं (नाभौ) । मां (मुखे) । यं (ललाटे) । स्वां (नासिकायां) । हां (नेत्रयोः)**

**ध्यानम् - त्रिविक्रमोऽग्निसङ्काशो रमया च युतः सदा ।**

**गदाचक्रशङ्खपद्मधरो ध्येयोऽखिलैर्जनैः ॥**

**मन्त्रः- ॐ ॐ त्रिविक्रमाय स्वाहा**

**वामनध्यानम् - वामनः स्फटिकवर्णाभश्च वृषाकपियुतः ।**

**चक्रगदापद्मशङ्खधरो ध्येयोऽखिलैर्जनैः ॥**

**श्रीधरमन्त्रः- ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीधररूपी परमात्मा देवता ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्**

**मन्त्राक्षरन्यासः- ॐ ॐ नमः (पादयोः) । श्रीं (हृदि) । धं (शिरसि) । रां (नाभौ) । यं (मुखे) । नं (ललाटे) । मः (नासिकायां)**

**ध्यानम् - श्रीधरस्तु हरिद्राभो वृद्धीदेवीयुतः प्रभुः ।**

**चक्रगदाशङ्खपद्मधरो ध्येयोऽखिलैः प्रभुः ॥**

**मन्त्रः- ॐ ॐ श्रीधराय नमः**

**हृषीकेशमन्त्रः** - व्यास ऋषिः । गायत्री छन्दः । हृषीकेशरूपी परमात्मा देवता ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ॐ नमः (पादयोः) । हृं (हृदि) । षीं (शिरसि) । कें (नाभौ) । शां (मुखे) । यं (ललाटे) । स्वां (नासिकायां) । हां (नेत्रयोः)

ध्यानम् - हृषीकेशः सूर्यवर्णः धन्याख्यप्रिययायुतः ।
चक्रपद्मशङ्खगदाधरो ध्येयोऽखिलैर्जनैः ॥

मन्त्रः- ॐ ॐ हृषीकेशाय स्वाहा

**पद्मनाभमन्त्रः** - व्यास ऋषिः । गायत्री छन्दः । पद्मनाभरूपी परमात्मा देवता ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ॐ नमः (पादयोः) । नं (हृदि) । मः (शिरसि) । पं (नाभौ) । द्मं (मुखे) । नां (ललाटे) । भां (नासिकायां) । यं (नेत्रयोः)

ध्यानम् - पद्मनाभो घनश्यामो प्रियया यज्ञयायुतः ।
पद्मचक्रगदाशङ्खधरो ध्येयः सदा प्रभुः ॥

मन्त्रः - ॐ ॐ नमः पद्मनाभाय

**दामोदरमन्त्रः** - व्यास ऋषिः । गायत्री छन्दः । दामोदररूपी परमात्मा देवता ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ॐ नमः (पादयोः) । नं (हृदि) । मों (शिरसि) । दां (नाभौ) । मों (मुखे) । दं (ललाटे) । रां (नासिकायां) । यं (नेत्रयोः)

ध्यानम् - दामोदरो हेमवर्णः इन्दिराप्रिययायुतः ।
शङ्खगदाचक्रपद्मधरो ध्येयः सदा जनैः ॥

मन्त्रः- ॐ ॐ नमो दामोदराय

**सङ्कर्षणमन्त्रः** - गर्ग ऋषिः । गायत्री छन्दः । सङ्कर्षणरूपी परमात्मा देवता । ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

मन्त्राक्षरन्यासः- ॐ ॐ नमः (पादयोः) । सं (हृदि) । कं (शिरसि) । र्षं (नाभौ) । णां (मुखे) । यं (ललाटे) । स्वां (नासिकायां) । हां (नेत्रयोः)

ध्यानम् - सङ्कर्षणः सुमुक्ताभो हिरण्यासहितः प्रभुः ।
शङ्खपद्मचक्रगदाधरो ध्येयोऽखिलैर्जनैः ॥

मन्त्रः - ॐ ॐ सङ्कर्षणाय स्वाहा

**वासुदेवध्यानम्** - वासुदेवो नीरदाभो हरिण्याख्यप्रियायुतः ।
शङ्खचक्रपद्मगदाधरो ध्येयः सदा विभुः ॥

**प्रद्युम्नमन्त्रः** - गर्ग ऋषिः । गायत्री छन्दः । प्रद्युम्नरूपी परमात्मा देवता ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ॐ नमः (पादयोः) । प्रं (हृदि) । द्युं (शिरसि) । म्नां (नाभौ) । यं (मुखे) । स्वां (ललाटे) । हां (नासिकायां)

ध्यानम् - प्रद्युम्नो रक्तवर्णश्च सत्ययासंयुतः प्रभुः ।
शङ्खगदापद्मचक्रधरो ध्येयोऽखिलैः सदा ॥

मन्त्रः - ॐ ॐ प्रद्युम्नाय स्वाहा

**अनिरुद्धमन्त्रः** - गर्ग ऋषिः । गायत्री छन्दः । अनिरुद्धरूपी परमात्मा देवता ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ॐ नमः (पादयोः) । अं (हृदि) । निं (शिरसि) । रुं (नाभौ) । द्धां (मुखे) । यं (ललाटे) । स्वां (नासिकायां) । हां (नेत्रयोः)

ध्यानम् - अनिरुद्धोऽग्निवर्णश्च नित्यादेवियुतः सदा ।
गदाशङ्खपद्मचक्रधरो ध्येयोऽखिलैर्जनैः ॥

मन्त्रः - ॐ ॐ अनिरुद्धाय स्वाहा

**पुरुषोत्तममन्त्रः** - ब्रह्मा ऋषिः । गायत्री छन्दः । पुरुषोत्तमरूपी परमात्मा देवता । ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

मन्त्राक्षरन्यासः- ॐ ॐ नमः (पादयोः) । कृं (हृदि) । ष्णां (शिरसि) । यं (नाभौ) । पुं (मुखे) । रुं (ललाटे) । षों (नासिकायां) । त्तं (नेत्रयोः) । मां (जान्वो) । यं (श्रोत्रे) । स्वां (सोरके) । हां (हृदये)

ध्यानम् - पुरुषोत्तमस्तु रक्ताभो नन्दयासहितो विभुः ।
पद्मशङ्खगदाचक्रधरो ध्येयोऽखिलैर्जनैः ॥

मन्त्रः- ॐ ॐ पुरुषोत्तमाय स्वाहा

**अधोक्षजमन्त्रः** - ब्रह्मा ऋषिः । गायत्री छन्दः । अधोक्षजरूपी परमात्मा देवता । ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

मन्त्राक्षरन्यासः- ॐ ॐ नमः (पादयोः) । अं (हृदि) । धों (शिरसि) । क्षं (नाभौ) । जां (मुखे) । यं (ललाटे) । स्वां (नासिकायां) । हां (नेत्रयोः)

ध्यानम् - अधोक्षजः श्यामवर्णः त्रयाख्याप्रिययायुतः ।
गदाशङ्खचक्रपद्मधरो ध्येयः सदा प्रभुः ॥

मन्त्रः- ॐ ॐ अधोक्षजाय स्वाहा

**नरसिंहध्यानम्** - नृसिंहो मणिवर्णाभः सुखयासहितः प्रभुः ।
पद्मगदाशङ्कचक्रधरो ध्येयोऽखिलैर्जनैः ॥

**अच्युतमन्त्रः** - ब्रह्मा ऋषिः । गायत्री छन्दः । अच्युतरूपी परमात्मा देवता ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ॐ नमः(पादयोः) । अं (हृदि) । च्युं (शिरसि) । तां (नाभौ) । यं (मुखे) । स्वां (ललाटे) । हां (नासिकायां)

ध्यानम् - अच्युतः सूर्यवर्णश्च सुगन्धाख्याप्रियायुतः ।
पद्मचक्रशङ्खगदाधरो ध्येयोऽखिलैः प्रभुः ॥

मन्त्रः- ॐ ॐ अच्युताय स्वाहा

**जनार्दनमन्त्रः**- ब्रह्मा ऋषिः । गायत्री छन्दः । जनार्दनरूपी परमात्मा देवाता
ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् ।
बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

मन्त्राक्षरन्यासः- ॐ ॐ नमः (पादयोः) । जं (हृदि) । नां (शिरसि) । र्दं (नाभौ) । नां (मुखे) । यं (ललाटे) । नं (नासिकायां) । मः(नेत्रयोः)

ध्यानम् - जनार्दनः कुन्दवर्णः सुन्दर्याख्यप्रियायुतः ।
चक्रशङ्खगदापद्मधरो ध्येयोऽखिलैस्सदा ॥
प्रकाशरूपोऽखिलदेवतात्मदेवो हृदिध्यानपरायणाय ।
जनार्दनो यच्छतु पुण्यवृद्धिं पद्मारिशङ्खं च गदां च बिभ्रत् ॥

मन्त्रः- ॐ ॐ जनार्दनाय नमः

**उपेन्द्रमन्त्रः** - ब्रह्मा ऋषिः । गायत्री छन्दः । उपेन्द्ररूपी परमात्मा देवता
ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् ।
बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

मन्त्राक्षरन्यासः- ॐ ॐ नमः (पादयोः) । उं (हृदि) । पें (शिरसि) । द्रां (नाभौ) । यं (मुखे) । स्वां (ललाटे) । हां (नासिकायां)

ध्यानम् - उपेन्द्रः शशिवर्णश्च विद्याख्यप्रिययायुतः ।
गदाचक्रपद्मशङ्खधरो ध्येयः सदा विभुः ॥

मन्त्रः - ॐ ॐ उपेन्द्राय स्वाहा

**श्रीहरिमन्त्रः** - ब्रह्मा ऋषिः । गायत्री छन्दः । हरिरूपी परमात्मा देवता
ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् ।
बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ॐ नमः (पादयोः) । हं (हृदि) । रिं (शिरसि) । हुं (नाभौ) । फट् (मुखे)

ध्यानम् - हरिर्वैडूर्यसङ्काशः सहितश्च सुशीलया ।
चक्रपद्मगदाशङ्खधरो धेयोऽखिलैर्जनैः ॥

मन्त्रः- ॐ ॐ हरिं हुं फट्

कृष्णध्यानम् - कृष्णोऽभिन्नाञ्जनप्रख्यो लक्षणाख्यप्रियायुतः ।
गदापद्मचक्रशङ्खधरो ध्येयः सदा प्रभुः ॥

केशवादिषु वेदोक्तमन्त्रः - सहस्रशीर्षमिति ब्रह्मा ऋषिः । अनुष्टुप् छन्दः । परमात्मा देवता

ॐ सहस्रशीर्षं देवं विश्वाक्षं विश्वशंम्भुवम् ।
विश्वं नारायणं देवमक्षरं परमं पदम् ॥

वासुदेवमन्त्रः - ब्रह्मा ऋषिः । जगती छन्दः । वासुदेवरूपी परमात्मा देवता ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

ध्यानम् - चक्रशङ्खगदापद्मधारिणं वनमालिनम् ।
श्वेतवर्णं दिव्यरूपं श्रीमायासहितं विभुम् ॥

मन्त्रः- ॐ अं ॐ नमो भगवते वासुदेवाय

सङ्कर्षणमन्त्रः - ब्रह्मा ऋषिः । जगती छन्दः । सङ्कर्षणरूपी परमात्मा देवता । ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

ध्यानम् - सङ्कर्षणं रक्तवर्णं चक्रशङ्खधरं हरिम् ।
हलामुसलसंयुक्तं जयादेविसमन्वितम् ॥

मन्त्रः - ॐ आं ॐ नमो भगवते सङ्कर्षणाय

प्रद्युम्नमन्त्रः - ब्रह्मा ऋषिः । जगती छन्दः । प्रद्युम्नरूपी परमात्मा देवता ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

ध्यानम् - चक्रशङ्खधनुर्बाणधारिणं वनमालिनम् ।

प्रद्युम्नं कृतिसंयुक्तं पीतवर्णं जगत्पतिम् ॥

मन्त्रः- ॐ अम् ॐ नमो भगवते प्रद्युम्नाय

**अनिरुद्धमन्त्रः-** ब्रह्मा ऋषिः । जगती छन्दः । अनिरुद्धरूपी परमात्मा देवता ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

ध्यानम् - अनिरुद्धं कृष्णवर्णं चक्रशङ्खासिचर्मवान् ।
शान्तिदेविसमायुक्तं सर्वालङ्कारभूषितम् ॥

मन्त्रः - ॐ अः ॐ नमो भगवते अनिरुद्धाय

**मत्स्यमन्त्रः** - ब्रह्मा ऋषिः । गायत्री छन्दः । मत्स्यरूपी परमात्मा देवता ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ॐ नमः(पादयोः) । भं (हृदि) । गं (शिरसी) । वं (नाभौ) । तें (मुखे) । मं (ललाटे) । त्स्यं (नासिकायां) । रूं (नेत्रयोः) । पां (जान्वो) । यं (श्रोत्रे) । नं (सोरके) । मः (हृदये)

ध्यानम् - मत्स्याननधरं देवं चक्रशङ्खधरं विभुम् ।
सर्वालङ्कारसंयुक्तं श्रीभूनीळाधिपं स्मरेत् ॥

मन्त्रः- ॐ ॐ भगवते मत्स्यरूपाय नमः

गायत्री - ॐ मत्स्यरूपाय विद्महे लोकनाथाय धीमहि ।
तन्नो विष्णुः प्रचोदयात् ॥

**कूर्ममन्त्रः** - मार्कण्डेय ऋषिः । गायत्री छन्दः । कूर्मरूपी परमात्मा देवता ॐ ज्ञानाय हृदयाय नमः । ऐश्वर्याय शिरसे स्वाहा । शक्तये शिखायै वषट् । बलाय कवचाय हुम् । तेजसे नेत्राभ्यां वौषट् । वीर्याय अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ॐ नमः (पादयोः) । नं (हृदि) । मों (शिरसी) । भं (नाभौ) । गं (मुखे) । वं (ललाटे) । तें (नासिकायां) । कूं (नेत्रयोः) । र्मं (जान्वो) । रूं (श्रोत्रे) । पिं (सोरके) । णें (हृदये) । स्वां (कंठे) । हां (वामभुजे)

ध्यानम् - चक्रशङ्खधरं देवं कूर्मरूपं हरिं विभुम् ।
सर्वाभरणभूषाङ्गं श्रीकूर्ममनिशं भजे ॥

मन्त्रः- ॐ ॐ नमो भगवते कूर्मरूपाय स्वाहा

गायत्री - ॐ लोकाध्यक्षाय विद्महे धराध्यक्षाय धीमहि ।
तन्नः कूर्मः प्रचोदयात् ॥

वराहमन्त्रः - ब्रह्मा ऋषिः । उष्णिक् छन्दः । भूवराहरूपी परमात्मा देवता ॐ ॐ हृदयाय नमः । वराहाय शिरसे स्वाहा । भूधरय शिखायै वषट् । परात्मने कवचाय हुम् । सर्वज्ञाय नेत्राभ्यां वौषट् । सर्वशक्तये अस्त्राय फट्

मन्त्राक्षरन्यासः- ॐ हूं नमः(पादयोः) । वं (हृदि) । रां (शिरसि) । हां (नाभौ) । यं (मुखे) । नं (ललाटे) । मः (नासिकायां)

ध्यानम् - श्यामः सुदर्शनदराभयसद्वरेतो ।
भूम्यायुतोऽखिलनिजोक्तपरिग्रहैश्च ॥
ध्येयो निजैश्च तनुभिः सकलैरुपेतः ।
कोलो हरिः सकलवाञ्छितसिद्धयेऽजः ॥

मन्त्रः- ॐ हूं वराहाय नमः

गायत्री - ॐ भूः वराहाय विद्महे भुवः पराय धीमहि ।
तन्नः सुवः प्रचोदयात् ॥

वेदोक्तमन्त्रः - दिवो वराहमिति आङ्गिरसःकु त्सर्षिः । जगती छन्दः । भूवराहरूपी परमात्मा देवता

ॐ दिवो वराहमरुषं कपर्दिनं त्वेषं रूपं नमसा नि ह्वयामहे ।

हस्ते बिभ्रद्भेषजा वार्याणि शर्म वर्म च्छर्दिरस्मभ्यं यंसत् ॥

नरसिंहमन्त्रः - ब्रह्मा ऋषिः । गायत्री छन्दः । नरसिंहरूपी परमात्मा देवता ॐ पूर्णज्ञानात्मने हृदयाय नमः । पूर्णैश्वर्यात्मने शिरसे स्वाहा । पूर्णप्रभात्मने शिखायै वषट् । पूर्णानंदात्मने कवचाय हुम् । पूर्णतेजआत्मने नेत्राभ्यां वौषट् । पूर्णशक्त्यात्मने अस्त्राय फट्

**मन्त्राक्षरन्यासः- ॐ क्षं नमः (पादयोः) । नं (हृदि) । रं (शिरसि) । सिं (नाभौ) । हां (मुखे) । यं (ललाटे) । नं (नासिकायां) । मः (नेत्रयोः)**

**ध्यानम् - ध्यायेन्नृसिंहमुरुवृत्तरवित्रिनेत्रम् ।**
**जानुप्रसक्तकरयुग्ममथापराभ्याम् ॥**
**चक्रं दरं च दधतं प्रिययासमेतम् ।**
**तिग्मांशुकोट्यधिकतेजसमग्र्यशक्तिम् ॥**

**मन्त्रः - ॐ क्षं नरसिंहाय नमः**

**वेदोक्तमन्त्रः - दीर्घतमा ऋषिः । त्रिष्टुप् छन्दः । नरसिंहरूपी परमात्मा देवता**

**ॐ प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।**

**यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥**

**गायत्री - ॐ नरसिंहाय विद्महे महाबलाय धीमहि ।**
**तन्नोऽनन्तः प्रचोदयात् ॥**

**हंसमन्त्रः - ब्रह्मा ऋषिः । गायत्री छन्दः । हंसरूपी परमात्मा देवता**

**ॐ ॐ हृदयाय नमः । ह्रीं शिरसे स्वाहा । हंसः शिखायै वषट् । सोहं कवचाय हुम् । स्वाहा अस्त्राय फट्**

**मन्त्राक्षरन्यासः - ॐ ॐ नमः (पादयोः) । ह्रीं (हृदि) । हं (शिरसि) । सः (नाभौ) । सों (मुखे) । हं (ललाटे) । स्वां (नासिकायां) । हां (नेत्रयोः)**

**ध्यानम् - ध्यायेत् रवीन्दुकरमिन्दुसहस्रलक्षकान्तिं**
**प्रियासहितया स्थितमिन्दुबिम्बे ॥**
**शङ्खारिदोर्द्वयमुदर्कमहेन्दुबिम्बात्**
**संसिच्यमानममृतेन रमाधिनाथम् ॥**

**मन्त्रः- ॐ ॐ ह्रीं हंसः सोहं स्वाहा**

**वेदोक्तमन्त्रः - हंसः शुचिषदित्यस्य वामदेव ऋषिः । जगती छन्दः । हंसरूपी परमात्मा देवता**

**ॐ हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।**
**नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥**

गायत्री - ॐ परंब्रह्माय विद्महे वासुदेवाय धीमहि । तन्नो हंसः प्रचोदयात् ॥

**वामनमन्त्रः** - ब्रह्मा ऋषिः । गायत्री छन्दः । वामनरूपी परमात्मा देवता

ॐ ॐ हृदयाय नमः । वं शिरसे स्वाहा । वामनाय शिखायै वषट् । नमः कवचाय हुम् । ॐ वं वामनाय नमः अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ॐ नमः (पादयोः) । वं (हृदि) । वां (शिरसि) । मं (नाभौ) । नां (मुखे) । यं (ललाटे) । नं (नासिकायां) । मः (नेत्रयोः)

ध्यानम् - उद्यद्रविप्रभमरीन्द्रदरौ गदां च ।
ज्ञानं च बिभ्रतमजं प्रियया समेतम् ॥
विश्वावकाशमभितः प्रतिपूरयन्तम् ।
भासा त्वया स्मरत विष्णुमजादिवन्द्यम् ॥

मन्त्रः- ॐ ॐ वं वामनाय नमः

गायत्री - ॐ त्रिविक्रमाय विद्महे विश्वरूपाय धीमहि ।
तन्नो विष्णुः प्रचोदयात् ॥

वेदोक्तमन्त्रः - त्रीणि पदा मेधातिथिः वामनविष्णुर्गायत्री ।
ॐ त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥

**भार्गवमन्त्रः** - ब्रह्मा ऋषिः । गायत्री छन्दः । भार्गवरामरूपी परमात्मा देवता

ॐ पूर्णज्ञानात्मने हृदयाय नमः । पूर्णैश्वर्यात्मने शिरसे स्वाहा । पूर्णप्रभात्मने शिखायै वषट् । पूर्णानन्दात्मने कवचाय हुम् । पूर्णतेज आत्मने नेत्राभ्यां वौषट् । पूर्णशक्त्यात्मने अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ॐ नमः (पादयोः) । भां (हृदि) । भां (शिरसि) । र्गं (नाभौ) । वां (मुखे) । यं (ललाटे) । नं (नासिकायां) । मः(नेत्रयोः)

ध्यानम् - अङ्गारवर्णमभितोऽण्डबहिः प्रभाभि-
र्व्याप्तं परश्वधधनुर्धरमेकवीरम् ।
ध्यायेदजेशपुरुहूतमुखैः स्तुवद्भि-
रावीतमात्मपदवीं प्रतिपादन्तम् ॥

मन्त्रः - ॐ ॐ भां भार्गवाय नमः

गायत्री - ॐ जामदग्न्याय विद्महे तेजोपूर्णाय धीमही ।

तन्नो रामः प्रचोदयात् ॥

वेदोक्तमन्त्रः - भद्रो भद्रयेति त्रित ऋषिः । त्रिष्टुप् छन्दः । रामचन्द्र(परशुराम) रूपी परमात्मा देवता

ॐ भद्रो भद्रया सचमान आगात्स्वसारं जारो अभ्येति पश्चात् ।
सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्वर्णैरभि राममस्थात् ॥

राममन्त्रः - ब्रह्मा ऋषिः । गायत्री छन्दः । रामचन्द्ररूपी परमात्मा देवता

ॐ रां हृदयाय नमः । रां शिरसे स्वाहा । मां शिखायै वषट् । यं कवचाय हुम् । नं नेत्राभ्यां वौषट् । मः अस्त्राय फट् ।

मन्त्राक्षरन्यासः - ॐ रां नमः(पादयोः) । रां (हृदि) । मां (शिरसि) । यं (नाभौ) । नं (मुखे) । मः(ललाटे)

ध्यानम् - श्यामं रवीन्द्वमितदीधितिकान्तियुक्तम् ।
ज्ञानं शरं च दधतं प्रिययासमेतम् ॥
स्वात्मस्वरूपममितं हनुमन्मुखेषु ।
सन्दर्शयन्तमजितं स्मरतोरुगीर्भिः ॥

मन्त्रः - ॐ रां रामाय नमः

गायत्री - ॐ दाशरथाय विद्महे सीतानाथाय धीमहि ।

तन्नो रामः प्रचोदयात् ॥

आवरणमन्त्राः - अङ्गैः प्रथमावरणम्

पूर्वादिदिक्षु - ॐ भरताय नमः । जानक्यै । जाम्बवते । लक्ष्मणाय । अग्रे - हनुमते नमः । आग्नेयादिविदिक्षु - ॐ सुग्रीवाय नमः । विभीषणाय । नलाय । शत्रुघ्नाय नमः (इति द्वितीयावरणम्)

पूर्वाद्यष्टदिक्षु - वसिष्ठाय । जमदग्नये । विश्वामित्राय । गौतमाय । भारद्वाजाय । अत्रये । कश्यपाय । वाल्मीकये नमः (इति तृतीयावरणम्)

इन्द्रादिभिः चतुर्थावरणम्

वाहनमन्त्रः - हनुमन्मन्त्रम्

निर्माल्यधारिमन्त्रः- ॐ गुहाय नमः (नीलाय नमः इति वा)

कृष्णमन्त्रः - ब्रह्मा ऋषिः । गायत्री छन्दः । कृष्णरूपी परमात्मा देवता । ॐ पूर्णज्ञानात्मने हृदयाय नमः । पूर्णैश्वर्यात्मने शिरसे स्वाहा । पूर्णप्रभात्मने शिखायै वषट् । पूर्णानन्दात्मने कवचाय हुम् । पूर्णतेजआत्मने नेत्राभ्यां वौषट् । पूर्णशक्त्यात्मने अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ क्लीं नमः (पादयोः) । कृं (हृदि) । ष्णां (शिरसि) । यं (नाभौ) । नं (मुखे) । मः (ललाटे)

ध्यानम् - ध्यायेद्धरिन्मणिनिभं जगदेकवन्द्यम् ।
सौन्दर्यसारमरिशङ्खवराभयानि ॥
दोर्भिर्दधानमजितं सरसं च भैष्मी-
सत्यासमेतमखिलप्रदमिन्दिरेशम् ॥

मन्त्रः - ॐ क्लीं कृष्णाय नमः

आवरणमन्त्राः : अष्टदिक्षुक्रमेण - रुग्मिण्यै । सत्यभामायै । जाम्बवत्यै । काळिन्द्यै । मित्रविन्दायै । नाग्नजित्यै । भद्रायै । लक्ष्मणायै नमः (इति प्रथमावरणम्) । अङ्गैः द्वितीयावरणम्

पूर्वादि अष्टदिक्षु - वसुदेवाय । देवक्यै । नन्दगोपाय । यशोदायै । बलभद्राय । सुभद्रायै । प्रद्युम्नाय । अनिरुद्धाय नमः (इति तृतीयावरणम्)

पूर्वादिदिक्षु - ॐ युधिष्ठिराय नमः । अर्जुनाय । नकुलाय । सहदेवाय । अग्रे-भीमसेनाय । भीमस्यवामे - द्रौपद्यै नमः (इति चतुर्थावरणम्)

इन्द्रादि पञ्चमावरणम्

गायत्री - ॐ गोविन्दाय विद्महे वासुदेवाय धीमहि ।
तन्नः कृष्णः प्रचोदयात् ॥

**वेदोक्तमन्त्रः - विश्वमेवेदमिति मन्त्रस्य ब्रह्मा ऋषिः । अनुष्टुप् छन्दः । कृष्णरूपी परमात्मा देवता**

**ॐ विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति ।**
**पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् ॥**

**हयग्रीवमन्त्रः - ब्रह्मा ऋषिः । गायत्री छन्दः । हयग्रीवरूपी परमात्मा देवता**

**ॐ पूर्णज्ञानात्मने हृदयाय नमः । पूर्णैश्वर्यात्मने शिरसे स्वाहा । पूर्णप्रभात्मने शिखायै वषट् । पूर्णानन्दात्मने कवचाय हुम् । पूर्णतेजआत्मने नेत्राभ्यां वौषट् । पूर्णशक्त्यात्मने अस्त्राय फट्**

**मन्त्राक्षरन्यासः - ॐ हां नमः (पादयोः) । हं (हृदि) । यं (शिरसि) । ग्रीं (नाभौ) । वां (मुखे) । यं (ललाटे) । नं (नासिकायां) । मः (नेत्रयोः)**

**ध्यानम् - वन्दे तुरङ्गवदनं शशिबिम्बसंस्थम् ।**
**चन्द्रावदातममृतात्मकरैः समन्तात् ॥**
**अण्डान्तरं बहिरपि प्रतिभासयन्तम् ।**
**शङ्खाक्षपुस्तकसुबोधयुताब्जबाहुम् ॥**

**मन्त्रः- ॐ हां हयग्रीवाय नमः**

**गायत्री - ॐ वागीश्वराय विद्महे ज्ञानपूर्णाय धीमहि । तन्नो हंसः प्रचोदयात् ॥**

**वेदव्यासमन्त्रः - ब्रह्मा ऋषिः । गायत्री छन्दः । वेदव्यासरूपी परमात्मा देवता**

**ॐ पूर्णज्ञानात्मने हृदयाय नमः । पूर्णैश्वर्यात्मने शिरसे स्वाहा । पूर्णप्रभात्मने शिखायै वषट् । पूर्णानन्दात्मने कवचाय हुम् । पूर्णतेजआत्मने नेत्राभ्यां वौषट् । पूर्णशक्त्यात्मने अस्त्राय फट्**

**मन्त्राक्षरन्यासः - ॐ व्यां नमः(पादयोः) । वें (हृदि) । दं (शिरसि) । व्यां (नाभौ) । सां (मुखे) । यं (ललाटे) । नं (नासिकायां) । मः(नेत्रयोः)**

**ध्यानम् - विज्ञानरोचिः परिपूरितान्तर्बाह्याण्डकोशं हरितोपलाभम् ॥**
**तर्काभयेतं विधिशर्वपूर्वगीर्वाणविज्ञानदमानतोऽस्मि ॥**

**मन्त्रः - ॐ ॐ व्यां वेदव्यासाय नमः**

**गायत्री - ॐ पूर्णज्ञानाय विद्महे पूर्णानन्दाय धीमहि ।**

तन्नो व्यासः प्रचोदयात् ॥

आवरणमन्त्राः - पूर्वादिदिक्षु - ॐ पूर्णज्ञानात्मने हृदयाय नमः । पूर्णैश्वर्यात्मने शिरसे स्वाहा । पूर्णप्रभात्मने शिखायै वषट् । पूर्णानन्दात्मने कवचाय हुम् । अग्रे-पूर्णतेजआत्मने नेत्राभ्यां वौषट् । आग्नेयादि विदिक्षु - ॐ पूर्णशक्त्यात्मने अस्त्राय फट् - इति प्रथमावरणम्

पूर्वाद्यष्टदिक्षु - ॐ बादरये नमः । जैमिनये । सुमन्तवे । वैशम्पायनाय । अश्मरथ्याय । पैलाय । काशकृत्स्नाय । ॐ लोमशाय नमः - इति द्वितीयावरणम्

इन्द्रादिभिः तृतीयावरणम्

**दत्तात्रेयमन्त्रः** - ब्रह्मा ऋषिः । गायत्री छन्दः । दत्तात्रेयरूपी परमात्मा देवता ॐ पूर्णज्ञानात्मने हृदयाय नमः । पूर्णैश्वर्यात्मने शिरसे स्वाहा । पूर्णप्रभात्मने शिखायै वषट् । पूर्णानन्दात्मने कवचाय हुम् । पूर्णतेजआत्मने नेत्राभ्यां वौषट् । पूर्णशक्त्यात्मने अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ॐ नमः (पादयोः) । दं (हृदि) । दं (शिरसि) । त्तां (नाभौ) । त्रें (मुखे) । यां (ललाटे) । यं (नासिकायां) । नं (नेत्रयोः) । मः (जान्वो)

ध्यानम् - प्रोद्यद्दिवाकरसमानतनुं सहस्र
सूर्योरुदीधितिभिराप्तसमस्तलोकम् ।
ज्ञानाभयाङ्कितकरं कपिलं च दत्तं
ध्यायेदजादिसमितिं प्रतिबोधयन्तम् ॥

मन्त्रः- ॐ ॐ दं दत्तात्रेयाय नमः

**कपिलमन्त्रः** - ब्रह्मा ऋषिः । गायत्री छन्दः । कपिलरूपी परमात्मा देवता ॐ पूर्णज्ञानात्मने हृदयाय नमः । पूर्णैश्वर्यात्मने शिरसे स्वाहा । पूर्णप्रभात्मने शिखायै वषट् । पूर्णानन्दात्मने कवचाय हुम् । पूर्णतेजआत्मने नेत्राभ्यां वौषट् । पूर्णशक्त्यात्मने अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ॐ नमः (पादयोः) । कं (हृदि) । कं (शिरसि) । पिं (नाभौ) । लां (मुखे) । यं (ललाटे) । नं (नासिकायां) । मः (नेत्रयोः)

ध्यानम् - प्रोद्यद्दिवाकरसमानतनुं सहस्र-

सूर्योरुदीधितिभिराप्तसमस्तलोकम् ॥

ज्ञानाभयाङ्कितकरं कपिलं च दत्तम् ।

ध्यायेदजादिसमितिं प्रतिबोधयन्तम् ॥

मन्त्रः- ॐ ॐ कं कपिलाय नमः

**धन्वन्तरिमन्त्रः** - ब्रह्मा ऋषिः । गायत्री छन्दः । धन्वन्तरिरूपी परमात्मा देवता ॐ पूर्णज्ञानात्मने हृदयाय नमः । पूर्णैश्वर्यात्मने शिरसे स्वाहा । पूर्णप्रभात्मने शिखायै वषट् । पूर्णानन्दात्मने कवचाय हुम् । पूर्णतेजआत्मने नेत्राभ्यां वौषट् । पूर्णशक्त्यात्मने अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ धं नमः (पादयोः) । धं (हृदि) । न्वं (शिरसि) । तं (नाभौ) । रं (मुखे) । यें (ललाटे) । नं (नासिकायां) । मः (नेत्रयोः)

ध्यानम् - चन्द्रौघकान्तिममृतोरुकरैर्जगन्ति ।

सञ्जीवयन्तममितात्मसुखं परेशम् ॥

ज्ञानं सुधाकलशमेव च सन्दधानम् ।

शीतांशुमण्डलगतं स्मराताऽत्मसंस्थम् ॥

मन्त्रः- ॐ धं धन्वन्तरये नमः

वेदोक्तमन्त्रः - ब्रह्मा ऋषिः । अनुष्टप् छन्दः । धन्वन्तरिरूपीपरमात्मा देवता

ॐ अयं मे हस्तो भगवानयं मे भगवत्तरः ।

अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः ॥

शतकलामन्त्राः - ॐ अं अजाय नमः । आं आनन्दाय । इं इन्द्राय । ईं ईशाय । उं उग्राय । ऊं ऊर्जाय । ऋं ऋतम्भराय । ॠं ॠघाय । ऌं ऌशाय । ॡं ॡजये । एं एकात्मने । ऐं ऐराय । ओं ओजोभृते । औं औरसाय । अं अन्ताय । अः अर्धगर्भाय । कं कपिलाय । खं खपतये । गं गरुडासनाय । घं घर्माय । ङं ङसाराय । चं चार्वङ्गाय । छं छन्दोगम्याय । जं जनार्दनाय । झं झाटितारये । ञं ञमाय । टं टङ्किने । ठं ठलकाय । डं डरकाय । ढं ढरिणे । णं णात्मने । तं ताराय । थं थभाय । दं दण्डिने । धं धन्विने । नं नम्याय । पं पराय । फं

फलिने । बं बलिने । भं भगाय । मं मनवे । यं यज्ञाय । रं रामाय । लं लक्ष्मीपतये । वं वराय । शं शान्तसंविदे । षं षड्गुणाय । सं सारात्मने । हं हंसाय । ळं ळाळुकाय । क्षं नरसिंहाय । केशवाय । नारायणाय । माधवाय । गोविन्दाय । विष्णवे । मधुसूदनाय । त्रिविक्रमाय । वामनाय । श्रीधराय । हृषीकेशाय । पद्मनाभाय । दामोदराय । सङ्कर्षणाय । वासुदेवाय । प्र द्युम्नाय । अनिरुद्धाय । पुरुषोत्तमाय । अधोक्षजाय । नारसिंहाय । अच्युताय । जनार्दनाय । उपेन्द्राय । हरये । कृष्णाय । आत्मने । अन्तरात्मने । परमात्मने । ज्ञानात्मने । वासुदेवाय । सङ्कर्षणाय । प्रद्युम्नाय । अनिरुद्धाय । विश्वाय । तैजसाय । प्राज्ञाय । तुरीयाय । मत्स्याय । कूर्माय । वराहाय । नृसिंहाय । वामनाय । परशुरामाय । रामचन्द्राय । वेदव्यासाय । कृष्णाय । दत्तात्रेयाय । बुद्धाय । कल्किने । शिंशुमाराय नमः

## ॥ लक्ष्म्यां मन्त्रप्रभेदाः ॥

**भुवनेश्वरीमन्त्रः** - ब्रह्मा ऋषिः । दैवी गायत्री छन्दः । भुवनेश्वरी श्रीर्देवता
ॐ ह्रां हृदयाय नमः । ह्रीं शिरसे स्वाहा । ह्रूं शिखायै वषट् । ह्रैं कवचाय हुम् । ह्रौं नेत्राभ्यां वौषट् । ह्रः अस्त्राय फट्

ध्यानम् - कौशेयरक्तवसनामरविन्दनेत्राम् ।
पाशाङ्कुशाभयवरोद्यतपद्महस्ताम् ॥
उद्यच्छतार्कसदृशां परमाङ्कसंस्थाम् ।
ध्यायेद्विधीशनतपादयुगां जनित्रीम् ॥

मन्त्रः - ॐ ह्रीं ॐ (ॐ ह्रीं भुवनेश्वर्यै नमः)

**भूदेविमन्त्रः** - ब्रह्मा ऋषिः । दैवी गायत्री छन्दः । भगवती भूर्देवता
ॐ भ्रां हृदयाय नमः । भ्रीं शिरसे स्वाहा । भ्रूं शिखायै वषट् । भ्रैं कवचाय हुम् । भ्रौं नेत्राभ्यां वौषट् । भ्रः अस्त्राय फट्

ध्यानम् - कौशेयपीतवसनामरविन्दनेत्राम् ।
ताम्बूलनीलकुसुमाभयसद्वरेताम् ॥

श्यामाङ्गकान्तिसहितां परमाङ्कसंस्थाम् ।
ध्यायेद्विधीशनतपादयुगां जनित्रीम् ॥

मन्त्रः- ॐ भूं ॐ (ॐ भूं भुवे नमः)

**सीतामन्त्रः** - जनक ऋषिः । गायत्री छन्दः । सीतालक्ष्मीर्देवता

ॐ श्रीं हृदयाय नमः । सीं शिरसे स्वाहा । तां शिखायै वषट् । यैं कवचाय हुम् । नं नेत्राभ्यां वौषट् । मः अस्त्राय फट्

ध्यानम् - रामप्रियां सुवर्णाभां द्विभुजां पद्मलोचनाम् ।
जानकीं संस्मितमुखीं पद्माभयधरीं स्मरेत् ॥

मन्त्रः- ॐ श्रीं सीतायै नमः

**लक्ष्मणमन्त्रः** - अगस्त्य ऋषिः । गायत्री छन्दः । लक्ष्मणो देवता

ॐ लं हृदयाय नमः । लक्ष्मणाय शिरसे स्वाहा । नमः शिखायै वषट् । लं कवचाय हुम् । लक्ष्मणाय नेत्राभ्यां वौषट् । नमः अस्त्राय फट्

ध्यानम् - द्विभुजं सुवर्णरुचिरतनुं पद्मनिभेक्षणम् ।
धनुर्बाणकरं रामसेवासंसक्तमानसम् ॥

मन्त्रः- ॐ लं लक्ष्मणाय नमः

## ॥ आत्मशुद्धिपटलः ॥

**पवित्रलक्षण** - पवित्रं धारयेत् पूर्वमन्तगर्भं यथाविधि।
देवार्चने जपे होमे धारयेद्धि पवित्रकम् ॥
अप्रसूताः स्मृता दर्भा प्रसूतास्तु कुशाः स्मृताः ।
समूलाश्च कुशा ज्ञेयाः छिन्नाग्रास्तृणसंज्ञिताः ॥
कुशासनं सदापूतं जपहोमार्चनादिषु।
कुशेनैव कृतं कर्म सर्वमानन्त्यमश्नुते ॥
तस्मात् कुशपवित्रं तु धारयेद्विधिकर्मणि।

**भूतोच्चाटनम्** - वामदेव ऋषिः । प्रकृतिश्छन्दः । सत्यो देवता । समस्त भूतोच्चाटने विनियोगः

अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥
अपक्रामन्तु ये भूताः क्रूराश्चैव तु राक्षसाः ।
ये चात्र निवसन्त्येव देवता भुवि सन्ततम् ॥
भूतप्रेतपिशाचा ये ये चान्ये भुवि भारकाः ।
तेषामप्यविरोधेन ब्रह्मकर्म समारभे ॥
अपक्रामन्तु ये भूताः क्रूराश्चैव तु राक्षसाः ।
ये चात्र निवसन्त्येव देवता भुवि सन्ततम् ॥

'ॐ निरस्तः परावसुः' इति मन्त्रेण आसनात् तृणं प्रत्यग्दक्षिणं निरस्य अप उपस्पृश्य ॐ इदमहमर्वावसोः सदने सिदामि।

**आसनपरिकल्पनम्** - कृष्णाजिनं व्याघ्रचर्म कौशेयं वेत्रनिर्मितम्।
वस्त्राजिनं कम्बलं वा कल्पयेदासनं मृदु ॥
वंशादाहुर्दरिद्रत्वं पाषाणे व्याधिसम्भवम्।
धरण्यां दुःखसम्भूतिः दौर्भाग्यं दारवासने ॥
तृणासने यशोहानिः पल्लवे चित्तविभ्रमम्।
दर्भासने व्याधिनाशः कम्बलं दुःखमोचनम् ॥

मेरुपृष्ठ ऋषिः । सुतलं छन्दः । कूर्मो देवता

पृथ्वित्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥

ॐ मं मण्डूकाय नमः । कूं कूर्माय । वं वराहाय । अं अनन्ताय । कां कालाग्निरुद्राय । वं वज्राय नमः - इति जपेत् । आसने सोममण्डले कूर्मस्कन्दे उपविष्टोस्स्मि - इति आसनं परिकल्पयेत् ।

दिग्बन्धनम् - ॐ सहस्रार हुं फट्, ॐ रं प्राकारावस्थितवह्नये नमः इति अग्निप्रकारः ।

ॐ सहस्रार हुं फट् ऐन्द्र्यां दिशि बध्नामि रक्षरक्ष नमः ।
ॐ सहस्रार हुं फट् आग्नेय्यां दिशि बध्नामि रक्षरक्ष नमः ।
ॐ सहस्रार हुं फट् याम्यां दिशि बध्नामि रक्षरक्ष नमः ।
ॐ सहस्रार हुं फट् नैर्ऋत्यां दिशि बध्नामि रक्षरक्ष नमः ।
ॐ सहस्रार हुं फट् वारुण्यां दिशि बध्नामि रक्षरक्ष नमः ।
ॐ सहस्रार हुं फट् वायव्यां दिशि बध्नामि रक्षरक्ष नमः ।
ॐ सहस्रार हुं फट् सौम्यां दिशि बध्नामि रक्षरक्ष नमः ।
ॐ सहस्रार हुं फट् ऐशान्यां दिशि बध्नामि रक्षरक्ष नमः ।
ॐ सहस्रार हुं फट् सर्वदिक्षु बध्नामि रक्षरक्ष नमः (इति क्रमेण सुदर्शनास्त्र स्थाने तत्तत् अस्त्रमन्त्रं संयोज्य दिग्भन्धनं कुर्यात् )

गुरुनमस्कारः - ॐ श्रीगुरुभ्यो नमः । परमगुरुभ्यो । परमेष्ठिगुरुभ्यो । श्रीमदानन्दतीर्थगवत्पादाचार्येभ्यो । श्रीवेदव्यासाय । ब्रह्मणे । वायवे । सरस्वत्यै । भारत्यै । लक्ष्मीनारायणाय नमः

करशुद्धिः - ॐ यं, ॐ यं - इति मणिबन्धयोः । ॐ रं, ॐ रं - इति प्रकोष्ठयोः । ॐ वं, ॐ वं - इति कूर्परयोः । ॐ रं, ॐ रं -इति हस्तपृष्ठयोः । ॐ वं, ॐ वं - इति हस्तपार्श्वयोः ।

नाडिशुद्धिः - ॐ अं विश्वाय नमः ॐ इति त्रिवारमुक्त्वा, पिङ्गलाया (दक्षिणनाड्या) वायुं विमुच्य, ॐ अं विश्वाय नमः ॐ इति षड्वारं उक्त्वा

तत्रैव वायुमापूर्य, ॐ अं विश्वाय नमः ॐ इति द्वादशवारमुक्त्वा कुम्भकं कृत्वा, इडया (वामनाड्या) विमुञ्चेत् । पुनः ॐ उं तेजसाय नमः ॐ इति त्रिवारमुक्त्वा इडया वायुं विमुच्य, ॐ उं तेजसाय नमः ॐ इति षड्वारं उक्त्वा तत्रैव वायुमापूर्य ॐ उं तेजसाय नमः ॐ इति द्वादशवारमुक्त्वा कुम्भकं कृत्वा पिङ्गलाया रेचयेत् । पुनः ॐ अं विश्वाय नमः ॐ, ॐ उं तेजसाय नमः ॐ इति षड्वारं उक्त्वा इडया पिङ्गलाया च वायुमापूर्य, नासपुटौ बद्ध्वा वायुं सुषुम्नाद्वारे आकृष्य ॐ मं प्राज्ञाय नमः ॐ इति षड्वारं उक्त्वा, सुषुम्नामार्गं सम्पूर्य, ॐ मं प्राज्ञाय नमः ॐ इति द्वादशवारमुक्त्वा कुम्भकं कृत्वा वायुं प्रत्ययेन विमुञ्चेत् ।

भूतशुद्धिः - भूतशुद्धिं विना कर्तुर्जपहोमादिकाः क्रियाः ।
भवन्ति निष्फलाः सर्वा यथाविध्यप्यनुष्ठिताः ॥

चतुरश्रं पीतलं वज्रलाञ्छितं शब्दादिपञ्चभिर्युतं पृथिवीतत्वं ध्यात्वा, ॐ श्लां हुं फट् इति पञ्चवारं प्राणायामं कृत्वा, ॐ श्लां नमः पराय अनिरुद्धाय पृथिव्यात्मने हुं फट् इति पादाग्रादिजान्वन्तं व्यापयेत् । अर्धचन्द्राकारं सुश्वेतं पद्मलाञ्छितं शब्दा दिचतुर्भिर्युतं अप्तत्वं ध्यात्वा, ॐ ष्वां हुं फट् इति चतुर्वारं प्राणायामं कृत्वा, ॐ ष्वां नमः पराय प्रद्युम्नाय अबात्मने हुं फट् इति जान्वादिगुह्यान्तं व्यापयेत् । त्रिकोणाकारं रक्तं स्वस्तिकलाञ्छितं शब्दादित्रययुतं तेजस्तत्वं सन्ध्यात्वा, ॐ स्त्रां हुं फट् इति प्राणायामत्रयं कृत्वा, ॐ स्त्रां नमः पराय सङ्कर्षणाय तेजआत्मने हुं फट् इति गुह्यादिनाभ्यन्तं व्यापयेत् । वृत्ताकारं धूम्रं षट्विन्दयलाञ्चितं शब्दस्पर्शान्वितं वायुस्तत्वं ध्यात्वा, ॐ ह्यां हुं फट् इति द्विवारं प्राणायामं कृत्वा, ॐ ह्यां नमः पराय वासुदेवाय वाय्वात्मने हुं फट् इति नाभ्यादिनासिकान्तं व्यापयेत् । निरूपमाकारं नीलोत्पलदलवर्णं शब्दान्वितं आकाशतत्वं सन्ध्यात्वा, ॐ क्ष्मां हुं फट् इति एकवारं प्राणायामं कृत्वा, ॐ क्ष्मां नमः पराय नारायणाय आकाशात्मने हुं फट् इति नासिकादिमूर्धन्या व्यापयेत् ।

पापपुरुषविसर्जनम्* - वामकुक्षिं स्पृष्ट्वा,

ॐ ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् ।
सुरापानाहृदायुक्तं गुरुतल्पकटिद्वयम् ॥
तत्संयोगपदद्वन्द्वमङ्गाप्रत्यङ्गपातकम् ।
उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ॥
खड्गचर्मधरं कृष्णं कुक्षौ पापं विचिन्तयेत् ।

इति पापपुरुषं ध्यात्वा, ॐ यम् इति षड्वारं जपन् पूरकप्राणायामं कृत्वा, मनसि प्रद्युम्नरूपं स्मरन् पापपुरुषं शोषयेत् । पुनः अनिरुद्धरूपं स्मरन् स्वशरीरयुतं पापपुरुषं कुम्भके ॐ रम् इति द्वादशवारमावर्तितेन तदुत्येनाग्निना दहेत् । पुनः ॐ यम् इति षोडशवारं जपित्वा सङ्कर्षणरूपं स्मरन् दक्षिणनाड्या तद्भस्म स्वशरीराद्बहिः रेचयेत् । पुनः कुम्भकं कृत्वा, स्वशिर उपरि सुधाकलशहस्तं वासुदेवरूपं स्मरन् ॐ वम् इति चतुर्विंशतिवारं जपन् अमृतेन स्नातं इति विभावयेत् ।

(*पक्षान्तरे - तं नाभिमानीय नाभिं स्पृष्ट्वा, ॐ यं षट्कोणमण्डलमध्यस्थो नीलवर्णो वाय्वान्तर्यामी श्रीप्रद्युम्नो भगवान् मच्छरीरस्थं पापपुरुषं वायुना शोषयतु ॐ यं इति षड्वारं जपेत् । हृदयं स्पृष्ट्वा, ॐ रं त्रिकोणमण्डलमध्यस्थो रक्तवर्णः अग्न्यन्तर्यामि श्रीमदनिरुद्धो भगवान् मच्छरीरस्थं पापपुरुषं वह्निना निर्दहतु ॐ रं इति द्वादशवारं जपेत् ।
ॐ नासाग्रस्थः सङ्कर्षणो भगवान् मच्छरीरस्थितदग्धपुरुषस्य भस्म निस्सारयतु इति वामनासपुटेन रेचयेत् । शिरः स्पृष्ट्वा, ॐ वं वर्तुलमण्डल मध्यस्थो श्वेतवर्णः वरुणान्तर्यामि वासुदेवो भगवान् मच्छरीरं अमृतवृष्ट्या आप्लावयतु ॐ वं इति चतुर्विंशतिवारं जपेत् ।)

अश्वमेधशिरस्कं च महादानभुजद्वयम् ।
सोमपानहृदायुक्तं ब्रह्मचर्यकटिद्वयम् ॥
सत्सङ्गपदद्वन्द्वं च साङ्गोपाङ्गशुभक्रियम् ।
सर्वसुव्रतरोमाणं गुरुसेवादिलोचनम् ॥
सार्धकोटितीर्थाङ्गं सर्वदेवमयं शुभम् ।

सिंहासने समासीनं जयशब्दसमन्वितम् ॥ इति पुण्यं हृदि भावयेत् ।
ॐ क्ष्मां नमः इति प्राणायामं कृत्वा, ॐ क्ष्मां नमः पराय नारायणाय आकाशात्मने नमः इति मूर्ध्न्यादिनासिकान्तं व्याप्य, पुनः ॐ ह्यां नमः इति द्विवारं प्राणायमं कृत्वा, ॐ ह्यां नमः पराय वासुदेवाय वाय्वात्मने नमः इति नासिकादिनाभ्यान्तं व्यापयेत् । ॐ स्त्रां नमः इति प्राणयामत्रयं कृत्वा, ॐ स्त्रां नमः पराय सङ्कर्षणाय तेजआत्मने नमः इति नाभ्यादिगुह्यान्तं व्याप्य, पुनः ॐ ष्वां नमः इति चतुर्वारं प्राणायामं कृत्वा ॐ ष्वां नमः पराय प्रद्युम्नाय अबात्मने नमः इति गुह्यादिजान्वन्तं व्यापयेत् । ॐ श्लां नमः इति पञ्चवारं प्राणायामं कृत्वा, ॐ श्लां नमः पराय अनिरुद्धाय पृथिव्यात्मने नमः इति जान्वादिपादान्तं व्यापयेत् ।

तत्वन्यासः - अन्तर्यामी ऋषिः । दैवी गायत्री छन्दः । शक्त्यादितत्वरूपी पुरुषादि तत्वान्तर्यामि लक्ष्मीनारायणो देवता
ॐ भूः हृदयाय नमः । भुवः शिरसे स्वाहा । स्वः शिखायै वषट् । भूर्भुवःस्वः। कवचाय हुम् । सत्यं अस्त्राय फट्

ध्यानम् - उद्यद्भास्वत्समाभासश्चिदानन्दैकदेहवान् ।
चक्रशङ्खगदापद्मधरो ध्येयोऽहमीश्वरः ॥
लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः ।
ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ॥
सेव्यमानोऽधिकं भक्त्या नित्यनिश्शेषशक्तिमान् ।
प्रधानोपवर्णानि द्विभुजान्यप्यशेषतः ।
कृताञ्जलिपुटान्येव प्रधानं तं हरिं प्रति ॥

न्यासमन्त्राः - ॐ पराय शक्त्यात्मने नमः । प्रतिष्ठात्मने । संविदात्मने । स्फूर्त्यात्मने । प्रवृत्त्यात्मने । कलात्मने । विद्यात्मने । मत्यात्मने । नियत्यात्मने । मायात्मने । कालात्मने । ॐ पराय पुरुषात्मने नमः - इति द्वादशमन्त्राः हृदये प्रदक्षिणं मालाकारेण न्यसेत् । दक्षिणबाहौ - ॐ पराय अव्यक्तात्मने नमः । वामबाहौ - महदात्मने । दक्षिणोरौ- अहङ्कारात्मने ।

वामोरौ - मनआत्मने । दक्षिणहस्ताङ्गुष्ठादि तत्कनिष्ठिकान्तं क्रमेण - श्रोत्रात्मने । त्वगात्मने । चक्षुरात्मने । जिह्वात्मने । घ्राणात्मने । वामहस्ताङ्गुष्ठादि तत्कनिष्ठिकान्तं क्रमेण - वागात्मने । पाण्यात्मने । पादात्मने । पाय्वात्मने । उपस्थात्मने । दक्षिणपादाङ्गुष्ठादि तत्कनिष्ठिकान्तं क्रमेण - शब्दात्मने । स्पर्शात्मने । रूपात्मने । रसात्मने । गन्धात्मने । वामपादाङ्गुष्ठादितत्कनिष्ठिकान्तं क्रमेण - आकाशात्मने । वाय्वात्मने । तेजआत्मने । अबात्मने । ॐ पराय पृथिव्यात्मने नमः - इति न्यसेत् ।

**मातृकाप्राणायामः** - पिङ्गलया वायुं विमुच्य, इडया वायुमापूर्य कुम्भकं कृत्वा, ॐ अं अजाय नमः ॐ इत्यादि ॐ अः अर्धगर्भाय नमः ॐ इत्यन्तं मनसा सञ्जप्य इडया वायुं विमुञ्चेत् । पुनः इडया वायुं विमुच्य पिङ्गलया वायुं प्रपूर्य कुम्भकं कृत्वा, ॐ कं कपिलाय नमः ॐ इत्यादि ॐ मं मनवे नमः ॐ इत्यन्तं मनसि सञ्जप्य पिङ्गलया वायुं विमुञ्चेत् । पुनः इडया पिङ्गलया च वायुमापूर्य नासपुटौ बद्ध्वा कुम्भकं कृत्वा, ॐ यं यज्ञाय नमः ॐ इत्यादि ॐ क्षं नरसिंहाय नमः ॐ इत्यन्तं मनसि सञ्जप्य इडया पिङ्गलाया च वायुं विमुञ्चेत् ।

**मातृकान्यासः** - अन्तर्यामी ऋषिः । दैवी गायत्री छन्दः । अजादिरूपी नारायणो देवता

ॐ भूः हृदयाय नमः । भुवः शिरसे स्वाहा । स्वः शिखायै वषट् । भूर्भुवःस्वः कवचाय हुम् । सत्यं अस्त्राय फट्

ध्यानम् - तादृग्रूपाश्च पञ्चाशज्ज्ञानमुद्राभयोद्यताः ।
टङ्की धन्वी च दण्डी च तत्तद्युक्तास्तु वामतः ॥
ध्यायेन्नृसिंहमुरुवृत्तरविन्त्रिणेत्रम् ।
जानुप्रसक्तकरयुग्ममथापराभ्याम् ॥
चक्रं दरं च दधतं प्रिययासमेतम् ।
तिग्मांशुकोट्यधिकतेजसमग्र्यशक्तिम् ॥

न्यासमन्त्राः : शिरसि - ॐ अं अजाय नमः ॐ । सर्वस्मिन्मुखे - आं आनन्दाय । दक्षिणनेत्रे - इं इन्द्राय । वामनेत्रे - ईं ईशाय । दक्षिणकर्णे - उं

उग्राय । वामकर्णे - ऊं ऊर्जाय । दक्षिणनासापुटे - ऋं ऋतम्भराय । वामनासापुटे - ॠं ॠधाय । दक्षिणगण्डे - ऌं ऌशाय । वामगण्डे - ॡं ॡजये । ऊर्ध्वोष्ठे - एं एकात्मने । अधरोष्ठे - ऐं ऐराय । ऊर्ध्वदन्तपङ्क्तौ - ओं ओजोभृते । अधरदन्तपङ्क्तौ - औं औरसाय । मूर्ध्नि - अं अन्ताय । वाचि - अः अर्धगर्भाय । दक्षिणहस्तसन्ध्यग्रेषु क्रमेण - कं कपिलाय । खं खपतये । गं गरुडासनाय । घं घर्माय । ङं ङसाराय । वामहस्तसन्ध्यग्रेषु क्रमेण - चं चार्वङ्गाय । छं छन्दोगम्याय । जं जनार्दनाय । झं झाटितारये । ञं ञमाय । दक्षिणपादसन्ध्यग्रेषु क्रमेण - टं टङ्किने । ठं ठलकाय । डं डरकाय । ढं ढरिणे । णं णात्मने । वामपादसन्ध्यग्रेषु क्रमेण - तं ताराय । थं थभाय । दं दण्डिने । धं धन्विने । नं नम्याय । दक्षिणकुक्षौ - पं पराय । वामकुक्षौ - फं फलिने । पृष्ठे - बं बलिने । गुह्ये - भं भगाय । तुन्दे - मं मनवे । हृदये - यं यज्ञाय । त्वचि - रं रामाय । चर्मणि - लं लक्ष्मीपतये । मांसे - वं वराय । रुधिरे- शं शान्तसंविदे । मेदसि - षं षड्गुणाय । मज्जायां - सं सारात्मने । अस्थिसन्धिषु - हं हंसाय । प्राणे - ळं ळाळुकाय । जीवे - ॐ क्षं नरसिंहाय नमः ॐ

# ॥ पूजापटलः ॥

**पूर्वाङ्गम् -** अथ अर्चकः स्नात्वा, नित्यकर्मानुष्ठानं कृत्वा, गर्भगृहस्य पुरतः तिष्ठन्, द्वारपालदेवते संवन्द्य, घण्टानादनं कृत्वा, अस्त्रमन्त्रेण द्वारं जलेन प्रोक्ष्य, नेत्राङ्गमन्त्रेण द्वारमुद्धाट्य दक्षिणपादपुरस्सरं गर्भगृहं प्रविश्य, मूलमन्त्रेण 'देवतां' अभिवन्द्य, विष्णौ श्रीसूक्तादिभिः अन्येषु मूलवेदोक्तोपचारमन्त्रैः निर्माल्यं विसृज्य, निर्माल्यधारिणे तन्मन्त्रेण समर्प्य, जलेन पीठं गर्भगृहमपि संशोध्य, मूलेन बिम्बे पुष्पं समर्प्य, वेदसूक्तैः अभिषेकं कुर्यात् ।

स्वस्य वामाग्रतः शङ्खं साधारं स्थापयेद्बुधः ।
तत्रैवार्घ्यादिपात्राणि न्यसेच्च द्वारि भागशः ॥
तुलसीगन्धपुष्पादिभाजनानि च दक्षिणे ।
वामे च स्थापयेत्पार्श्वे कलशं पूर्णमम्भसा ॥
दक्षिणे घृतदीपं च तैलदीपं च वामतः ।
सम्भारानपरान्न्यसेत्स्वदृष्टिविषये पदे ॥
करप्रक्षालनार्थं च पात्रमेकं स्वपृष्ठतः ।

पुरतः उपविश्य, प्राणानायम्य, भूतोच्चाटनादिकं विधाय, देशकालौ सङ्कीर्त्य 'देवतामूर्ति'प्रेरणया 'देवतामूर्ति'प्रीत्यर्थं 'देवता'पूजां करिष्ये इति सङ्कल्प्य गुरुं गणपतिं च संवन्द्य शङ्खपूजां कुर्यात् ।

**शङ्खपूजा -** ॐ फट् इति शङ्खं प्रक्षाल्य, ॐ ॐ ॐ इति पीठे निधाय, प्रतिलोमलिपिमन्त्रैः ॐ अं विश्वाय नमः ॐ इति च जलमापूर्य, ॐ उं तेजसाय नमः ॐ इति गन्धं विलोड्य, ॐ मं प्राज्ञाय नमः ॐ इति तुलसीपुष्पादिकं निक्षिप्य, शङ्खं - शङ्खे ॐ चन्द्रार्काभ्यां नमः, मध्ये ॐ वरुणाय नमः, पृष्ठे ॐ प्रजापतये नमः, अग्रे ॐ गङ्गासरस्वतीभ्यां नमः, जले ॐ गङ्गादित्रैलोक्यतीर्थाभिमानि देवताभ्यो नमः - इति आराधयेत् । ॐ पं पद्माय नमः इति पद्मपीठं सङ्कल्प्य, ॐ पावनाय नमः । पाञ्चजन्याय ।

पर्जन्याय । अम्बुजाय । कम्बुराजाय । पद्मबान्धवाय । धवलाय । निःस्वनाय । धृतकलाय नमः । ॐ ह्रीं पाञ्चजन्याय योगपद्मपीठात्मने नमः योगपद्मपीठं कल्पयामि - इति नवशक्तिपूजां विधाय, ॐ ह्रीं पाञ्चजन्याय नमः इति मूलमन्त्रेण पाञ्चजन्यं आवाह्य, मुद्राः दर्शयेत्।

अहिर्बुध्न्य ऋषिः । अनुष्टुप् छन्दः । पाञ्चजन्यो देवता

ॐ अच्युताय हृदयाय नमः । अनन्ताय शिरसे स्वाहा । गोविन्दाय शिखायै वषट् । अमृताय कवचाय हुम् । अधोक्षजाय नेत्राभ्यां वौषट् । नृसिंहाय अस्त्राय फट् । ध्यानम्- चक्रशङ्खादिबाणासिधारिणं वनमालिनम् ।

सर्वाभरणसंयुक्तं यजेत् शङ्खहरिं सदा ॥

लक्ष्मीभर्तुभुजाग्रे कृतवसति सितं यस्य रूपं विशालं
नीलाद्रेस्तुङ्गशृङ्गस्थितमिव रजनीनाथबिम्बं विभाति ।
पायान्नः पाञ्चजन्यस्सकलरिपुगणान् त्रासयन् पूरयन् स्वैः
निध्वानैर्नीरदौघध्वनिपरिभवदैरम्बरं कम्बुराजः ॥

ॐ ह्रीं पाञ्चजन्याय नमः इति मूलमष्टवारं सञ्जप्य, गन्धादि पञ्चोपचारैः पूजयेत् । ॐ पाञ्चजन्याय विद्महे वेदगर्भाय धीमहि । तन्नः शङ्खः प्रचोदयात् - इति प्रसन्नार्घ्यं दत्त्वा, 'ॐ भूर्भुवःस्वः ॐ' इति शङ्खोदकेन बिम्बं, पुजाद्रव्याणि, आत्मानं च प्रोक्ष्येत् । शङ्खं प्रक्षाल्य, पीठे निधाय मूलमन्त्रेण जलमापूर्य, गन्धपुष्पादिकं निक्षिपेत् ।

**कलशपूजा** - अग्रतः चतुरश्रमण्डलं कृत्वा, ॐ पं पद्माय नमः इति दर्भाक्षतपुष्पाणि निक्षिप्य, कुम्भं अस्त्रमन्त्रेण प्रोक्ष्य, कवचमन्त्रेण सूत्रं संवेष्ट्य, मूलमन्त्रेण कुम्भस्य अन्तः बहिश्च गन्धानुलिप्य ॐ ॐ ॐ इति सन्धूप्य, मण्डले अधोमुखं न्यसेत् । कुम्भं स्पृष्ट्वा, ॐ यम् इति वायुबीजं षड्वारं, ॐ रम् इति अग्निबीजं द्वादशवारं, ॐ वम् इति अमृतबीजं चतुर्विंशतिवारं च सञ्जप्य, क्रमात् शोषण दहन प्लावनं च भावयेत् । गायत्रीमन्त्रेण कुम्भोपरि दर्भान् विन्यस्य, वेदोक्तमन्त्रेण गन्धोदकं प्रोक्ष्य,

उपचारमन्त्रेण पुष्पाक्षतान् विकीर्य, ॐ भूर्भुवःस्वः ॐ इति उत्थाप्य, ॐ ॐ ॐ इति मण्डले ऊर्ध्वमुखं न्यसेत् । कुम्भे शन्नो देवीरिति मन्त्रेण जलमापूर्य, निर्विषीकरणादि मुद्राः प्रदर्श्य, गन्धद्वारामिति मन्त्रेण गन्धं विलोड्य, अर्चत प्रार्चत इति मन्त्रेण तुलस्यक्षतान्, आयने ते इति पुष्पं च निक्षिपेत् । वरुणं गङ्गादितीर्थाभिमानिदेवताश्च सम्पूज्य,

आधारः सर्वभूतानां विष्णोरतुलतेजसः ।
तद्रूपाश्च ततो जाता आपस्ताः प्रणमाम्यहम् ॥
गङ्गे च यमुने कृष्णे गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि चन्द्रभागे च कौशिकि ॥
स्वर्णलेखे कनखले पारिभद्रे च गण्डकि ।
श्वेतगङ्गे चन्द्ररेखे पम्पे चम्पे च गोमति ॥
पद्मावति विपर्णाशे विपाशे विरजे प्रभे ।
शतह्रदे चेलगङ्गे जलेस्मिन् सन्निधिं कुरु ॥ - इति प्रार्थयेत् ।

कुम्भोदके योगपद्मपीठं सङ्कल्प्य, 'देवतां' आवाह्य, गोलकचिन्तनं कृत्वा, पञ्चोपचारैः सम्पूज्य कलशाभिमन्त्रणं कुर्यात् ।

**बिम्बार्चनम्** - मूलेन बिम्बमाराध्य, पीठपूजां विधाय, अञ्जलौ पुष्पं गृहित्वा उपचारमन्त्रं उक्त्वा, बिम्बे 'देवतां' आवाह्य, मुद्राः सन्दर्श्य, मूलमन्त्रेण त्रिवारं व्याप्य, ऋष्यादिन्यासादिकं विधाय, 'देवतां' ध्यात्वा मूलमन्त्रं १०८ वारं जपेत् । दुर्गादिदेवतायां तत्तद्देवताऽन्तर्यामि नरसिंहादिरूपिणं परमात्मानं ध्यात्वा, तन्मन्त्रं जपेत् । शिवादि देवतायां तत्तद्देवताऽन्तर्यामि प्राणस्थ नरसिंहादिरूपिणं परमात्मानं ध्यात्वा तन्मन्त्रं च जपेत् । न्यासादिकं विधाय मूलमन्त्रेण षोडशोपचारैः पूजयेत् । स्नानकाले कलशेनाभिषिच्य, शालग्रामतीर्थेन तीर्थपात्रं पूरयेत् । वस्त्रोपवीतभूषण गन्धपुष्पाणि समर्प्य, आवरणपूजां विधाय, मूलमन्त्रेण धूपदीपौ सन्दर्श्य, नैवेद्यं समर्पयेत् ।

**नैवेद्यसमर्पणम्** - बिम्बस्य अग्रभागे भुवं संशोध्य, चतुरश्रमण्डलं कृत्वा, तत्र नैवेद्यं निधाय, तालत्रयादिभिः संरक्ष्य, घृतेनाभिघार्य निर्विषीकरणादि मुद्राः

सन्दर्शयेत् । विष्णुं विहाय अन्येषु शालग्रामस्थविष्णौ निवेदितं नैवेद्यं समर्पयेत् । 'ॐ भूर्भुवःस्वः ॐ' इति नैवेद्यं प्रोक्ष्य, 'ॐ सत्यं त्वर्तेन परिषिञ्चामि' इति परिषिच्य 'ॐ अन्तश्चरति भूतेषु गुहायां सर्वतोमुखः । त्वं यज्ञस्त्वं वषट्कारस्त्वं विष्णुः पुरुषः परः', मूलमन्त्रेण नैवेद्यं समर्प्य, 'ॐ अमृतोपस्तरणमसि स्वाहा' इति विष्णौ शङ्खोदकेन अन्येषु शालग्रामतीर्थेन आपोशनं दत्त्वा, ॐ प्राणाय स्वाहा, ॐ अपानाय स्वाहा, ॐ व्यानाय स्वाहा, ॐ उदानाय स्वाहा, ॐ समानाय स्वाहा इति मुद्राः सन्दर्श्य, मूलमन्त्रं यथाशक्ति जपेत् । बहिर्गत्वा कवाटं बद्ध्वा, पूजाहोमं कुर्यात् ।

**पूजाहोमः** - पाकगृहे अग्नेः पुरतः पूर्वाभिमुखः उपविश्य, अग्नेः परिसमूहन पर्युक्षणादिकं षोडशसंस्कारान् वैष्णवसंस्कारान् च कृत्वा, पीठपूजापुरस्सरं अग्नौ 'देवतां' आवाह्य, षोडशोपचारैः सम्पूज्य, नैवेद्यकाले 'देवतामूर्ति'मन्त्रेण अष्टोत्तरशतवारं आज्येन हुत्वा, पीठदेवतामन्त्रैः एकैकवारं, मूलमन्त्रेण १०८ वारं, आवरणमन्त्रैः एकैकवारं च सकृत्सकृत् चरून् हुत्वा, व्याहृत्या पूर्णां हुत्वा, प्रसन्नपूजां कुर्यात् । द्वारपालादिभ्यः बलिं दत्त्वा (अवशिष्टचरुणा आग्नेयकोणे वायव्यकोणे वा ॐ 'देवता'पार्षदेभ्यः सर्वेभ्यो भूतेभ्यः स्वाहा इति बलिं दत्त्वा,) पादौ प्रक्षाल्य, आचम्य, प्रदक्षिणगत्या मण्डपमागत्य, वाहनं पूजयेत् । मण्डपे उपविश्य ॐ पं पद्माय नमः इति पीठं सम्पूज्य, वाहनं तन्मन्त्रेण आवाह्य, पञ्चोपचारैः पूजयेत् ।

**नैवेद्यविसर्जनम्** - (द्वारदेवते अभिवन्द्य सम्पूज्य,) घण्टानादपुरस्सर कवाटमुद्घाट्य अन्तर्गत्वा उपविश्य, मूलेन पानीयं दत्त्वा, ॐ अमृतापिधानमसि स्वाहा इति उत्तरापोशनं दत्त्वा, नैवेद्यं विसृज्य किञ्चित् नैवेद्यभागं निर्माल्यधारिणे समर्प्य, स्थलं संशोध्य मूलमन्त्रेण गण्डूषं, हस्तप्रक्षालनं, मुखवासः, पुनराचमनीयं, ताम्बूलानि च समर्पयेत् । पुनः धूपदीपौ सन्दर्श्य, नीराज्य, छत्र-चामर-व्यजन-गीत-नृत्यादि राजोपचारान् समर्प्य, मूलमन्त्रं १०८ वारं जपेत् ।

**कर्मसमर्पणम्** - " 'कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यास्त्मना वास्नुसृत स्वभावः । करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पयामि', अनेन मया कृतेन 'देवता'पूजाकर्मणा 'देवतामूर्त्या'त्मक मध्वपति गोपालकृष्ण प्रीयताम्, कृष्णार्पणमस्तु" इति कर्मसमर्पणं कुर्यात् । ज्ञाताज्ञातदोष निवारणार्थं नामत्रयं जपित्वा, घण्टानादनं कृत्वा, अर्घ्यं दत्त्वा, मूलेन त्रिवारं व्याप्य रक्षेत् । प्रसादपुष्पं स्वशिरसि सन्धार्य, संवन्द्य, बहिर्निर्गच्छेत् । एकादशीदिवसे नैवेद्यसमर्पणं, विष्णुं विहाय अन्येषु गन्धपुष्पसमर्पणं च निषिद्धः ।

श्रीव्यासः -
अन्नं निवेदयेन्मह्यं प्राप्ते मद्वासरे शुभे ।
तस्यापि नरकप्राप्तिः किं पुनर्भोजने कृते ॥

- कृष्णामृतमहार्णवम्

एकादशीव्रतं नश्येत् नैवेद्यस्यार्पणान्मम ।
अन्नं वा फलमूलं वा जलं वा मे प्रयच्चसि ॥
पूजाकाले ममदिने हृदि शल्यं तदर्पितम् ।

- वराह

पावनं विष्णुनैवेद्यं सुभोज्यमृषिभिः स्मृतम् ।
अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत् ॥
पुष्पमन्नं फलं तोयं शिवस्थं न स्पृशेत् क्वचित् ।
लङ्घयेन्नैव निर्माल्यं कूपे सर्वं निक्षिपेत् ॥
पाद्मे : विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ।
पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्प्यते ॥

- कृष्णामृतमहार्णवम्

ब्रह्मनारदसंवादः -
पावनं विष्णुनैवेद्यं सुरसिद्धर्षिभिः स्मृतम् ।
अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत् ॥

- पाद्म

पवित्रं विष्णुनैवेद्यं सुरसिद्धर्षिभिः स्मृतम् ।
अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत् ॥
अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामशिलास्पर्शात् सर्वं याति पवित्रताम् ॥

- बह्वृचपरिशिष्ट

देवान् पितॄन् समुद्दिश्य यद्विष्णोर्विनिवेदितम् ।
तानुद्दिश्य तथा कुर्यात्प्रदानं तस्य चैव हि ॥
प्रयान्ति तृप्तिमतुलां सोदकेन तु तेन वै ।

- स्कान्दे

प्रशस्तं भगवद्भुक्तं पितृदेवादिकर्मसु ।
लब्धेन चान्यतस्तेन पुनर्यागोऽपि चोदितः ॥

- भारद्वाजसंहिता

निवेदितं तव विभो यो जुहोति ददाति वा ।
देवतानां पितॄणां च तृप्तिरानंत्यमश्नुते ॥

- पाद्म

शिवनिर्माल्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामशिलास्पर्शात् सर्वं याति पवित्रताम् ॥

- बृहन्नारदीय

नैवेद्यं गन्धपुष्पाद्यं द्रव्यं यज्जायते चिरात् ।
यन्माल्यं उपभुक्तं तन्निर्माल्यं अभिधीयते ॥
रजस्स्थण्डिललिङ्गस्थं शिवभुक्तोज्ञितं हि यत् ।
चण्डभोज्यं दुराधर्षं वर्जनीयं प्रयत्नतः ॥

- कामिकागम

कृत्वा हविश्चतुर्थांशं ऊर्ध्वांशं तु शिवाय च ।
ततस्त्वग्निकार्यार्थं अधस्ताद्बलिकर्मणे ॥
तदंशं पात्रसंश्लिष्टं पूजकाय प्रदापयेत् ।
अग्निकार्यावशिष्टं च बलिशिष्टं च यद्धविः ॥

तत्सर्वं पूजकायैव प्रोक्तमत्र यथाऽधुना ।
नैवेद्यं तु प्रदातव्यं मनसा तदसम्भवे ॥

- इति च

सदाशिवस्य निर्माल्यं मनुष्याणां न भोजनम् ।
पशूनांश्च गजादीनां वा जले वाथ निक्षिपेत् ॥
अथवा वह्निनादाह्य भूमौ वा खनयेत् बुधः ।
सकलानान्तु नैवेद्यं परिचारकभोजनम् ॥
तदप्यं यजनैश्चैव भोजने त्वथदोषकृत् ।

- सुप्रभेधागम

जपाक्षतार्कधत्तूरान्विष्णौ नैवार्पयेत्क्वचित् ।
केतकीं कुटजं कुन्दं बन्धूकं केसरं जपाम् ॥
मालतीपुष्पकं चैव नार्पयेत्तु महेश्वरम् ।
मातुलिङ्गं च तगरं रवौ नैवार्पयेत्क्वचित् ॥
शाक्तौ दूर्वार्कमन्दारान् गणेशे तुलसीं त्यजेत् ।

- बृहन्नारदीय

## ॥ कलशपूजापटलः ॥

**पूर्वाङ्गम्** - अथ आचम्य, प्राणानायम्य, भूतोच्चाटनादिकं विधाय, देशकालौ सङ्कीर्त्य, 'बिम्बशुद्ध्यर्थं बिम्बस्थसमस्तदोषपरिहारपूर्वक सम्पूर्णकलासानिध्यसिद्ध्यर्थं च स्नपनाङ्ग (यथाशक्ति परिकलशैः सह ब्रह्म)कलशपूजां करिष्ये' इति सङ्कल्प्य, घण्टानादनं कृत्वा, शङ्खपूजां विधाय, गुरुं गणपतिं च पूजयेत्।

**वर्धनीकटाहपूजा** - कलशक्षेत्रस्य उत्तरदिग्भागे पद्ममण्डलोपरि, सूत्रादि वेष्टितं पुष्पमालादिभिः अलङ्कृतं कटाहं संस्थाप्य, अप्सूक्तादिभिः शुद्धजलं प्रपूर्य, निर्विषीकरणादि मुद्राः सन्दर्श्य, सुवर्णादिलोहैर्कृत कूर्मद्वयं मत्स्यद्वयं च निक्षिपेत्।

विष्णौ कटाहोदके परदेवतादिपीठपूजापुरस्सरं अङ्गाऽवरणादिसहितं षोडशोपचारैः मत्स्यरूपं सम्पूज्य, विष्णुसूक्त-वरुणसूक्त-शन्नस्सूक्तादिभिः अभिमन्त्रणं कुर्यात्। अन्येषु ॐ पं पद्माय नमः इति पद्मपीठं सङ्कल्प्य, ॐ सुधायै नमः। कुमुदिन्यै। पूर्णायै। वारुण्यै। विश्वतोमुख्यै। तरङ्गिण्यै। सुरसायै। सुशीलायै। आप्यायिन्यै नमः। ॐ वं वरुणाय योगपद्मपीठात्मने नमः - योगपद्मपीठं कल्पयामि इति नवशक्ति पूजां विधाय वरुणमावाहयेत्। ध्रुवासुत्वासु इति वसिष्ठो वरुणस्त्रिष्टुप्। वरुणावाहने विनियोगः

ॐ ध्रुवासु त्वासु क्षितिषु क्षि यन्तो व्य१स्मत्पाशं वरुणो मुमोचत्।
अवो वन्वाना अदितेरुपस्थाद्यूयं पात स्वस्तिभिः सदा नः॥

ॐ भूर्भुवःस्वः वरुणमावाहयामि, इत्यावाहयेत्। इमं मे सिन्धुक्षित् प्रैयमेधः नद्यो जगती। आवाहने विनियोगः

ॐ इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया॥

'ॐ भूर्भुवःस्वः गङ्गादित्रैलोक्यतीर्थाभिमानिदेवताः आवाहयामि' इति आवाह्य,

आधारः सर्वभूतानां विष्णोरतुलतेजसः ।
तद्रूपाश्च ततो जाता आपस्ताः प्रणमाम्यहम् ॥
गङ्गे च यमुने कृष्णे गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि चन्द्रभागे च कौशिकि ॥
स्वर्णलेखे कनखले पारिभद्रे च गण्डकि ।
श्वेतगङ्गे चन्द्ररेखे पम्पे चम्पे च गोमति ॥
पद्मावति विपर्णाशे विपाशे विरजे प्रभे ।
शतह्रदे चेलगङ्गे जलेस्मिन् सन्निधिं कुरु ॥ - इति प्रार्थयेत् ।

जले आवाहितदेवताः पञ्चोपचारैः सम्पूज्य, नीराज्य, मत्स्यरूपिपरमात्मानं ध्यत्वा, मात्स्यमन्त्रं सञ्जप्य, वेदादिभिः अभिमन्त्रणं कुर्यात् ।

**पीठार्चनम् -** शालिभिः स्थण्डिलं कृत्वा केवले स्थण्डिले तु वा ।
पूर्वाग्रानुत्तराग्रांश्च कुशास्तत्र परिस्तिरेत् ॥
योगपीठं समभ्यर्च्य गन्धपुष्पादिभिः पुमान् ।

धान्यादिभिः कृतं पीठं ॐ फट् इति प्रोक्ष्य, शोषण-दहन-प्लावनानि कृत्वा, तदुपरि ॐ ॐ ॐ इति साग्रदर्भानास्तीर्य, परमपुरुषादिपद्मान्तं पीठपूजां विधाय, ॐ पं पद्माय नमः इत्यष्टदलपद्मं सङ्कल्प्य, कर्णिकायां मण्डलत्रयं गुणत्रयं च सम्पूज्य, क्रमेण पूर्वादि अष्टदलेषु कर्णिकायां च तत्तद्देवता नवशक्तीः आवाहयेत् ।

पुनः विष्णौ पद्ममध्ये ॐ योगपीठस्वरूपाय अनन्ताय नमः इत्यनन्तं आवाह्य, ॐ पीठदेवाताभ्यो नमः इत्युक्त्वा, गन्धादि पञ्चोपचारैः सम्पूज्य, नीराज्य, तालत्रय दिग्बन्धनादिभिः रक्षां कुर्यात् ।

**कुम्भसंस्कारः -** घटं प्रक्षाल्य सूत्रेण त्रिवृता वेष्टयेदथ ।
धूपयेद्बहिरन्तश्च पद्मेऽन्यत्सादयेत्पुनः ॥
कुम्भमधोमुखं न्यस्य संस्काराण्यथ कल्पयेत् ।
शोषयेद्वायुबीजेन वह्निबीजेन दाहयेत् ॥

वारुणेनाथ बीजेन प्लावयेत् देशिकोत्तम।
कुशानुपरि संस्तीर्य प्राङ्मुखं परमेष्ठिना॥
दर्भमुद्रा प्रदर्श्याथ गन्धतोयेन सर्वतः।
सम्प्रोक्ष्य पुंसा विश्वेन विकिरेदक्षतानि च॥
निवृत्या चोन्मुखीकृत्य सर्वेण मुनिपुङ्गव।
पृथगुद्धृत्य कलशान् स्वस्थानेषु क्रमान्न्यसेत्॥
कुम्भमुद्रा प्रदर्श्याथ पूजयेत् मूलविद्यया।

अस्त्रमन्त्रेण कुम्भं प्रोक्ष्य, कवचमन्त्रेण त्रिगुणीकृतसूत्रं वेष्टयित्वा, मूलमन्त्रेण अन्तर्बहिश्च गन्धं विलिप्य, ॐ ॐ ॐ इति सन्धूप्य, पीठसमीपे दर्भासने अधोमुखं न्यसेत्। ततः दर्भद्वयेन कुम्भं स्पृष्ट्वा ॐ यम् इति वायुबीजं षड्वारं, ॐ रम् इति अग्निबीजं द्वादशवारं, ॐ वम् इति अमृतबीजं चतुर्विंशतिवारं च सञ्जप्य, क्रमात् शोषणं-दहनं-प्लावनं च भावयेत्। दर्भान् विच्छिद्य नैर्ऋत्ये निरस्येत्। हस्तं प्रक्षाल्य विष्णौ - ॐ षां नमः पराय वासुदेवाय परमेष्ठ्यात्मने स्वाहा इति कुम्भोपरि दर्भान् विन्यस्य, दर्भमुद्रा प्रदर्श्य, ॐ यां नमः पराय सङ्कर्षणाय पुरुषात्मने स्वाहा इति गन्धोदकेन प्रोक्ष्य, ॐ रां नमः पराय प्रद्युम्नाय विश्वात्मने स्वाहा इति पुष्पाक्षतान् विकीर्य, ॐ वां नमः पराय अनिरुद्धाय निवृत्त्यात्मने स्वाहा इति कुम्भं उत्तानीकृत्य, ॐ लां नमः पराय नारायणाय सर्वात्मने स्वाहा, 'ॐ ॐ ॐ' इति पूजितपीठे न्यसेत्। लक्ष्म्यां- ॐ लां लक्ष्म्यै नमः परमलक्ष्मावस्थितायै लां श्रीं ह्रीं स्वाहा इति कुम्भोपरि दर्भान् विन्यस्य, दर्भमुद्रा प्रदर्श्य, ॐ कां कीर्त्यै नमः सदोदितानन्दविग्रहायै ह्रीं क्रीं स्वाहा इति गन्धोदकेन प्रोक्ष्य, ॐ जां जयायै नमः अजितधामावस्थितायै जां ज्रीं स्वाहा इति पुष्पाक्षतान् विकीर्य, ॐ मां मायायै नमः मोहातीतपदाश्रितायै मां म्रीं स्वाहा इति कुम्भं उत्तानीकृत्य, ॐ श्रीं ह्रीं क्लीं ऐं लक्ष्मी कमलधारिणी सिंहवाहिनी स्वाहा ॐ श्रीं श्रियै नमः इति पूजितपीठे न्यसेत्। दुर्गायां - 'जातवेदसे' इति मन्त्रेण कुम्भोपरि दर्भान् विन्यस्य, दर्भमुद्रा

प्रदर्श्य, 'तामग्निवर्णां' इति मन्त्रेण गन्धोदकेन प्रोक्ष्य, 'अग्ने त्वं पारया' इति मन्त्रेण पुष्पाक्षतान् विकीर्य, 'विश्वानि नो' इति मन्त्रेण कुम्भं उत्तानीकृत्य, 'पृतनाजितग्ं' इति मन्त्रेण पूजितपीठे न्यसेत् । हनुमति - ॐ प्राणाय नमः इति कुम्भोपरि दर्भान् विन्यस्य, दर्भमुद्रा प्रदर्श्य, ॐ अपानाय नमः इति गन्धोदकेन प्रोक्ष्य, ॐ व्यानाय नमः इति पुष्पाक्षतान् विकीर्य, ॐ उदानाय नमः इति कुम्भं उत्तानीकृत्य, ॐ समानाय नमः इति पूजितपीठे न्यसेत् । शिवे - सद्योजातमन्त्रेण कुम्भोपरि दर्भान् विन्यस्य, दर्भमुद्रा प्रदर्श्य, वामदेव मन्त्रेण गन्धोदकेन प्रोक्ष्य, अघोरमन्त्रेण पुष्पाक्षतान् विकीर्य, तत्पुरुष मन्त्रेण कुम्भं उत्तानीकृत्य, ईशानमन्त्रेण पूजितपीठे न्यसेत् । अन्येषु गायत्र्या कुम्भोपरि दर्भान् विन्यस्य, दर्भमुद्रा प्रदर्श्य, वेदोक्तमन्त्रेण गन्धोदकेन प्रोक्ष्य, उपचारमन्त्रेण पुष्पाक्षतान् विकीर्य, समस्तव्याहृत्या कुम्भं उत्तानीकृत्य, प्रणवमूलमन्त्रैः पूजितपीठे न्यसेत् । कुम्भे मूलमन्त्रेण 'देवतां' आवाह्य मुद्राः प्रदर्श्य, त्रिवारं व्याप्य, ऋष्यादिन्यासं, अङ्गन्यासं, मन्त्राक्षरन्यासं च विधाय 'देवतां' ध्यात्वा, मूलमन्त्रमष्टवारं जपेत् । कुम्भरूपिणे(ण्यै) नमः इत्युक्त्वा मूलेन गन्धादि पञ्चोपचारैः सम्पूज्य, कुम्भमुद्रां प्रदर्श्य, पुनः धूपदीपौ सन्दर्श्य, गायत्र्या अर्घ्यं दत्त्वा रक्षेत् ।

**कलशपूरणम्** - अष्टाविंशतिभिर्दर्भैः कृतं कूर्चं विनिक्षिपेत् ।
देवीनां तु श्रियादीनां त्रयोविंशतिभिः कुशैः ॥
पञ्चविंशतिभिर्दर्भैः रुद्रस्य परमेष्ठिनः ।
द्वाविंशद्भिः कुशैः कूर्चं कुर्यादन्यामृताशिनाम् ॥
लिपिमन्त्रं जपन्मन्त्री शुद्धाम्बुं परिपूरयेत् ।
एकपञ्चाशदर्णानां चतुर्विंशतिमूर्तयः ॥
आत्माद्या वासुदेवाद्या विश्वाद्या मत्स्यकच्छपौ ।
कोलो नृसिंहः सवटुर्जामदग्न्यरघूद्वहौ ॥
वासिष्ठयादवौ कृष्णावात्रेयो बुद्धकल्किनौ ।

शिंशुमारश्चेति शतं कलाः कलशनामकाः ॥
एताभिः सहितां मूलमूर्तिं कुम्भोदके सुधीः ।
कूर्चेन पल्लवन्यासो यथानेत्रमनोहरः ॥
अस्त्रमन्त्रेणतान्कुम्भान् शरावैरपिधापयेत् ।
नारिकेलफलैः तेषामलङ्कारः शुभोदयः ॥
वासोभिर्वेष्टयेत्कुम्भान् मण्डयेच्चन्दनाक्षतैः ।
देवमावाह्य सम्पूज्य योगपीठपुरस्सरम् ॥
अर्घ्यादि नमस्कारान्तं समभ्यर्च्य यथाविधि ।

कूर्चं ॐ फट् इति प्रोक्ष्य, (विष्णौ अष्टाविंशतिदर्भैः कृतं कूर्चं, देवीषु त्रयोविंशतिदर्भैः कृतं, अजरुद्रेषु पञ्चविंशतिदर्भैः कृतं, अन्येषु द्वाविंशतिदर्भैः कृतं च कूर्चम्) तस्य शोषण-दहन-प्लावनानि कृत्वा, गन्धं विलिप्य, अष्टवारं प्रणवं सञ्जप्य, कुम्भे न्यस्य कुम्भस्य मूलाधारे चतुर्दलपद्मस्थाः वासुदेवादि पञ्चमूर्तीः ध्यायेत् । कुम्भे मातृकामन्त्रैः पूजितजलमापूर्य, प्रणवेन हिरण्यगन्धतुलसीपुष्पादिकं निक्षिपेत् ।

ॐ पं पद्माय नमः इति कुम्भोदके पद्मपीठं सङ्कल्प्य, ॐ अं अजाय नमः अजं आवाहयामि इत्यादि क्रमेण कुम्भोदके अजादिशिंशुमारान्तशतमूर्तीः आवाह्य, 'अजादिशिंशुमारान्तशतमूर्तयः शतं कलाः कलशनामकाः' इत्युक्त्वा आवाहनादि मुद्राः प्रदर्श्य, 'देवतामूर्तिं' तन्मन्त्रेण कुम्भोदके आवाह्य, षोडशोपचारैः सम्पूज्य, नीराज्य, मातृकान्यासं केशवादिमूर्तिन्यासं च कुर्यात् । **केशवादिमूर्तिन्यासः** - शिरसि - ॐ केशवाय नमः । मुखे - नारायणाय । ग्रीवायां - माधवाय । बाह्वोः - गोविन्दाय । हृदये - विष्णवे । पृष्ठे - मधुसूधनाय । कट्यां - त्रिविक्रमाय । जठरे - वामनाय । दक्षजङ्घायां- श्रीधराय । वामजङ्घायां - हृषीकेशाय । गुल्फयोः - पद्मनाभाय । पादयोः - दामोदराय नमः । ललाटे - सङ्कर्षणाय । कुक्षौ - वासुदेवाय । हृदि - प्रद्युम्नाय । कण्ठे - अनिरुद्धाय । दक्षिणपार्श्वे - पुरुषोत्तमाय । दक्षिणांसे -

अधोक्षजाय । दक्षिणकण्ठे - नारसिंहाय । वामपार्श्वे - अच्युताय । वामांसे - जनार्दनाय । वामकण्ठे - उपेन्द्राय । पृष्ठे - हरये । पश्चाद्गले - ॐ कृष्णाय नमः नाभौ - ॐ आत्मने नमः । हृदये - अन्तरात्मने । भ्रूमध्ये - परमात्मने । शिरसि-ज्ञानात्मने । शिरसि - वासुदेवाय । नासिकायां - सङ्कर्षणाय । नाभौ - प्रद्युम्नाय । हृदि - अनिरुद्धाय । नाभौ - विश्वाय । हृदये - तेजसाय । भ्रूमध्ये - प्राज्ञाय । शिरसि - ॐ तुरीयाय नमः

शिरसि - मत्स्याय । पादयोः - कूर्माय । जङ्घयोः - वराहाय । ललाटे - नृसिंहाय । मुखमध्ये - वामनाय । नाभौ - परशुरामाय । हृदि - रामचन्द्राय । वाचि - वेदव्यासाय । कटौ - कृष्णाय । कण्ठे - दत्तात्रेयाय । गुह्ये - बुद्धाय । जान्वोः - कल्किने । मूर्ध्नि - ॐ शिंशुमाराय नमः

शिरोमन्त्रेण अश्वत्थादि पञ्चपल्लवानि, अस्त्रमन्त्रेण पूर्णपात्रं, फलं च न्यसेत् । कवचमन्त्रेण वस्त्रद्वयेन कलशं वेष्टयित्वा, पुष्पमालादिभिः अलङ्कृत्वा, गन्धाक्षतहिरण्यादिकं विन्यस्य, मूलमन्त्रेण शिरः कूर्चं च न्यसेत् । पीठपूजां विधाय, अञ्जलौ पुष्पं गृहित्वा उपचारमन्त्रं उक्त्वा, कलशे 'देवतां' आवाह्य, मुद्राः सन्दर्श्य, मूलमन्त्रेण त्रिवारं व्याप्य, मूलमन्त्रस्य ऋष्यादिन्यासं, अङ्गन्यासं, मन्त्राक्षरन्यासं च विधाय, 'देवतां' ध्यात्वा, मूलमन्त्रं अष्टोत्तरशतवारं जपेत् ।

**अथ न्यासाः** - गोळकाद्वितयं विष्णोस्त्रितयं वा प्रकीर्तितम् ।
अन्यदेवप्रतिष्ठासु तदन्तश्चिन्तयेद्धरिम् ॥
मन्त्रन्यासं ततो कृत्वा जपेदष्टोत्तरं शतम् ।
असुनीतेति मन्त्रेण प्रतिष्ठापनमाचरेत् ॥
प्राणं न्यस्त्वा सुषुम्नायां पिङ्गलायामपानकम् ।
पूषायां व्यानवायुं च उदानं हस्तिजिह्वयाम् ॥
समाननामकं न्यस्त्वा इडायां मुनिपुङ्गव ।
न्यसेत् पौरुषं सूक्तं देवाङ्गेषु यथाक्रमम् ॥

गायत्र्याः त्रीणि पादानि शिरः हृदयनाभिषु ।
किरीटं विन्यसेन्मूर्ध्नि सहस्रसोमसन्निभम् ॥
कुण्डलं विन्यसेद्विप्र श्रोत्रयोः मकरसंज्ञकम् ।
हृदये वनमालां च श्रीवत्सं कौस्तुभं न्यसेत् ॥
शङ्खचक्रगदापद्म न्यासः साधारणः स्मृतः ।
व्याहृतीसप्तकं न्यस्त्वा पादादिषु मुनीश्वर ॥
तत्वन्यासं लिपिन्यासं कृत्वा सम्पूजयेद्धरिम् ।

विष्णौ कुम्भस्थस्थाप्यमूर्त्यात्मकं कुम्भोदकस्थज्ञानानन्दरूपिणं परमात्मानं ध्यात्वा, अष्टाक्षरमन्त्रं सञ्जप्य,

तत्रतत्र स्थितं विष्णुं तत्तन्मूर्तिगतेन वै ।
एकीभूतं चिन्तयित्वा तद्रूपं व्याप्तरूपतः ॥ इति प्रार्थयेत् ।

दुर्गादिदेवतायां तत्तद्देवतान्तर्यामि नरसिंहादिरूपिणं परमात्मानं, शिवादिषु तत्तद्देवताऽन्तर्यामि प्राणस्थनरसिंहादिरूपिणं परमात्मानं च ध्यात्वा, तन्मन्त्रं सञ्जप्य,

तत्रतत्र स्थितो विष्णुस्तत्तच्छक्तीः प्रबोधयन् ।
एक एव महाशक्तिः कुरुते सर्वमञ्जसा ॥ इति प्रार्थयेत् ।

असुनीते मनो असुनीते पुनः पुनर्नो असुं इति मन्त्रत्रयाणां बन्धुः सुबन्धुः श्रुतबन्धुः विप्रबन्धुः गौपायना ऋषयः । त्रिष्टुप् छन्दः । प्राणो देवता

ॐ असुनीते मनो अस्मासु धारय जीवातवे सु प्र तिरा न आयुः ।
रारन्धि नः सूर्यस्य सन्दृशि घृतेन त्वं तन्वं वर्धयस्व ॥
असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम् ।
ज्योक्पश्येम सूर्यमुच्चरन्तमनुमते मृळया नः स्वस्ति ॥
पुनर्नो असुं पृथिवी ददातु पुनर्द्यौर्देवी पुनरन्तरिक्षम् ।
पुनर्नः सोमस्तन्वं ददातु पुनः पूषा पथ्यां३या स्वस्तिः ॥

वातायनोऽनिलर्षिः । त्रिष्टुप् छन्दः । प्राणो देवता

ॐ आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः ।
घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम ॥

प्राणादि न्यासः - शिरसि(सुषुम्नायां) - ॐ प्राणाय नमः

आस्ये(पिङ्गलयां) - ॐ अपानाय नमः

हृदये(पूषायां) - ॐ व्यानाय नमः

गुह्ये(हस्तिजिह्वयां) - ॐ उदानाय नमः

पादयोः(इडायां) - ॐ समानाय नमः

अङ्गुष्ठे - ॐ नागाय नमः

तर्जन्यां - ॐ कूर्माय नमः

मध्यमायां - ॐ कृङ्कलाय नमः

अनामिके - ॐ देवदत्ताय नमः

कनिष्ठिकायां - ॐ धनञ्जयाय नमः

विष्णौ विशेषन्यासाः, षडङ्गन्यासः -

ॐ पूर्णज्ञानात्मने हृदयाय नमः
ॐ पूर्णैश्वर्यात्मने शिरसे स्वाहा
ॐ पूर्णप्रभात्मने शिखायै वषट्
ॐ पूर्णानन्दात्मने कवचाय हुम्
ॐ पूर्णतेजआत्मने नेत्राभ्यां वौषट्
ॐ पूर्णशक्त्यात्मने अस्त्राय फट्
[ॐ हं नमः ॐ हंसः शुचिषदे हृदयाय नमः
ॐ हां नमः परंब्रह्मशिरसे स्वाहा
ॐ हीं नमः प्रद्योतनिशिखायै वषट्
ॐ हुं नमः शाश्वतशरण्यकवचाय हुम्
ॐ हैं नमः प्रकाशप्रज्वलनेत्राभ्यां वौषट्
ॐ हः नमः दीप्तोदृप्तप्रभाय अस्त्राय फट्
व्यापनम् - ॐ क्ष्रीं क्षिः नमः नारायणाय विश्वात्मने ह्रीं स्वाहा]

पञ्चोपनिषदन्यासः -

शिरसि - ॐ षां नमः पराय वासुदेवाय परमेष्ठ्यात्मने स्वाहा

आस्ये - ॐ यां नमः पराय सङ्कर्षणाय पुरुषात्मने स्वाहा

हृदये - ॐ रां नमः पराय प्रद्युम्नाय विश्वात्मने स्वाहा

गुह्ये - ॐ वां नमः पराय अनिरुद्धाय निवृत्त्यात्मने स्वाहा

पादयोः - ॐ लां नमः पराय नारायणाय सर्वात्मने स्वाहा

व्यूहमूर्तिन्यासः-

शिरसि - ॐ हं वासुदेवाय नमः

मुखमध्ये - ॐ सं सङ्कर्षणाय नमः

हृदये - ॐ षं प्रद्युम्नाय नमः

नाभौ - ॐ शं अनिरुद्धाय नमः

प्रणवन्यासः-

नाभौ - ॐ अं विश्वाय नमः ॐ

हृदये - ॐ उं तेजसाय नमः ॐ

शिरसि - ॐ मं प्राज्ञाय नमः ॐ

व्यापनम् - ॐ ॐ ॐ

व्याहृतिन्यासः -

नाभौ - ॐ भूः अनिरुद्धाय नमः ॐ

हृदये - ॐ भुवः प्रद्युम्नाय नमः ॐ

शिरसि - ॐ स्वः सङ्कर्षणाय नमः ॐ

सर्वाङ्गेषु - ॐ भूर्भुवःस्वः वासुदेवाय नमः ॐ

व्यापनम् - ॐ भूर्भुवःस्वः ॐ

विष्णुषडक्षरन्यासः -

पादयोः - ॐ विं विश्वाय नमः ॐ

जान्वोः - ॐ षं तेजसाय नमः ॐ

नाभौ - ॐ णं प्राज्ञाय नमः ॐ

हृदये –ॐ वें तुरीयाय नमः ॐ

वाचि - ॐ नं आत्मने नमः ॐ

शिरसि - ॐ मः अन्तरात्मने नमः ॐ

व्यापनम् - ॐ विष्णवे नमः ॐ

अष्टाक्षरन्यासः -

पादयोः - ॐ ॐ विश्वाय नमः ॐ

जान्वोः - ॐ नं तेजसाय नमः ॐ

नाभौ - ॐ मों प्राज्ञाय नमः ॐ

हृदये - ॐ नां तुरीयाय नमः ॐ

वाचि - ॐ रां आत्मने नमः ॐ

नासायाम् - ॐ यं अन्तरात्मने नमः ॐ

नेत्रयोः - ॐ णां परमात्मने नमः ॐ

शिरसि - ॐ यं ज्ञानात्मने नमः ॐ

व्यापनम् - ॐ ॐ नमो नारायणाय ॐ

द्वादशाक्षरन्यासः -

पादयोः - ॐ ॐ केशवाय नमः ॐ

जान्वोः - ॐ नं नारायणाय नमः ॐ

नाभौ - ॐ मों माधवाय नमः ॐ

हृदये - ॐ भं गोविन्दाय नमः ॐ

वाचि - ॐ गं विष्णवे नमः ॐ

नासायाम् - ॐ वं मधुसूदनाय नमः ॐ

नेत्रयोः - ॐ तें त्रिविक्रमाय नमः ॐ

शिरसि - ॐ वां वामनाय नमः ॐ

दक्षिणबाहौ - ॐ सुं श्रीधराय नमः ॐ

वामबाहौ - ॐ दें हृषीकेशाय नमः ॐ

दक्षिणोरौ - ॐ वां पद्मनाभाय नमः ॐ

वामोरौ - ॐ यं दामोदराय नमः ॐ

व्यापनम् - ॐ ॐ नमो भगवते वासुदेवाय ॐ

सवितागायत्रीन्यासः -

दक्षिणहस्तसन्ध्यग्रेषु क्रमेण -
ॐ तं केशवाय नमः ॐ
ॐ त्सं नारायणाय नमः ॐ
ॐ विं माधवाय नमः ॐ
ॐ तुं गोविन्दाय नमः ॐ
ॐ र्वं विष्णवे नमः ॐ

वामहस्तसन्ध्यग्रेषु क्रमेण -
ॐ रें मधुसूदनाय नमः ॐ
ॐ णिं त्रिविक्रमाय नमः ॐ
ॐ यं वामनाय नमः ॐ
ॐ भं श्रीधराय नमः ॐ
ॐ र्गों हृषीकेशाय नमः ॐ

दक्षिणपादसन्ध्यग्रेषु क्रमेण -
ॐ दें पद्मनाभाय नमः ॐ
ॐ वं दामोदराय नमः ॐ
ॐ स्यं सङ्कर्षणाय नमः ॐ
ॐ धीं वासुदेवाय नमः ॐ
ॐ मं प्रद्युम्नाय नमः ॐ

वामपादसन्ध्यग्रेषु क्रमेण -
ॐ हिं अनिरुद्धाय नमः ॐ
ॐ धिं पुरुषोत्तमाय नमः ॐ

ॐ यों अधोक्षजाय नमः ॐ

ॐ यों नारसिंहाय नमः ॐ

ॐ नः अच्युताय नमः ॐ

शिरसि - ॐ प्रं जनार्दनाय नमः ॐ

मुखे - ॐ चों उपेन्द्राय नमः ॐ

हृदि - ॐ दां हरये नमः ॐ

नाभौ - ॐ यां कृष्णाय नमः ॐ

व्यापनम् - ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ॐ

पुरुषसूक्तन्यासः- अस्य श्रीपुरुषसूक्तस्य अन्तर्यामी ऋषिः । अनुष्टुप् छन्दः अन्त्या त्रिष्टुप् । नारायणो देवता । न्यासे विनियोगः

वामकरे - ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॐ

दक्षिणकरे - ॐ पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॐ

वामपादे - ॐ एतावानस्य महिमातो ज्यायांश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॐ

दक्षिणपादे - ॐ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ्व्यक्रामत्साशनानशने अभि ॐ

वामजानुनि - ॐ तस्माद्विराळजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॐ

दक्षिणजानुनि - ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॐ

वामकट्याम् - ॐ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः ।

तेनं देवा अंयजन्त साध्या ऋषंयश्च ये ॐ

दक्षिणकट्यां - ॐ तस्मांद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् ।
पशून्तांश्चक्रे वायव्यांनारण्यान्ग्राम्याश्च ये ॐ

नाभौ - ॐ तस्मांद्यज्ञात्सर्वहुत ऋचः सामांनि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मांदजायत ॐ

हृदये - ॐ तस्मादश्वां अजायन्त ये के चोंभयादंतः ।
गावों ह जज्ञिरे तस्मात्तस्मांज्जाता अंजावयः ॐ

वामबाहौ - ॐ यत्पुरुषं व्यदंधुः कतिधा व्यंकल्पयन् ।
मुखं किमंस्य कौ बाहू का ऊरू पादां उच्येते ॐ

दक्षिणबाहौ - ॐ ब्राह्मणोंऽस्य मुखंमासीद्बाहू रांजन्यः कृतः ।
ऊरू तदंस्य यद्वैश्यः पद्भ्यां शूद्रो अंजायत ॐ

श्रोत्रयोः - ॐ चन्द्रमा मनंसो जातश्चक्षोः सूर्यो अजायत ।
मुखादिन्द्रंश्चाग्निश्चं प्राणाद्वायुरंजायत ॐ

आस्ये - ॐ नाभ्यां आसीदन्तरिक्षं शीर्ष्णो द्यौः समंवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथां लोकाँ अंकल्पयन् ॐ

नेत्रयोः - ॐ सप्तास्यांसन्परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तंन्वाना अबंध्नन्पुरुषं पशुम् ॐ

मूर्ध्नि - ॐ यज्ञेनं यज्ञमंयजन्त देवास्तानि धर्माणि प्रथमान्यांसन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्तिं देवाः ॐ

गायत्रीन्यासः -

शिरसि - ॐ नारायणाय विद्महे ।

हृदये - ॐ वासुदेवाय धीमहि ।

नाभौ - ॐ तन्नो विष्णुः प्रचोदयात् ।

व्यापनम् - ॐ नारायणाय.......प्रचोदयात् ।

भूषणन्यासः -

मूर्ध्नि - ॐ क्रं सहस्रदीधितितेजोविग्रहाय किरीटाय नमः

श्रोत्रयोः - ॐ मकरकुण्डलाय नमः

हृदये - ॐ स्त्रीं सौभाग्यजनन्यै वनमालायै नमः

हृदये - ॐ त्रं सर्वसम्पत्प्रदाय श्रीनिवासाय श्रीवत्साय नमः

हृदये - ॐ क्रों वाञ्छितार्थप्रदाय प्रभात्मने कौस्तुभाय नमः

दक्षिणपार्श्वे - ॐ श्रीं श्रियै नमः

वामपार्श्वे - ॐ भूं भुवे नमः

आयुधन्यासः -

दक्षिणोर्ध्वहस्ते - ॐ ज्रः क्रः फट् हूं नमः फट् फट् फड्विष्णुचक्राय सुदर्शनाय स्वाहा

वामोर्ध्वहस्ते - ॐ हूं हूं हूं नमः महाशङ्खाय पाञ्चजन्याय स्वाहा

वामाधोहस्ते - ॐ ग्म्लें जः नमः सहस्रश्रीगदे कौमोदक्यै स्वाहा

दक्षिणाधोहस्ते - ॐ ब्सुं नमः श्रीनिवासपद्माय स्वाहा

सप्तव्याहृतिन्यासः -

पादयोः - ॐ भूः ॐ

जान्वोः - ॐ भुवः ॐ

गुह्ये - ॐ स्वः ॐ

नाभौ - ॐ महः ॐ

हृदये - ॐ जनः ॐ

मुखे - ॐ तपः ॐ

शिरसि - ॐ सत्यं ॐ

तदनन्तरं तत्वन्यासं, मातृकान्यासं, केशवादिमूर्तिन्यासं च कुर्यात् ।

विष्णौ विशेषान्वितततत्वमन्त्राः -

ॐ ह्रीं नमः पराय नारायणाय शक्त्यात्मने नमः

ॐ क्षं नमः पराय नारायणाय प्रतिष्ठात्मने नमः

ॐ ळं नमः पराय नारायणाय संविदात्मने नमः

ॐ हं नमः पराय नारायणाय स्पूर्त्यात्मने नमः

ॐ सं नमः पराय नारायणाय प्रवृत्त्यात्मने नमः

ॐ षं नमः पराय नारायणाय कलात्मने नमः

ॐ शं नमः पराय नारायणाय विद्यात्मने नमः

ॐ वं नमः पराय नारायणाय मत्यात्मने नमः

ॐ लं नमः पराय नारायणाय नियत्यात्मने नमः

ॐ रं नमः पराय नारायणाय मायात्मने नमः

ॐ यं नमः पराय नारायणाय कालात्मने नम

ॐ मं नमः पराय परमपुरुषाय पुरुषात्मने नमः

ॐ भं नमः पराय कृष्णाय अव्यक्तात्मने नमः

ॐ बं नमः पराय उपेन्द्राय महदात्मने नमः

ॐ फं नमः पराय हरये अहङ्कारात्मने नमः

ॐ पं नमः पराय जनार्दनाय मनआत्मने नमः

ॐ नं नमः पराय अनिरुद्धाय श्रोत्रात्मने नमः

ॐ धं नमः पराय पुरुषोत्तमाय त्वगात्मने नमः

ॐ दं नमः पराय अधोक्षजाय चक्षुरात्मने नमः

ॐ थं नमः पराय नरसिंहाय जिह्वात्मने नमः

ॐ तं नमः पराय अच्युताय घ्राणात्मने नमः

ॐ णं नमः पराय पद्मनाभाय वागात्मने नमः

ॐ ढं नमः पराय दामोदराय पाण्यात्मने नमः

ॐ डं नमः पराय सङ्कर्षणाय पादात्मने नमः

ॐ ठं नमः पराय वासुदेवाय पाय्वात्मने नमः

ॐ टं नमः पराय प्रद्युम्नाय उपस्थात्मने नमः

ॐ ञं नमः पराय मधुसूदनाय शब्दात्मने नमः

ॐ झं नमः पराय त्रिविक्रमाय स्पर्शात्मने नमः

ॐ जं नमः पराय वामनाय रूपात्मने नमः

ॐ छं नमः पराय श्रीधराय रसात्मने नमः

ॐ चं नमः पराय हृषीकेशाय गन्धात्मने नमः

ॐ ङं नमः पराय केशवाय आकाशात्मने नमः

ॐ घं नमः पराय नारायणाय वाय्वात्मने नमः

ॐ गं नमः पराय माधवाय तेजआत्मने नमः

ॐ खं नमः पराय गोविन्दाय अबात्मने नमः

ॐ कं नमः पराय विष्णवे पृथिव्यात्मने नमः

..........................................................................................

## अन्येषु : लक्ष्म्यां वागीश्वर्यादिमन्त्रन्यासः -

शिरसि - ॐ लं नमः परायै वागीश्वर्यै नमः

मुखे - ॐ लृं नमः परायै क्रियायै नमः

हृदये - ॐ लैं नमः परायै कीर्त्यै नमः

नाभौ - ॐ लौं नमः परायै लक्ष्मै नमः

गुह्ये - ॐ लं नमः परायै सृष्ट्यै नमः

जान्वोः - ॐ लैं नमः परायै विद्यायै नमः

पादयोः - ॐ लां नमः परायै कान्त्यै नमः

लक्ष्म्यादिमन्त्रन्यासः -

शिरसि - ॐ लां लक्ष्म्यै नमः परमलक्ष्मावस्थितायै लां श्रीं ह्रीं स्वाहा

मुखमध्ये - ॐ कां कीर्त्यै नमःसदोदितानन्दविग्रहायै ह्रीं क्रीं स्वाहा

हृदये - ॐ जां जयायै नमः अजितधामावस्थितायै जां ज्रीं स्वाहा

नाभौ - ॐ मां मायायै नमः मोहातीतपदाश्रितायै मां म्रीं स्वाहा

अष्टसिद्धिन्यासः - शिरसि - ॐ श्रीं ह्रीं क्लीं ऐं अणिमायै नमः

नेत्रयोः - ॐ श्रीं ह्रीं क्लीं ऐं महिमायै नमः

नासायां - ॐ श्रीं ह्रीं क्लीं ऐं लघिमायै नमः

वाचि - ॐ श्रीं ह्रीं क्लीं ऐं गरिमायै नमः

हृदि - ॐ श्रीं ह्रीं क्लीं ऐं प्राप्त्यै नमः

नाभौ - ॐ श्रीं ह्रीं क्लीं ऐं प्रकाशायै नमः

जान्वोः - ॐ श्रीं ह्रीं क्लीं ऐं ईशायै नमः

पादयोः - ॐ श्रीं ह्रीं क्लीं ऐं वशिन्यै नमः

**शक्तित्रयन्यासः -**

मूलाधारे - ॐ श्रीं ह्रीं इच्छाशक्त्यै नमः

हृदये - ॐ श्रीं ऐं ज्ञानशक्त्यै नमः

शिरसि - ॐ श्रीं क्लीं क्रियाशक्त्यै नमः

**अम्भृणीसूक्तन्यासः-** अस्य अम्भ्रिणीसूक्तस्य वागम्भृणी ऋषिका । द्वितिया जगती त्रिष्टुप् छन्दः । वागम्भृणी महालक्ष्मिर्देवता । न्यासे विनियोगः

पादयोः - ॐ अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥

हृदि - ॐ अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम् ।
अहं दधामि द्रविणं हविष्मते सुप्राव्ये ३ यजमानाय सुन्वते ॥

नाभौ -ॐ अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्याविशयन्तीम् ॥

मुखे - मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तं ।
अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥

ललाटे - ॐ अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः ।
यं कामये तन्तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥

नासिकायाम् - ॐ अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उं ।
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश ॥

नेत्रयोः - ॐ अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वं१तः समुद्रे ।
ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥

जान्वोः - ॐ अहमेव वात इव प्र वाम्यारभमाणा भुवनानि विश्वा ।
परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव ॥

गायत्रीन्यासः -

शिरसि - ॐ महादेव्यै च विद्महे ।

हृदये - ॐ विष्णुपत्न्यै च धीमहि ।

नाभौ - ॐ तन्नो लक्ष्मीः प्रचोदयात् ।

व्यापनम् - ॐ महादेव्यै.....प्रचोदयात् ।

आयुधन्यासः -

ऊर्ध्वहस्तयोः - ॐ पद्मद्वयाय नमः

दक्षिणाधोहस्ते - ॐ अभयाय नमः

वामाधोहस्ते - ॐ वरदाय नमः

.........................................................................................................

दुर्गायां श्रियायां उक्तक्रमेण वागीश्वर्यादिमन्त्रन्यासादि शक्तित्रय न्यासान्तं कृत्वा, पञ्चदुर्गामन्त्रन्यासः -

जातवेदसे इत्यादि पञ्चमन्त्राणां कश्यप ऋषिः । त्रिष्टुप् छन्दः । दुर्गादेवता । न्यासे विनियोगः -

पादयोः - ॐ जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥

हृदि - ॐ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् ।
दुर्गां देवीं शरणमहं प्रपद्ये सुतरसि तरसे नमः सुतरसि तरसे नमः ॥

नाभौ - ॐ अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा ।
पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः ॥

मुखे - ॐ विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरितातिं पर्षि ।
अग्ने अत्रिवन्नमसा गृणानो३ऽस्माकं बोध्यविता तनूनाम् ॥

शिरसि- ॐ पृतनाजितगं सहमानमुग्रमग्निगं हुवेम परमात् सधस्थात् ।
स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अति दुरितात्यग्निः ॥

गायत्रीन्यासः -

शिरसि - ॐ कात्यायनाय विद्महे ।

हृदये - ॐ कन्याकुमारि धीमहि ।

नाभौ - ॐ तन्नो दुर्गा प्रचोदयात् ।

व्यापनम् - ॐ कात्यायनाय........प्रचोदयात् ।

आयुधन्यासः -

दक्षिणोर्ध्वहस्ते - ॐ चक्राय नमः

वामोर्ध्वहस्ते - ॐ शङ्खाय नमः

वामाधोहस्ते - ॐ शूलाय नमः

दक्षिणाधोहस्ते - ॐ तर्जन्यै नमः

..........................................................................................

अजे हिरण्यगर्भसूक्तन्यासः -

अस्य हिरण्यगर्भसूक्तस्य भृगु ऋषिः । त्रिष्टुप् छन्दः । ब्रह्मा देवता । न्यासे विनियोगः

पादयोः- ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥

हृदि - ॐ य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य च्छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥

नाभौ - ॐ यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥

मुखे - ॐ यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥

शिरसि - ॐ येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥

ललाटे - ॐ यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥

नासिकायाम् - ॐ आपो ह यद्बृहतीर्विश्वमायन्गर्भं दधाना जनयन्तीरग्निम् ।
ततो देवानां समवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥

नेत्रयोः - ॐ यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम् ।
यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम ॥

जान्वोः-ॐ मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान ।
यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ॥

श्रोत्रे - ॐ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥

गायत्रीन्यासः -

शिरसि - ॐ वेदात्मनाय विद्महे ।

हृदये - ॐ हिरण्यगर्भाय धीमहि ।

नाभौ - ॐ तन्नो ब्रह्म प्रचोदयात् ।

व्यापनम् - ॐ वेदात्मनाय.....प्रचोदयात् ।

आयुधन्यासः -

ऊर्ध्वहस्तयोः - ॐ पद्मद्वयाय नमः

[दक्षिणोर्ध्वहस्ते - ॐ कुण्डिकाय नमः

वामोर्ध्वहस्ते - ॐ अक्षसूत्राय नमः]

वामाधोहस्ते - ॐ वरदाय नमः

दक्षिणाधोहस्ते - ॐ अभयाय नमः

.................................................................................................

सरस्वत्यां सरस्वतीसूक्तन्यासः -

अस्य श्री सरस्वती सूक्तस्य बार्हस्पत्यो भरद्वाज ऋषिः । गायत्री छन्दः । सरस्वती देवता । न्यासे विनियोगः

पादयोः - ॐ प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु ॥

हृदि - ॐ यस्त्वा देवि सरस्वत्युपब्रूते धने हिते । इन्द्रं न वृत्रतूर्ये ॥

नाभौ - ॐ त्वं देवि सरस्वत्यवा वाजेषु वाजिनि । रदा पूषेव नः सनिम् ॥

मुखे- ॐ उत स्या नः सरस्वती घोरा हिरण्यवर्तनिः । वृत्रघ्नी वष्टि सुष्टुतिम् ॥

शिरसि - ॐ यस्या अनन्तो अह्रुतस्त्वेषश्चरिष्णुरर्णवः । अमश्चरति रोरुवत् ॥

ललाटे- ॐ सा नो विश्वा अति द्विषः स्वसॄरन्या ऋतावरी । अतन्नहेव सूर्यः ॥

नासिकायाम् - ॐ उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा । सरस्वती स्तोम्या भूत् ॥

नेत्रयोः - ॐ आपप्रुषी पार्थिवान्युरु रजो अंतरिक्षं । सरस्वती निदस्पातु ॥

जान्वोः - ॐ त्रिषधस्था सप्तधातुः पञ्च जाता वर्धयन्ती । वाजेवाजे हव्या भूत् ॥

गायत्रीन्यासः -

शिरसि - ॐ सरस्वत्यै च विद्महे ।

हृदये - ॐ ब्रह्मपत्न्यै च धीमहि ।

नाभौ - ॐ तन्नो वाणी प्रचोदयात् ।

व्यापनम् - ॐ सरस्वत्यै.....प्रचोदयात् ।

आयुधन्यासः - [दक्षिणोर्ध्वहस्ते - ॐ अमृतकलशाय नमः

वामोर्ध्वहस्ते - ॐ अक्षमालायै नमः]

दक्षिणाधोहस्ते - ॐ वरदाय नमः

वामाधोहस्ते - ॐ विद्यायै नमः

..................................................................................................

हनुमति बळित्थासूक्तन्यासः -

अस्य बळित्था इति सूक्तस्य भृगु ऋषिः । जगती छन्दः । मुख्यप्राणो देवता । न्यासे विनियोगः

पादयोः - ॐ बळित्था तद्वपुषे धायि दर्शतं देवस्य भर्गः सहसो यतो जनि ।
यदीमुप ह्वरते साधते मतिर्ऋतस्य धेना अनयन्त सस्रुतः ॥

हृदि - ॐ पृक्षो वपुः पितुमान्नित्य आ शये द्वितीयमा सप्तशिवासु मातृषु ।
तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः ॥

नाभौ - ॐ निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः शवसा क्रन्त सूरयः ।
यदीमनु प्रदिवो मध्व आधवे गुहा सन्तं मातरिश्वा मथायति ॥

मुखे - ॐ प्र यत्पितुः परमान्नीयते पर्या पृक्षुधो वीरुधो दंसु रोहति ।
उभा यदस्य जनुषं यदिन्वत आदिद्यविष्ठो अभवद्घृणा शुचिः ॥

शिरसि - ॐ आदिन्मातृराविशद्यास्वा शुचिरहिंस्यमान उर्विया वि वावृधे ।
अनु यत्पूर्वा अरुहत्सनाजुवो नि नव्यसीष्ववरासु धावते ॥

गायत्रीन्यासः -

शिरसि - ॐ आञ्जनेयाय विद्महे ।

हृदये - ॐ रामदूताय धीमहि ।

नाभौ - ॐ तन्नो वेगी प्रचोदयात् ।

व्यापनम् - ॐ आञ्जनेयाय.....प्रचोदयात् ।

भूषणन्यासः -

श्रोत्रयोः - ॐ कर्णकुण्डलाय नमः

हृदये - ॐ वनमालायै नमः

कटौ - ॐ कनकसूत्राय नमः

आयुधन्यासः -

दक्षिणोर्ध्वहस्ते - ॐ अभयाय नमः

वामोर्ध्वहस्ते - ॐ गदायै नमः

अधहस्तयोः - ॐ मुद्राञ्जलये नमः

..............................................................................................

शिवे सद्योजातादिमन्त्रन्यासः -

सद्योजातमित्यादि पञ्चमन्त्राणां अघोर ऋषिः। भूर्यनुष्टब्गायत्र्यनुष्टुप्कृत्यनुष्टुभः छन्दांसि । सदाशिवरुद्रो देवता । न्यासे विनियोगः

पादयोः - ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ।
भवेभवे नातिभवे भवस्व माम् भवोद्भवाय नमः ॥

हृदि - ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ।

नाभौ - ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ।
सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥

मुखे - ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥

शिरसि - ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपति - र्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ।

गायत्रीन्यासः -

शिरसि - ॐ तत्पुरुषाय विद्महे ।

हृदये - ॐ महादेवाय धीमहि ।

नाभौ - ॐ तन्नो रुद्रः प्रचोदयात् ।

व्यापनम् - ॐ तत्पुरुषाय.....प्रचोदयात् ।

भूषणन्यासः - शिरसि - ॐ जटामुकुटाय नमः

शिरसि - ॐ अर्धचन्द्राय नमः

उपवीते - ॐ अनन्ताय नमः

दक्षिणकर्णे - ॐ पद्माय नमः

वामकर्णे - ॐ शङ्खपालाय नमः

दक्षिणकेयूरे - ॐ कुलिकाय नमः

वामकेयूरे - ॐ वासुकये नमः

दक्षिणकङ्कणे - ॐ महापद्माय नमः

वामकङ्कणे - ॐ तक्षकाय नमः

कटौ- ॐ कार्कोटकाय नमः

आयुधन्यासः -

दक्षिणोर्ध्वहस्ते - ॐ परशवे नमः

वामोर्ध्वहस्ते - ॐ मृगाय नमः

वामाधोहस्ते - ॐ अभयाय नमः

दक्षिणाधोहस्ते - ॐ वरदाय नमः

.................................................................................................

पार्वत्याम् वेदोक्तमन्त्रन्यासः -

गौरीर्मिमाय इति मन्त्रस्य दीर्घतमा ऋषिः । जगती छन्दः । उमा देवता । न्यासे विनियोगः

पादयोः - ॐ गौरीर्मिमाय सलिलानि तक्षति ।

हृदि - ॐ एकपदी द्विपदी सा चतुष्फदी ।

नाभौ - ॐ अष्टापदी नवपदी बभूवुषी ।

मुखे - ॐ सहस्राक्षरा परमे व्योमन् ।

शिरसि - ॐ गौरीर्मिमाय सलिलानि तक्षत्येकंपदी द्विपदी सा चतुंष्पदी ।
अष्टापंदी नवंपदी बभूवुषीं सहस्रांक्षरा परमे व्योमन् ॥

**गायत्रीन्यासः -**

शिरसि - ॐ गिरिजायै च विद्महे ।

हृदये - ॐ शिवपत्न्यै च धीमहि ।

नाभौ - ॐ तन्नो गौरी प्रचोदयात् ।

व्यापनम् - ॐ गिरिजायै.......प्रचोदयात् ।

**आयुधन्यासः -**

दक्षिणहस्ते - ॐ वरदाय नमः

वामहस्ते - ॐ अभयाय नमः

..............................................................................................

**शेषे सर्पत्रयमन्त्रन्यासः -**

सर्पत्रयमन्त्राणां वामदेव ऋषिः । अनुष्टुप् छन्दः । शेषो देवता । न्यासे विनियोगः

पादयोः - ॐ नमो॑ अस्तु स॒र्पेभ्यो॒ ये के च॑ पृथि॒वीमनु॑ ।
ये अ॒न्तरि॑क्षे॒ ये दि॒वि तेभ्य॑ः स॒र्पेभ्यो॒ नम॑ः ॥

हृदि - ॐ ये॑ऽदो रो॑च॒ने दि॒वो ये वा॒ सूर्य॑स्य र॒श्मिषु॑ ।
येषा॑म॒प्सु सद॑स्कृ॒तं तेभ्य॑ः स॒र्पेभ्यो॒ नम॑ः ॥

नाभौ - ॐ या इष॑वो यातु॒धाना॑नां॒ ये वा॒ वन॒स्पती॒ँरनु॑ ।
ये वा॑ऽव॒टेषु॒ शेर॑ते॒ तेभ्य॑ः सर्पेभ्यो॒ नम॑ः ॥

**गायत्रीन्यासः -**

शिरसि - ॐ तत्पुरुषाय विद्महे ।

हृदये - ॐ विष्णुतल्पाय धीमहि ।

नाभौ - ॐ तन्नः शेषः प्रचोदयात् ।

व्यापनम् - ॐ तत्पुरुषाय......प्रचोदयात् ।

**भूषणन्यासः -**

मूर्ध्नि - ॐ सहस्रशिरसे नमः

श्रोत्रे - ॐ द्वितीयकर्णभूषाय नमः

हृदये - ॐ वनमालायै नमः

आयुधन्यासः -

दक्षिणोर्ध्वहस्ते - ॐ हलाय नमः

वामोर्ध्वहस्ते - ॐ सौनन्दाय नमः

अधोहस्तयोः - ॐ मुद्राञ्जलये नमः

.........................................................................................

गरुडे तार्क्ष्यसूक्तन्यासः -

त्यमूषुमिति सूक्तस्य तार्क्ष्योऽरिष्टनेमि ऋषिः । त्रिष्टुप् छन्दः । गरुडो देवता । न्यासे विनियोगः

पादयोः - ॐ त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् ।
अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥

हृदि - ॐ इन्द्रस्येव रातिमाजोहुवानाः स्वस्तये नावमिवा रुहेम ।
उर्वी न पृथ्वी बहुले गभीरे मा वामेतौ मा परेतौ रिषाम ॥

नाभौ - ॐ सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान ।
सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न शर्याम् ॥

गायत्रीन्यासः -

शिरसि - ॐ तत्पुरुषाय विद्महे ।

हृदये - ॐ सुवर्णपक्षाय धीमहि ।

नाभौ - ॐ तन्नो गरुडः प्रचोदयात् ।

व्यापनम् - ॐ तत्पुरुषाय......प्रचोदयात् ।

भूषणन्यासः -

वामकटके - ॐ अनन्ताय नमः

यज्ञसूत्रे - ॐ वासुकये नमः

कटौ - ॐ तक्षकाय नमः

कण्ठे - ॐ कार्कोटकाय नमः

दक्षिणकर्णे - ॐ पद्माय नमः

वामकर्णे - ॐ महापद्माय नमः

शिरसि - ॐ शङ्खपालाय नमः

भुजान्तरे - ॐ कुलिकाय नमः

हृदये - ॐ वनमालायै नमः

आयुधन्यासः -

दक्षिणपक्षे - ॐ रुद्राय नमः

वामपक्षे - ॐ सुकीर्त्यै नमः

दक्षिणहस्ते - ॐ अभयाय नमः

वामहस्ते - ॐ सुधाकुम्भाय नमः

.............................................................................................

कामे वेदोक्तमन्त्रन्यासः -

अरं कामाय इति मन्त्रस्य आङ्गिरसो बरु ऋषिः । जगती छन्दः । कामो देवाता न्यासे विनियोगः

पादयोः - ॐ अरं कामाय हरयो दधन्विरे ।

हृदि - ॐ स्थिराय हिन्वन् हरयो हरी तुरा ।

नाभौ - ॐ अर्वद्भिर्यो हरिभिर्जोषमीयते ।

मुखे - ॐ सो अस्य कामं हरिवंतमानशे ।

शिरसि - ॐ अरं कामाय हरयो दधन्विरे स्थिराय हिन्वन्हरयो हरी तुरा ।
अर्वद्भिर्यो हरिभिर्जोषमीयते सो अस्य कामं हरिवन्तमानशे ॥

गायत्रीन्यासः -

शिरसी - ॐ मनोभवाय विद्महे ।

हृदये - ॐ पञ्चबाणाय धीमहि ।

नाभौ - ॐ तन्नो कामः प्रचोदयात् ।

व्यापनम् - ॐ मनोभवाय.....प्रचोदयात् ।

आयुधन्यासः -

दक्षिणहस्ते - ॐ पुष्पबाणाय नमः

वामहस्ते - ॐ इक्षुचापाय नमः

.................................................................................................

स्कन्दे कुमारसूक्तन्यासः - तमर्वन्तमिति सूक्तस्य कुमार ऋषिः । गायत्री छन्दः । स्कन्दो देवता । न्यासे विनियोगः

पादयोः- ॐ तमर्वन्तं न सानसिमरुषं न दिवः शिशुम् । मर्मृज्यन्ते दिवेदिवे ॥

हृदि - ॐ बोधद्यन्मा हरिभ्यां कुमारः साहदेव्यः । अच्छा न हूत उदरम् ॥

नाभौ - ॐ उत त्या यजता हरी कुमारात्साहदेव्यात् । प्रयता सद्य आ ददे ॥

मुखे - ॐ एष वां देवावश्विना कुमारः साहदेव्यः । दीर्घायुरस्तु सोमकः ॥

शिरसि - ॐ तं युवं देवावश्विना कुमारं साहदेव्यम् । दीर्घायुषं कृणोतन ॥

गायत्रीन्यासः -

शिरसि - ॐ कार्तिकेयाय विद्महे ।

हृदये - ॐ शक्तिहस्ताय धीमहि ।

नाभौ - ॐ तन्नः स्कन्दः प्रचोदयात् ।

व्यापनम् - ॐ शक्तिहस्ताय.....प्रचोदयात् ।

भूषणन्यासः -

शिरसि - ॐ किरीटाय नमः

श्रोत्रयोः - ॐ पत्रकुण्डलाय नमः

कन्धरे - ॐ चम्पकस्रजायै नमः

कटौ - ॐ त्रिमेखलायै नमः

आयुधन्यासः - दक्षिणहस्ते - ॐ शक्तये नमः

वामहस्ते - ॐ धनुषे नमः

[दक्षिणोर्ध्वहस्ते - ॐ शक्तये नमः

वामोर्ध्वहस्ते - ॐ तोमराय नमः

वामाधोहस्ते - ॐ अभयाय नमः

दक्षिणाधोहस्ते - ॐ वरदाय नमः]

.......................................................................................................

सूर्ये सौरसूक्तन्यासः -

चित्रं देवानामिति सूक्तस्य अङ्गिरस ऋषिः। त्रिष्टुप् छन्दः। सूर्यो देवता। न्यासे विनियोगः

पादयोः - ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥

हृदि - ॐ सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात्।
यत्रा नरो देवयन्तो युगानि वितन्वते प्रति भद्राय भद्रम् ॥

नाभौ - ॐ भद्रा अश्वा हरितः सूर्यस्य चित्रा एतग्वा अनुमाद्यासः।
नमस्यन्तो दिव आ पृष्ठमस्थुः परि द्यावापृथिवी यन्ति सद्यः ॥

मुखे - ॐ तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार।
यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥

शिरसि - ॐ तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे।
अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सं भरन्ति ॥

ललाटे - ॐ अद्या देवा उदिता सूर्यस्य निरंहसः पिपृता निरवद्यात्।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥

गायत्रीन्यासः -

शिरसि - ॐ प्रभाकराय विद्महे।

हृदये - ॐ दिवाकराय धीमहि।

नाभौ - ॐ तन्नः सूर्यः प्रचोदयात्।

व्यापनम् - ॐ प्रभाकराय......प्रचोदयात् ।

भूषणन्यासः -

शिरसि - ॐ किरीटाय नमः

हृदये - ॐ पद्ममालायै नमः

उरौ - ॐ श्यमन्तकमणये नमः

कटौ - ॐ कनकमेखलायै नमः

आयुधन्यासः -

हस्तयोः - ॐ पद्मद्वयाय नमः

..............................................................................................

गणेशे गणपतिसूक्तन्यासः -

अस्य गणपतिसूक्तस्य काण्वः कुसीदी ऋषिः। गायत्री छन्दः। गणपतिर्देवता । न्यासे विनियोगः

पादयोः - ॐ आ तू नं इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय ।
महाहस्ती दक्षिणेन ॥

हृदि - ॐ विद्मा हि त्वां तुविकूर्मिं तुविदेष्णं तुवीमघम् । तुविमात्रमवोभिः ॥

नाभौ - ॐ नहि त्वां शूर देवा न मर्तासो दित्सन्तम् । भीमं न गां वारयन्ते ॥

मुखे - ॐ एतो न्विन्द्रं स्तवामेशानं वस्वः स्वराजम् । न राधसा मर्धिषन्नः ॥

शिरसि - ॐ प्र स्तोषदुप गासिषच्छ्रवत्साम गीयमानम् ।
अभि राधसा जुगुरत् ॥

ललाटे - ॐ आ नो भर दक्षिणेनाभि सव्येन प्र मृश ।
इन्द्र मा नो वसोर्निर्भाक् ॥

नासिकायाम् - ॐ उप क्रमस्वा भर धृषता धृष्णो जनानाम् ।
अदाशूष्टरस्य वेदः ॥

नेत्रयोः - ॐ इन्द्र य उ नु ते अस्ति वाजो विप्रेभिः सनित्वः ।
अस्माभिः सु तं सनुहि ॥

जान्वोः - ॐ सद्योजुवस्ते वाजा अस्मभ्यं विश्वश्चन्द्राः । वशैश्च मक्षू जरन्ते ॥

गायत्रीन्यासः -

शिरसि - ॐ एकदन्ताय विद्महे ।

हृदये - ॐ वक्रतुण्डाय धीमहि ।

नाभौ - ॐ तन्नो दन्तिः प्रचोदयात् ।

व्यापनम् - ॐ एकदन्ताय......प्रचोदयात् ।

भूषणन्यासः -

शिरसि - ॐ किरीटाय नमः

शिरसि - ॐ अर्धचन्द्राय नमः

हृदये - ॐ चिन्तामणये नमः

हृदये - ॐ रक्तमालायै नमः

कटौ - ॐ नागमेखलाय नमः

आयुधन्यासः -

दक्षिणोर्ध्वहस्ते - ॐ पाशाय नमः

वामोर्ध्वहस्ते - ॐ दन्ताय नमः

वामाधोहस्ते - ॐ अङ्कुशाय नमः

दक्षिणाधोहस्ते - ॐ अभयाय नमः

.................................................................................................

कुबेरे वेदोक्तमन्त्रन्यासः -

तस्याः कुबेरो इति अथर्वा ऋषिः । बृहती छन्दः । कुबेरो देवता । न्यासे विनियोगः

पादयोः - ॐ तस्याः कुबेरो वैश्रवणः ।

हृदि - ॐ वत्स आसीदामपात्रं पात्रम् ।

नाभौ - ॐ तां रजतनाभिः काबेरकः ।

मुखे - ॐ अधोक् तां तिरोधामेवाधोक् ।

शिरसि - ॐ तस्याः कुबेरो वैश्रवणो वत्स आसीदामपात्रं पात्रम् ।
तां रजतनाभिः कबेरकोऽधोक् तां तिरोधामेवाधोक् ॥

गायत्रीन्यासः -

शिरसि - ॐ धनाधिपाय विद्महे ।

हृदये - ॐ वैश्रवणाय धीमहि ।

नाभौ - ॐ तन्नः श्रीदः प्रचोदयात् ।

व्यापनम् - ॐ धनाधिपाय.......प्रचोदयात्

आयुधन्यासः -

दक्षिणहस्ते - ॐ वरदाय नमः [ॐ पद्माय नमः ]

वामहस्ते - ॐ दण्डाय नमः

.............................................................................................

तदनन्तरं सप्तव्याहृतिन्यासं तत्वन्यासं मातृकान्यासं केशवादिमूर्तिन्यासं च लक्ष्म्यादिषु कुर्यात् ।

कलशस्थं 'देवतां' मूलमन्त्रेण षोडशोपचारैः सम्पूज्य पुष्पोपचारानन्तरं आवरणदेवताः पूजयेत् । नैवेद्यकाले पायसादिकं निवेद्य, नीराज्य, छत्रचामरादि उपचारान् समर्प्य, प्रसन्नार्घ्यं दत्त्वा, प्रार्थयेत् ।

**परिकलशार्चनम्** - सर्वत्र प्रति खण्डं पीठपूजां विधाय, विधिवत् कुम्भान् संस्थाप्य कूर्चान् विन्यस्य, तत्तद्द्रव्यं तत्तन्मन्त्रेण पूरयेत् । सामान्य कलशान् वर्धनीपात्रस्थजलेन प्रपूर्य, कलशपूरणं कृत्वा, पीठपूजां विधाय, देवतां आवाह्य, गोलकचिन्तनं न्यासादिकं विधाय, प्रसन्नपूजां कृत्वा, तालत्रयादिना रक्षेत् । देवतामूर्तिमन्त्र - मूलमन्त्र - गायत्री - वेदोक्तमन्त्र - वेदादिभिः कलशाभिमन्त्रणं कुर्यात् ।

# ॥ प्रतिष्ठापटलः॥

स्थाननिर्देशः - स्थापयेद्ग्राममध्ये तु पञ्चमूर्तिमयं हरिम् ।
विप्राणां पञ्चयज्ञोयमेव साफल्यमश्नुते ॥
सर्वार्थमेकमूर्तिं वा ग्राममध्ये समर्चयेत् ।
योगिनं भोगिनं वापि कारयेदच्युतं प्रभुम् ॥
आसीनं वा शयानं वा तिष्ठन्तं वा समर्चयेत् ।
सृष्टिकृद्योगशयनं देवदेवस्य कीर्त्यते ॥
प्राग्द्वारं सुखदं विद्धि पश्चिमं पुष्टिवर्धनम् ।
धनदं चोत्तरं द्वारं द्वारं याम्यां च मोक्षदम् ॥
ऐन्द्रे तु भास्करं स्थानं प्रत्यग् द्वारं तु कल्पयेत् ।
पावके मदनस्थानं प्रत्यग् द्वारं प्रकल्पयेत् ॥
याम्ये तु ब्रह्मणस्स्थानं प्राङ्मुखं परिकल्पयेत् ।
सुब्रह्मण्यस्य याम्ये स्यात् पूर्वद्वारनिकेतनम् ॥
नैर्ऋते विघ्नराजस्य पूर्वद्वारं प्रकल्पयेत् ।
पश्चिमे तु श्रियः स्थानं प्राङ्मुखं कल्पयेत् बुधः ॥
वायव्यां प्राङ्मुखं स्थानं दुर्गायै परिकल्पयेत् ।
धनदं चोत्तरे स्थानं जम्भलादिसमन्वितम् ॥
ऐशान्यामैश्वरं स्थानं सोमेशानान्तरेऽपि वा ।
इन्द्रेशानान्तरे वापि नान्यत्र परिकल्पयेत् ॥
नैर्ऋते तु मातृस्थानं सर्वास्ताश्चोत्तराननाः ।
ऐशान्यां वाथ मातॄणां नातिदूरे गृहं भवेत् ॥
आग्नेय्यां वा गुहं दुर्गां वायुसोमान्तरेऽपि वा ।

यजमानलक्षणः - श्रद्धावान् आस्तिको भक्तो धनधान्यसमृद्धिमान् ।
महोत्साहः शुचिर्दक्षः कृतज्ञः लोभवर्जितः ॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वाप्यनुलोमजः ।
जानीहि यजमानं तं सर्वैः समुदितं गुणैः ॥

**आचार्यलक्षणः** - सर्वाः क्रिया हरौ भक्ते हरिभक्तैः स्वनुष्ठिताः ।
गुरुभक्तैः सदाचारैः फलंत्यद्धा न चान्यथा ॥
पञ्चरात्रविदं शान्तं सिद्धान्तेषु कृतश्रमम् ।
अपापमृजुमव्याधिमदृष्ट परमास्तिकम् ॥
तं भागवतमाचार्यं प्रथमं वरयेत् सुधीः ।

**प्रतिष्ठाकालः** - चैत्रे वा फाल्गुने वाऽपि ज्येष्ठे वा माधवे तथा ।
माघे वा सर्वदेवानां प्रतिष्ठा शुभदा सिते ॥
सौम्यायने शुभा प्रोक्ता निन्दिता दक्षिणायने ।
रिक्तान्यतिथिषु स्यात् सा वारे भौमान्यके तथा ॥
ज्येष्ठाश्रवणरोहिण्यः पूर्वाभाद्रपदस्तथा ।
हस्तोऽश्विनी रेवती च पुष्यो मृगशिरस्तथा ॥
अनुराधा तथा स्वाती प्रतिष्ठासु प्रशस्यते ।
चन्द्रताराबलोपेते पूर्वाह्ले शोभने दिने ॥
चरराशिं परित्यज्य स्थिरराशिं प्रगृह्य च ।
सुप्रशस्तेमुहूर्ते वै प्रतिष्ठां कारयेत् बुधः ॥
सङ्क्रान्तौ दुर्दिने चैव ग्रहणे सोमसूर्ययोः ।
गुरावस्तङ्गते शुक्रे व्यतीपाते च वर्जयेत् ॥
प्रतिपच्च द्वितीया च तृतीया पञ्चमी तथा ।
सप्तमी दशमी चैव द्वादशी च त्रयोदशी ॥
अष्टमी पौर्णमासी च प्रतिष्ठायां सुशोभनाः ।
प्रतिष्ठामुत्सवं चैव विप्रभोजनमङ्कुरम् ॥
अन्वाधानक्रियास्सर्वाः एकादश्यां परित्यजेत् ।
सोमो बृहस्पतिश्चैव भार्गवोऽथ बुधस्तथा ॥
एते सौम्यग्रहाः प्रोक्ताः प्रशस्ताः स्थापनं प्रति ।
सैंहिकेयार्कवाराश्च रक्तो वा स्थापने परे ॥
राशौ तृतीये षष्ठे वा स्थिताश्चेत् शुभशंसिनः ।
द्वितीये च तृतीये च तथा पञ्चमषष्ठयोः ॥

सप्तमे नवमे चैव राशौ चैकादशे पुनः ।
स्थितः सुखकरश्चन्द्रः षट्सप्तदशमस्थितः ॥
भयकृद्धार्गवो ज्ञेयश्चन्द्रः क्रूरैर्निरीक्षितः ।
अतिथौ वाऽन्यकालेषु न प्रशस्तश्चतुर्मुख ॥
मलमासः सदा वर्ज्यः चास्तं गुरोर्बृहस्पतेः ।
प्रतिष्ठा नात्र कर्तव्या सत्यां राष्ट्रं विनश्यति ॥
कीर्तिहानिस्तथा द्रव्यहानिः स्यान्निश्चयाद् द्विजाः ।
बाल्ये तयोश्च वार्धक्ये नैव कुर्यादतीन्द्रियः ॥
शुक्रो बालः दशाहः स्यात् पञ्चाहो वा मतान्तरम् ।
त्रिदिनः ऋषिभिः प्रोक्तः वृद्धस्तथैव सत्तमाः ॥
गुरोः बाल्ये च वार्धक्ये विभाषास्तिम्र एव च ।
अपात्तौ देशिकस्य स्यात् देशस्य समयस्य च ॥
यजमानस्यापि न त्याजं पूर्वोक्तं सुमुहूर्तकम् ।

**भूपरिग्रहः** - प्रतिष्ठापनयोग्यां भूमिमन्विष्य, तस्या यजमानं सन्तोष्य, तस्य हस्तात् भूमिं लब्ध्वा, तत्र उपविश्य, घृतदीपं प्रज्वाल्य, आचम्य, प्राणानायम्य, सङ्कल्प्य, हरिगुरुरिष्टदेवताः सम्प्रार्थ्य, अस्त्रमन्त्रेण शस्त्राणि गन्धपुष्पादिभिः अर्चयेत् । महाप्राकार पर्यन्तां भूमिं प्रकल्प्य, ततः विष्णौ -

ॐ प्राच्येभ्यो विष्णुभूतेभ्यः स्वाहा
ॐ आग्नेयेभ्यो विष्णुभूतेभ्यः स्वाहा
ॐ दक्षिणेभ्यो विष्णुभूतेभ्यः स्वाहा
ॐ नैर्ऋत्येभ्यो विष्णुभूतेभ्यः स्वाहा
ॐ प्रतीच्येभ्यो विष्णुभूतेभ्यः स्वाहा
ॐ वायव्येभ्यो विष्णुभूतेभ्यः स्वाहा
ॐ उदीच्येभ्यो विष्णुभूतेभ्यः स्वाहा
ॐ ऐशानेभ्यो विष्णुभूतेभ्यः स्वाहा

इति मन्त्रैः पूर्वाद्यष्टदिक्षु बलिं दद्यात् । अन्येषु -

ॐ देवताभ्यः पितृभ्योऽथ भूतेभ्यः सह जङ्गमैः ।

एतत् स्थाननिवासिभ्यः प्रयच्छामि बलिं नमः ॥

इति मन्त्रेण पूर्वाद्यष्टदिक्षु बलिं हरेत् ।

बलिद्रव्याणि - माषं हरिद्राचूर्णं च सलाजा दधिसक्थवः ।

प्रकारसीमापर्यन्तं एभिः भूतबलिं हरेत् ॥

पुनः सर्वेष्वपि इन्द्रादिलोकपालेभ्यः पुष्पान्नैः बलिं दत्वा, आचम्य, रक्षार्थं अस्त्रमन्त्रं सञ्जप्य, अञ्जलिं बद्ध्वा -

ॐ भूताः पिशाचा नागाश्च असुराः राक्षसाः ग्रहाः ।

सर्वे तेऽप्यपगच्छन्तु परितुष्टा यथायथम् ॥

देवानां च द्विजानां च स्थानं सम्यक् करोम्यहम् ।

इति निवेद्य, भूतादि समूहं निस्सारयेत् ।

भूकर्षणम् - युवानौ वृषभौ ग्राह्यौ कपिलौ श्वेतवर्णकौ ।

आसनवृक्षादिकृतं हलयुगलैः समानाभ्यां वृषाभ्यां भूसूक्तेन त्रिवारं पञ्चवारं वा भूमिं कृष्ट्वा, मुद्गादि बीजानि ओषधीसूक्तेन समुप्य, अप्सूक्तेन जलं सिञ्चेत् ।

उप्तबीजा त्रिरात्रेण साङ्कुरा शोभना मही ।

मध्यमा पञ्चरात्रेण सप्तरात्रेण निन्दिता ॥

अस्त्रमन्त्रेण दिग्बन्धनादिकं कृत्वा, फलिते सति गोभिः खादयेत् । ततः प्रासादनिर्माणस्थळे राक्षोघ्नसूक्तादिभिः पुरुषप्रमाणं भूमिं खनेत् ।

षडाधारप्रतिष्ठा - अष्टदिक्षु अष्टस्तम्भान् संस्थाप्य, अस्त्रमन्त्रेण अभिमन्त्रितसूत्रं दर्भदामा च ईशकोणादि ईशकोणपर्यन्तं बद्ध्वा, गोमयलेपनादिभिः विशुद्धायां भूमौ वास्तुपूजां होमं बलिं च कुर्यात् । षडाधारप्रतिष्ठाङ्ग पञ्चगव्यमेलनपुरस्सरं पुण्याहवाचनं वाचयित्वा, आधारपीठादिकं जलादिभिः संशोध्य, पञ्चगव्यपुण्याहकलशजलैश्च अभिषिच्य, गन्धपुष्पादिभिः अलङ्कृत्वा, आधारपीठादिषु तत्तद्देवताः आवाहयेत् । आधारपीठे - सहस्रशीर्षेति अन्तर्यामी ऋषिः । अनुष्टुप् छन्दः । नारायणो देवता । आवाहने विनियोगः

ॐ स॒हस्र॑शीर्षा॒ पुरु॑षः सहस्रा॒क्षः स॒हस्र॑पात् ।

स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥

ॐ भूर्भुवःस्वः परमपुरुषमावाहयामि ।

निधिकुम्भे - गन्धद्वारामिति श्रीपुत्रा आनन्दकर्दमश्रीदचिक्लीता ऋषयः । अनुष्टुप् छन्दः । आधारशक्ति श्रीर्देवता । आवाहने विनियोगः

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।

ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥

ॐ भूर्भुवःस्वः आधारशक्तिमावाहयामि ।

शिलाकूर्मे - इदं विष्णुःकाण्वो मेधातिथिर्विष्णुर्गायत्री । कूर्मरूपी विष्णवावाहने विनियोगः

ॐ इदं विष्णुर्विचक्रमे त्रेधा नि दधे पदम् । समूह्ळमस्य पांसुरे ॥

ॐ भूर्भुवःस्वः कूर्ममावाहयामि ।

योगनाले - ॐ तत्पुरुषाय विद्महे विष्णुतल्पाय धीमहि ।

तन्नः शेषः प्रचोदयात् ॥

ॐ भूर्भुवःस्वः अनन्तमावाहयामि, इत्यावाहयेत् । गर्तं पञ्चगव्येन प्रोक्ष्य, सितसर्षपं प्रणवेन अभिमन्त्र्य, ॐ फट् इति गर्ते विकीर्य, तालत्रय दिग्बन्धनादिभिः रक्षेत् । फलताम्बूलदक्षिणादिभिः विप्रान् तोषयित्वा, मङ्गलसूक्तानि पठन् गुरुः प्रणवेन गर्तमध्ये आधारपीठं संस्थाप्य, परमपुरुषं पुरुषसूक्तेन षोडशोपचारैः सम्पूज्य, भद्रदीपद्वयेन निराज्य,

ॐ ॐ परमपुरुषाय सर्वात्माऽनन्तशक्तये ।

विश्वाधारस्वरूपाय ब्रह्मणे परमात्मने ॥

इति सम्प्रार्थ्य, पुष्पाञ्जलिं समर्पयेत् । तदुपरि निधिकुम्भं संस्थाप्य, ध्रुवाद्यौरिति मन्त्रं पठेत् ।

व्रीहयश्च यवाश्चैव निष्पावाश्च प्रियङ्गवः ।
नीवाराश्शालयो माषाः तिलाश्चाष्टौ प्रकीर्तिताः ॥
वैडूर्यं मौक्तिकं चैव जलजं वज्रमेव च ।
पुष्यरागं चन्द्रकान्तं स्फटिकं चैन्द्रनीलकम् ॥
एतान्यष्टौ च रत्नानि हरिताळं मनश्शिला ।
सौराष्ट्रं रोचनं श्यामं सीसं गैरिकमञ्जनम् ॥

धात्वष्टकमितिप्रोक्तं क्रमेणैव निवेशयेत् ।
सुवर्णं रजतं ताम्रं आयसं त्रपुकं तथा ॥
कांस्यं पित्तालकं सीसं निधिकुम्भे विनिक्षिपेत् ।

श्रीसूक्तेन निधिकुम्भे यव - व्रीहि - निष्पाव - प्रियङ्गु - तिल - माष - नीवार-शालि इत्यष्टधान्यानि, वज्र - मौक्तिक - जलज - स्फटिक - पुष्यराग - चन्द्रकान्त - इन्द्रनील इत्यष्टरत्नानि, हरिताल - मनःशिला - अञ्जन - रोचन - सौराष्ट्री - गैरिक - श्याम - सीस इत्यष्टधातून् सुवर्ण - रजत - ताम्र - अयः - त्रपु - कांस्य - पित्ताल - सीस इत्यष्टलोहानि च निक्षिप्य, आधारशक्तिश्रियं आवाह्य, सम्पूज्य, नीराज्य,

ॐ शक्तिं भगवतो विष्णोः लक्ष्मीं आधाररूपिणीम् ।
उद्यदादित्यसङ्काशां नमामि कमलालयाम् ॥

इति पुष्पाञ्जलिं समर्प्य, निधिकुम्भोपरि शिलापद्मं स्थापयेत् । ॐ पं पद्माय नमः इति शिलापद्मं जलगन्धाक्षतपुष्पादिभिः अभ्यर्च्य कर्णिकायां प्रणवं न्यसेत् ।

पूर्वाद्यष्टदलाग्रेषु क्रमेण - ॐ अकारात्मने विश्वाय नमः ॐ । उकारात्मने तेजसाय । मकारात्मने प्राज्ञाय । नादात्मने तुरीयाय । बिन्द्वात्मने आत्मने । कलात्मने अन्तरात्मने । शान्तात्मने परमात्मने । ॐ अतिशान्तात्मने ज्ञानात्मने नमः ॐ इत्यष्टमन्त्रान् न्यसेत् । पुनः पूर्वदले ॐ अं अजाय नमः ॐ इत्यादि ॐ अः अर्धगर्भाय नमः ॐ इत्यन्तं, आग्नेयदले ॐ कं कपिलाय नमः ॐ इत्यादि ॐ ङं ङसाराय नमः ॐ इत्यन्तं, याम्यदले ॐ चं चार्वङ्गाय नमः ॐ इत्यादि ॐ ञं ञमाय नमः ॐ इत्यन्तं, नैर्ऋत्यदले ॐ टं टंकिने नमः ॐ इत्यादि ॐ णं णात्मने नमः ॐ इत्यन्तं, वारुणदले ॐ तं ताराय नमः ॐ इत्यादि ॐ नं नम्याय नमः ॐ इत्यन्तं, वायव्यदले ॐ पं पराय नमः ॐ इत्यादि ॐ मं मनवे नमः ॐ इत्यन्तं, सौम्यदले ॐ यं यज्ञाय नमः ॐ इत्यादि ॐ वं वराय नमः ॐ इत्यन्तं, ऐशदले ॐ शं शान्तसंविदे नमः ॐ इत्यादि ॐ ळं ळाळुकाय नमः ॐ इत्यन्तं च न्यसेत् । पद्मोपरि शिलाकूर्मं संस्थाप्य ध्रुवाद्यौरिति मन्त्रं पठित्वा, मूलमन्त्रेण कूर्मं षोडशोपचारैः सम्पूज्य, नेवेद्यकाले पायसादिकं निवेद्य, भद्रदीपद्वयेन नीराज्य -

ॐ यो विश्वं निर्दहत्यन्ते कालवैश्वानरात्मना ।

दैवतं यस्य भगवान् कूर्मात्मा लोकपूजितः ॥
नमस्ते कूर्मरूपाय विष्णवे विश्वधारिणे ।
करिष्यमाणं प्रासादमिह त्वं धर्तुमर्हसि ॥

इति सम्प्रार्थ्य, पुष्पाञ्जलिं समर्प्य, कूर्मस्य पुरतः स्वस्तिकायां 'देवतां' सम्पूज्य, शिलाकूर्मोपरि ब्रह्मशिलापर्यन्तं योगनालं निधाय, अनन्तं आवाह्य,

ध्यायेत्सङ्कर्षणं देवं सहस्रशिरसं विभुम् ।
नीलाम्बरं हलधरमेककुण्डलसुन्दरम् ॥

इति ध्यात्वा, षोडशोपचारैः सम्पूज्य, नीराज्य,

ॐ नमः श्रीमदनन्ताय शेषाय क्षितिधारिणे ।
सङ्कर्षणाय देवाय सहस्रशिरसे नमः ॥

इति पुष्पाञ्जलिं समर्प्य, गर्तं मृत्तिकया अभिपूर्य, सधृडं कृत्वा रक्षेत् ।

## ॥ इष्टकास्थापनम् ॥

रात्रौ ऐशान्यां दिशि वास्तुपूजां विधाय, दक्षिणद्वारशाखाया उत्तरभागे स्थण्डिले अग्निं प्रतिष्ठाप्य, तद्दक्षिणे जलादिभिः शोधिता पञ्चगव्याष्टगन्धलिप्ता अष्टौ इष्टकाः संस्थाप्य, पुष्पाक्षतैः अलङ्कुर्यात् । तत् समीपे गन्धोदकपूरितान् नव कलशान् संस्थाप्य पूजयेत् । अन्वाधानम् - अत्रप्रधानं 'देवतां' मूलमन्त्रेण समिदाज्यचरुतिलपुष्पाणि(लाजं वा)च इति पञ्चद्रव्यैः प्रत्येकं अष्टाविंशति वारं, पुनः गायत्रीमन्त्रेण अष्टोत्तरशतवारं आज्येन, पुनः अमुकसूक्तस्थमन्त्रैः (वेदोक्त सूक्तन्यासे उक्तसूक्तानि, पार्वत्यां, कामे, कुबेरे च वेदोक्तमन्त्रेण अष्टवारं) चरुणां....इत्यादि । होमं परिसमाप्य सम्पाताज्यं इष्टकासु समर्प्य, रक्षेत् । सुमुहूर्ते प्रासादस्य दक्षिणद्वारशाखाया अधोभागे इष्टकानां क्षेत्रं विरचय्य, चतुरश्रक्षेत्रे आग्नेय्यां वायव्यां च प्रागग्रे अवशिष्टासु दिक्षु उदगग्रे रेखे प्रणवेन लिखेत् । तत्र इष्टका द्वादशाङ्गुलदीर्घा भवेयुः । अष्टाङ्गुलविस्तृताः चतुरङ्गुलत्सेधा भवेयुः । मध्ये चतुरङ्गुल समविस्तार गर्भपात्रस्य गर्तं भवति । अष्टवारं मूलं सञ्जप्य, अग्निगतचैतन्यं इष्टकासु संयोजयेत् । विष्णौ

प्रणव - व्याहृति - षडक्षर - अष्टाक्षर - द्वादशाक्षर -सवितागायत्री-पुरुषसूक्त-मातृकामन्त्रैश्च क्रमेण अग्न्यंशकात् ऐशानपर्यन्तं इष्टका उपादध्यात् । लक्ष्म्यां- ॐ श्रीं ह्रीं क्लीं ऐं अणिमायै नमः । महिमायै । लघिमायै । गरिमायै । प्राप्त्यै । प्रकाशायै । ईशायै । ॐ श्रीं ह्रीं क्लीं ऐं वशिन्यै नमः इत्यष्टमन्त्रैः क्रमेण, दुर्गायां पञ्चदुर्गामन्त्रैः (पूर्वादि तामग्निवर्णां इत्यादि चतुर्मन्त्रैः, ईशान्यादि जातवेदमन्त्रेण च), शिवे सद्योजातादि मन्त्रैः(पूर्वादि सद्योजातादि चतुर्मन्त्रैः, ईशान्यादि ईशानमन्त्रेण च), अजे हनुमति गणेशे सूर्ये च मूलमन्त्राक्षरैः अन्येषु मूलमन्त्रेण च अग्न्यंशकात् ऐशानपर्यन्तं इष्टका उपादध्यात् ।

[जये भार्गवदायादे प्रजानां विजयावहे ।
पूर्णेऽङ्गिरसदायादे पूर्णकामं कुरुध्व माम् ॥
भद्रे काश्यपदायादे कुरु भद्रां मतिं मम ।
सर्ववीजौषधीयुक्ते सर्वरत्नौषधीवृते ॥
रुचिरे नन्दने नन्दे वासिष्ठे रम्यतामिह ।
प्रजापतिसुते देवि चतुरस्रे महीयसि ॥
सुभगे सुव्रते देवि गृहे काश्यपि रम्यताम् ।
पूजिते परमाचार्यैर्गन्धमाल्यैरलङ्कृते ॥
भवभूतिकरे देवि गृहे भार्गवि रम्यताम् ।
अव्यक्ते व्याकृते पूर्णे मुनेरङ्गिरसः सुते ॥
इष्टके त्वं प्रयच्छेष्टं प्रतिष्ठां कारयाम्यहं ।
देशस्वामिपुरस्वामिगृहस्वामिपरिग्रहे ॥
मनुष्यधनहस्त्यश्वपशुवृद्धिकरी भव ।

इति सम्प्रार्थ्य,] मूलमन्त्रेण मृत्तिकया अभिपूर्य कलशजलैः मध्यभागस्य गर्तं आपूर्य, ॐ ॐ ॐ इति पुष्पाक्षतान् निक्षिपेत् । जलावर्तं वीक्ष्य, वामावर्ते जले सति मूलमन्त्रेण अस्त्रमन्त्रेण च प्रत्येकं १०८ वारं, स्वस्तिसूक्तस्थमन्त्रैश्च आज्यं हुत्वा, तत्सम्पातं समर्पयेत् । अस्त्रमन्त्रेण तालत्रय दिग्बन्धनादिकं कृत्वा, अन्याः चतस्र इष्टकाः तदुपरि विन्यस्य, धान्यैः मृद्भिश्च गर्तं प्रपूर्य, रक्षेत् ।

## ॥ गर्भन्यासः ॥

**गर्भभाजनलक्षणः** - तद्गर्भभाजनं कार्यं सर्वलक्षणसंयुतम् ।
सौवर्णं राजतं ताम्रं कांस्यं वा गर्भभाजनम् ॥
पदासमन्तु विस्तारं भाजनस्य महामुने ।
षट्सप्ताष्टाङ्गुलावाऽपि हीनं मध्यममुत्तमम् ॥
चतुर्वणं समं कुर्यात् विस्तरेण समोपमम् ।
चतुर्भागैकहीनं वा त्रिभागैकहीनकम् ॥
तत्तदग्न्यंशमानेन पिधानं तस्य कारयेत् ।

अथ शुभरात्रौ पुण्याहं वाचयित्वा, गर्भपात्रं द्रव्याणि च सम्पाद्य, पिधानसहितं ताम्रमयं गर्भपात्रं पञ्चगव्यपुण्याहजलैश्च सम्प्रोक्ष्य, कुम्भसंस्कारक्रमेण संस्कारं कृत्वा, धान्यपीठे स्थापयेत् । तत् पात्रे द्रव्याणि पूरयेत् ।

**विष्णौ** - शैले ह्रदे पुण्यतीर्थे वल्मीके कर्कटालये ।
नद्यां वृषविषाणाग्रे दन्तिदन्ते पयोनिधौ ॥
हले चैतेषु सम्भूता प्रशस्ता मृत्तिका दश ।
कुमुदस्यारविन्दस्य कशेरुत्पलयोस्तथा ॥
नीलोत्पलस्य पञ्चैतान् कुन्दानापि समाहरेत् ।
मनःशिला हरितालमञ्जनश्यामसीसकम् ॥
सौराष्ट्रं रोचनं चैव गैरिकं पारदं तथा ।
आदाय धातून् रत्नानि वज्रवैडूर्यमौक्तिकम् ॥
स्फटिकं पुष्यकं शङ्खं पद्मरागं तथा परम् ।
चन्द्रकान्तं महानीलं नवैतानि समाहरेत् ॥
शालिनीवारकङ्गूश्च प्रियङ्गुतिलमाषकान् ।
मुद्गाश्च यववेणूंश्च गृह्णीयान्नवधान्यकम् ॥
हिरण्यं रजतं ताम्रं आयसं त्रपुकांस्यकम् ।
सौवर्णं कूर्मरूपं च सौवर्णं शङ्खचक्रकम् ॥
एतान् सर्वान् समानीय निक्षिपेत् गर्भभाजने ।
मृदं गृहित्वा सामुद्रीं परिकुर्यात् प्रदक्षिणम् ॥

पार्वतीं पूर्वतो न्यसेत्तीर्थजां दक्षिणे तथा ।
नदीजां पश्चिमे भागे हृदजामुत्तरे तथा ॥
कुलीरमृदमाग्नेय्यां नैर्ऋत्ये वाल्मीकीं मृदम् ।
हलजां दिशि मारुत्यामैशान्यां हस्तिदन्तजाम् ॥
वृषभस्य विषाणस्यां ब्रह्मस्थाने निवेशयेत् ।
कन्दमौत्पलमैन्द्रे स्याद्यमस्यथ कौमुदम् ॥
नैलोत्पलं प्रतीचीने कशेरवमुदग्दिशि ।
ब्रह्मस्थाने भवेत्पद्मं ततो धातून् विनिक्षिपेत् ॥
पूर्वे मनःशिलां याम्ये हरितालं च वारुणे ।
अञ्जनं धनदाशायामाग्नेय्यां दिशि सीसकम् ॥
सौराष्ट्रं नैर्ऋत्ये भागे वायवीये तु रोचनाम् ।
ईशाने गैरिकं मध्ये पारदं ब्रह्मणः पदे ॥
वज्रं पूर्वे भवेद्याम्ये वैडूर्यं पश्चिमे मणिः ।
कौबेरे पुष्यकं भागे स्फटिकं ज्वलने भवेत् ॥
नैर्ऋत्ये मौक्तिकं वायौ चन्द्रकान्तशिला तथा ।
महेश्वरे महानीलं पद्मरागं तु मध्यमे ॥
शालिबीजं भवेत्प्राच्यां  नीवारं दक्षिणे तथा ।
कङ्गुं प्रतीच्यां धनदे प्रियङ्गुं ज्वलने तथा ॥
माषो नैर्ऋत्यभागे स्यात्तिलो मुद्गस्तु मारुते ।
ऐशाने वेणुधान्यं स्याद्यवः स्याद्ब्रह्मणः पदे ॥
हिरण्यं पुर्वदिग्भागे दक्षिणे रजतं भवेत् ।
पश्चिमे ताम्रमाधाय निक्षिपेदुदगयसम् ॥
आग्नेये त्रपुं राक्षस्यां कास्यं मारुतदिश्यपि ।
सौवर्णं कूर्ममैशान्यां दरं च हेमनिर्मितम् ॥
चक्रं जाम्बूनदं मध्ये विन्यसेत् मूलविद्यया ।
[सुवर्णं रजतं ताम्रमायसं त्रपुकं तथा ।
कूर्मं शेषं खगं पद्मं शङ्खं चक्रं तथा धनुः ॥

गदां चैव महाभाग सर्वं कुर्याद्दिरण्मयम्।
सर्वमेतत् समानीय न्यसेद् वै गर्भभाजने ।।]

एतानि विष्णौ गर्भन्यास द्रव्याणि । दुर्गालक्ष्म्योः द्रव्याणि विष्णौ कथितानि परन्तु दुर्गायां गरुडस्य स्थाने सिंहः भवति ।

अजे - समुद्रे पर्वते नद्यां ह्रदे तीर्थे खले तथा।
कुलीरवासे वल्मीके विषणाग्रे वृषस्य च ।।
कुञ्जरस्य विषाणाग्रे स्थानेष्वेषु पृथक् पृथक्।
रक्तोत्पलस्य पद्मस्य तथा नीलोत्पलस्य च ।।
कुमुदस्य मुनिश्रेष्ठ गह्णियान्मूलमुत्तमम्।
मनःशिलां सीसकं च हरितालं तथाञ्जनम् ।।
सौराष्ट्रीं रोचनं गन्धं पारदं गैरिकं तथा।
वज्रं समौक्तिकं चैव वैडूर्यं शङ्खमेव च ।।
स्फटिकं पुष्यरागं च चन्द्रकान्तं तथैव च।
महानीलं पद्मरागं गृह्णीयात्सप्रयत्नतः ।।
शालीनिवारनिष्पावयवमुद्गकुलित्थकान्।
तिलगोधूमकुल्माषान् गह्णियाद् देशिकोत्तमः ।।
सुवर्णं रजतं ताम्रमायासं त्रपुसीसके।
कूर्मं हंसं तथा पद्मं कुण्डिकामक्षसूत्रकम् ।।
सुवर्णनिर्मिताः सर्वे विन्यसेत् गर्भभाजने।

सरस्वत्याम् - पार्वतीं नदीजां चैव सामुद्रीं तीर्थजां तथा ।
वाल्मीकीं हलजां ह्रद्यां दन्तिदन्तजमेव च ।।
न्यसेद्पूर्वादिषु मध्ये वृषशृङ्गस्थमेव तु।
नीलोत्पलस्य पद्मस्य तथा रक्तोत्पलस्य च ।
कुमुदस्य च मूलानि गह्णियान्मुनिसत्तम ।।
सीसं मनःशिलां चैव हरितालमञ्जनामपि ।
सौराष्ट्रीं रोचनां चैव गैरिकं गन्धकं तथा ।।
पादरसं चैव धातून्विन्यसेत् मूलविद्यया ।

कुलिशं मौक्तिकं चैव वैडूर्यं शङ्खमेव च ॥
स्फटिकं पुष्परागं च चन्द्रकान्तं सुनीलकम् ।
पूर्वादिदिक्षु विन्यस्य पद्मरागं तु मध्यमे ॥
यवव्रीहिनिवारश्च प्रियङ्गुतिलवैणवः ।
गोधूमं सर्षपं चैव सिद्धार्थं नवमे न्यसेत् ॥
सुवर्णं रजतं ताम्रं सीसं पूर्वादिषु क्रमात् ।
सुवर्णकलशं मालां वीणां रजतनिर्मितम् ॥
हंसं वह्न्यादिषु न्यस्य मध्ये सौवर्णपङ्कजम् ।

**उमेशे -** अन्तरावरणे प्राच्यां सामुद्रीं विन्यसेन्मृदम् ।
नादेयमथ ताटाकीं दर्भमूलगतामपि ॥
कुलीरावतकां चापि वल्मीकवृषशृङ्गजाम् ।
गजदन्तगतां चापि चाष्टौ चाष्टदिशासु च ॥
संयोज्य  ता मृदाश्चाष्टौ सर्वा ब्रह्मपदे न्यसेत् ।
पङ्कजोत्पल कल्हार कन्दाश्च कुमुदस्य वै ॥
रक्तोत्पलस्य श्वेतस्य पद्मस्य कशेरुणः ।
तथा कुवलयस्यापि तत्रैवावरणे पुनः ॥
सर्वाश्च मध्यमे कुन्दान् सर्वलोकेशमण्डले ।
[श्रीवत्सं पूर्णकुम्भं च भेरीं दर्पणमेव च ॥
मत्स्ययुग्माङ्कुशौ चैव शङ्खकेसरिणो तथा ।]
वज्रप्रवालनीलेन्द्र नीलमौक्तिकपुष्पकम् ।
प्रोक्ताब्जरागवैडूर्य दीप्तशक्तिं स्मरन्न्यसेत् ॥
हरिताल शिलाकाङ्क्षि तालसूतानि गैरिकान् ।
धातून् सुगन्धशृङ्गाख्यान् धृतिवीर्यात्मकान् न्यसेत् ॥
बीजानि व्रीहिगोधूम तिलमाषान् प्रदक्षिणम् ।
मुद्गं च यवनीवारशामाकानन्तरेऽखिलान् ॥
चन्दनागरु कर्पूर लवङ्गैला लताफलम् ।
तक्कोलेनाष्टगन्धस्तु न्यसेत्पूर्वादिषु क्रमात् ॥

शङ्खं च शूलखट्वाङ्गौ परशुं वृषभं तथा।
पिनाकं हरिणं पाशं हैमं शैवे तु विन्यसेत् ॥

कुमारे - माणिक्यं स्यान्मरकतं नीलं स्फटिकमेव च।
पूर्वादिषु चतुर्दिक्षु वैडूर्यं मौक्तिकं पुनः ॥
पुष्यरागं प्रवालञ्च वह्निकोणादिषु न्यसेत्।
पारदं धातुरागश्च गैरिकश्च मनःशिलाम् ॥
अञ्जनं हरितालञ्च माक्षिकश्चाद्भूतं तथा।
सौराष्ट्रं विन्यसेत्तेषां पूर्वादिषु गुरूत्तमः ॥
काञ्चनं रजतं ताम्रमारकूटमपि त्रपु।
कांस्यं सीसमयश्चैव पित्तालश्च तथा न्यसेत् ॥
एवं नवस्तु कोष्ठेषु विन्यस्य च महामुने।
शालिकोद्रवनीवारप्रियङ्गु तिलसर्षपान् ॥
यववेणुकुलित्थश्च तथा निष्पावमाडकम्।
गोधूमं माषमुद्गाश्च श्यामकं कुष्ठ षोडश ॥
पूर्वादिषु क्रमान्न्यस्त्वा पद्ममुत्पलमेव च।
बदरी मुसलश्चापि रात्रिं ह्रीबेरमेव च ॥
उशीरश्च कुशेरुश्च दिक्षु पूर्वादिषु न्यसेत्।
विष्णुक्रान्तं सहदेवीं गोक्षुरं बिल्वमेव च ॥
शमीपत्रमपामार्गं कदम्बश्च विदिक्षु च।
पर्वते च नदीतीरे वल्मीके कर्कटावटे ॥
दन्तिदन्ते वृषे शृङ्गे सस्यक्षेत्रे तडागके।
हलोदुम्बरमूले च दशमृद्ग्राह्य बुद्धिमान् ॥
चतुर्दिक्षु स्वस्तिकाक्षमालां शक्तिश्च कुक्कुटम्।
मयूरं च सुवर्णेन मध्यमे गजमेव च ॥

सूर्ये - मृण्मूलन्यासद्रव्याणि विष्णौ कथितान्येव च।
हरितालं मनःशिलां तोलिकं माक्षिकं पुनः।
हेममुखीं गैरिकं च गन्धकं चाभ्रं पारतम् ॥

कुलिशार्कमणिं नीलं महानीलं समौक्तिकम् ।
पुष्यरागं गारुडं च वैडूर्यं पद्मरागकम् ॥
ताम्रमायसं त्रपुकं पित्तलं रजतं तथा ।
कांस्यं सीसं देवलोहं सौवर्णपङ्कजं न्यसेत् ॥
गणपतौ - पर्वते नद्यां तीर्थे च ह्रदे च कर्कटालये ।
वाल्मीके शालिक्षेत्रे च विषणाग्रे गजस्य तु ॥
वृषस्य शृङ्गसम्भूता प्रशस्ता नवमृत्तिका ।
पद्मस्य नीलोत्पलस्य कैरवस्य तथैव च ॥
रक्तोत्पलस्य मूलानि मध्ये पुर्वादिषु न्यसेत् ।
मन:शिलां हरितालं अञ्जनं श्यामसीसके ॥
सौराष्ट्रं रोचनं चैव गैरिकां पारदं न्यसेत् ।
वज्रं च मौक्तिकं चैव वैडूर्यं जलजं तथा ॥
स्फटिकं पुष्यरागं च चन्द्रकान्तं तथैव च ।
महानीलं पद्मरागं रत्नन्यासे परिग्रहेत् ॥
शालिनीवारशामाकाः कङ्कुर्माषास्तथैव च ।
कुलित्थां निष्पावकं चैव तिलां मुद्गां च विन्यसेत् ॥
सुवर्णं रजतं ताम्रं आयासं त्रपुकं शुभम् ।
कूर्मं पद्मं तथा शूलं मूषकं दन्तमङ्कुशम् ॥
वारणं च सुवर्णेन विन्यसेत् गर्भभाजने ।
वैश्रवणे - नद्याश्चोभयतस्तिरान्नागवल्मीककोष्ठकात् ।
क्षेत्राद्धृदाच्चमच्छैलाद्वेदिमध्याच्च सागरात् ॥
पद्मस्य नीलोत्पलस्य कैरवस्य तथैव च ॥
रक्तोत्पलस्य मूलानि मध्ये पुर्वादिषु न्यसेत् ।
शालिनिनीवारशामाकाः कङ्कुर्माषास्तथैव च ॥
कुलित्थां निष्पावकं च तिलां मुद्गां च विन्यसेत् ।
वज्रं मरकतं यक्षे पद्मरागं प्रवालकम् ॥
मुक्ता पुष्यमहानीलेन्द्रनीलं सूर्यकान्तकम् ।

गन्धकं च रसं चैव हरितालं मनःशिलाम् ॥
सौराष्ट्रीं माक्षिकरसौ गैरिकं च रसेन्द्रकम् ।
सुवर्णं रजतं ताम्रमायासं त्रपुसीसके ॥
आरकूटं च विदलं कास्यं मध्यादितः क्रमात् ।

अन्येषु - पर्वते वराहघृष्टे नदितीरे च वल्मिके ।
शालिक्षेत्रे वृषशृङ्गे हस्तिनः कर्कटालये ॥
हले गोपादसम्भूता मृत्तिका न्यासकर्मणि ।
कुमदस्यारविन्दस्य कशेरुत्पलयोस्तथा ॥
नीलोत्पलस्य पञ्चैतान् कुन्दानापि समाहरेत् ।
कुलिशं मौक्तिकं चैव विद्रुमं गारुडं तथा ॥
वैडूर्यं पुष्यरागं च नीलं गोमेधिकं शुभम् ।
पद्मरागं न्यसेत् मध्ये धातुन्यासं समाचरेत् ॥
अञ्जनं हरितालं च श्यामं चैव मणिःशिलाम् ।
सौराष्ट्रिं सीसकं चैव गैरिकं माक्षिकं तथा ॥
न्यसेत् गर्भपात्रे तु परादं मूलविद्यया ।
तिलनीवारमुद्राश्च माषाश्चैव ससर्षपा ॥
श्यामाकाशालिकुलित्थाः प्रियङ्गुर्नवबीजकाः ।
काञ्चनं रजतं ताम्रमयासं कांस्यसीसके ॥
पित्तालं देवलोहं च सुवर्णपङ्कजं न्यसेत् ।

गर्भपात्रं अस्त्रमन्त्रेण प्रोक्ष्य, सुरभिमुद्रया अमृतीकृतमिति भावयेत् । गर्भपात्रे मूलमन्त्रेण 'देवतां' आवाह्य, गायत्रीमन्त्रेण अभ्यर्च्य, गर्भन्यासहोमं कुर्यात् । स्थण्डिले अग्निं प्रतिष्ठाप्य, अन्वाधानम् - 'देवतां' मूलमन्त्रेण अष्टोत्तर शतवारं आज्येन, पुनः गायत्रीमन्त्रेण समिच्चर्वाज्यतिलद्रव्यैः प्रत्येकं अष्टाविंशतिवारं, भूरादिसप्तव्याहृतिभिः एकैकवारं आज्येन, इन्द्रादि लोकपालेभ्यः एकैकवारं आज्येन, पर्वातादिभ्यः एकैकवारमाज्येन....इत्यादि । पर्वतादिदेवताः - ॐ पर्वतेभ्यः स्वाहा । समुद्रेभ्यः । आदित्येभ्यः । वसुभ्यः । मरुद्भ्यः ।

ऋषिभ्यः । वेदेभ्यः । शास्त्रेभ्यः । पुराणेभ्यः । पातालेभ्यः । दिग्भ्यः । नागेभ्यः । गणेभ्यः। भूतेभ्यः । नरेन्द्रेभ्यः । ग्रहेभ्यः । सर्वेभ्यः स्वाहा

होमं परिसमाप्य, सम्पाताज्यं गर्भपात्रे समर्प्य, प्रणवेन अग्निगतचैतन्यं गर्भपात्रे उद्वासयेत् । ततः इष्टकागर्तं संशोध्य, मार्जनादिकं कुर्यात् ।

शक्तयो विमलाद्यस्तु इष्टकानान्तु देवताः ।
न्यसनीया यथा योग्यं मध्ये न्यस्या त्वनुग्रहा ॥

पूर्वादिक्रमेण इष्टकासु मध्ये गर्ते च तत्तद्देवतानवशक्तीः आवाह्य सम्पूजयेत् । ततः फलदानादिकं कृत्वा, विप्रान् मङ्गलसूक्तानि पठन्, गुरुः गर्भपात्रं गृहित्वा तिष्ठन्, ॐ सर्वभूतधरे कान्ते पर्वतस्तनमण्डिते ।

समुद्रपरिधाने त्वं देवि गर्भं समाश्रय ॥

इति जपन् निशायां गर्ते निदध्यात् । मूलमन्त्रेण गर्भपात्रे 'देवतां' आवाह्य सम्पूज्य, निवेद्य, नीराज्य, संरक्षेत् । तत्र उत्तरभागे शिल्पिशालां निर्माय बिम्बं, प्रासादं च कारयेत् ।

## ॥ शिलापरिग्रहविधिः ॥

शुभशकुनयुत शुभदिवसे शिलापरिग्रहार्थं हरिगुरुइष्टदेवताः सम्प्रार्थ्य, ब्राह्मणान् भोजयित्वा, स्वस्तिवाचनं कुर्यात् । कूटादिकं सङ्गृह्य, शिल्पिकुशल यजमानपरिवारैः सह -

नमस्तेऽस्तु जगत्पाल(ले) भक्तानुग्रहकारक(रिणी) ।
शिलां दर्शय त्वं देव(वि) प्रतिमार्थं सुसिद्धिदम् ॥

इति सम्प्रार्थ्य, शिलापरिग्रहार्थं पूर्णकुम्भप्रदीपसुकुसुमादि मङ्गलद्रव्यैः सह वेदवाद्यादि घोषैः समन्वितं उदङ्मुखं, प्राङ्मुखं, ईशाभिमुखं वा व्रजेत् । गमनकाले शवदर्शनेत्यादि अशुभशकुनप्राप्तपक्षे तद्दिने शिलापरिग्रहं अकृत्वा, शान्तिवाचनपूर्वकान्य शुभदिवसे शिलापरिग्रहं विधिवत् कुर्यात् । सुलक्षणसम्पन्नां एकवर्णीयां दृढशिलां परिग्रहेत् । प्रतिमानिर्माणार्थं पुंशिलां,

पीठार्थं स्त्रीशिलां, ब्रह्मशिलार्थं नपुंसकशिलां च परिगृह्य, तत्र मण्डपं निर्माय, मण्डपभूमिं गोमयलेपनादिभिः संशोध्य, पताकादिभिः भूषयेत् । पुण्याहवाचनं वाचयित्वा मण्डपस्य अष्टदिक्षु अष्टकलशान् संस्थाप्य, इन्द्रादीन् प्रपूजयेत् । शिलोपरि मूले वा कलशमेकं संस्थाप्य कालत्रयेषु 'देवतां' अर्चयेत् । रात्रौ पूजानन्तरं पूर्वोक्त प्राच्येभ्येत्यादि मन्त्रैः (लक्ष्म्यादिषु देवतेभ्येति) बलिं दत्त्वा -

ॐ नमः सर्वलोकाय विष्णवे प्रभविष्णवे ।

विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः ॥ इति सम्प्रार्थ्य,

पश्चिमे दर्भशय्यायां प्राक्छिरः स्वापयेत् । स्वप्ने शुभे सति सा शिला योग्या, स्वप्ने सामान्ये सति मध्यमा, स्वप्ने अशुभे सति वर्ज्यशिला इति । स्वप्ने अशुभे, अन्यां योग्यां शिलां पुनः परिग्रहेत् । स्वप्ने कल्पितदेवता स्वरूपे दृष्टे ततैव प्रतिमां रचयेत् । प्रातः कलशान् उद्वास्य शुभमुहूर्ते बिम्बरचनं प्रारम्भं कुर्यात् । दारुप्रतिमापक्षे शिलापरिग्रहवत् याज्ञीयवृक्षपरिग्रहं कुर्यात् । अथ वृक्षप्रार्थना -

वृणोमि देव(वि)पूजार्थं सर्वसम्पत्करं तथा ।
स्थावरत्वादितो गच्छ दिव्यरूपमनुत्तमम् ॥
हिनस्मि नाहं त्वा वृक्ष किन्तु मुञ्चामि जन्मतः ।

योग्यवृक्षजातयः- अगुरुर्देवदारुश्च राजवृक्षश्च चन्दनम् ।
बिल्वकाम्रोनमेरुश्च निम्बः खदिर एव च ॥
शिरीषः पनसश्चैव वकुळः कुटजोऽर्जुनः ।
शिंशुपश्च कदम्बश्च दिरीषश्चम्पकस्तथा ॥
काश्मर्यो मधुकस्सालश्शमी पुन्नाग एव च ।
रक्तचन्दनमित्येते प्रतिमार्थमुदाहृतम् ॥

योग्यशिलाः - हेमकूटश्च निषधो हिमवान्नीलपर्वतः` ।
मन्दरो माल्यवाँश्चैव त्रिकूटो मलयाचलः ॥
गन्धमादनमेरुश्च दशैते सर्वतोत्तमाः ।

एतेषु प्रतिमा ग्राह्या तदलाभे शिलां शृणु ॥
भूगताया शिला ग्राह्या तदलाभे शिलां शृणु ।
गिरौ च चित्रकूटाख्ये रैवताख्ये महागिरौ ॥
सिंहाचले चित्रकूटे वेङ्गटेदर्दुरेतथा ।
तथाश्वेतगिरौ ग्राह्या तदलाभे शिलां शृणु ॥
भूगता या शिलाप्रोक्तास्तासां वक्ष्यामिलक्षणम् ।
वारुणी चैव माहेन्द्री आग्नेयी वायवी तथा ॥
चतस्रस्तु शिलाः प्रोक्तास्तासां लक्षणमुच्यते ।
या पुष्पवनसङ्कीर्णा जलाशयसमावृता ॥
सा क्षिती वारुणी ज्ञेया तत्रत्या कामदा शिला ।
यस्यां चोत्तरतस्योयं व्रीहिक्षेत्रं तु दक्षिणे ॥
पश्चिमे क्षीरवृक्षाश्च सा माहेन्द्रीति किर्तिता ।
पलाशखदिराश्वत्थ-काश्मीरः पूर्वदक्षिणः ॥
तिंत्रिण्याश्चकपोताश्चगृद्ध्राश्चैवतु वायसाः ।
बलाहका बकाश्चैव दृश्यन्ते यत्र सन्ततम् ॥
आग्नेयी सा क्षिती ज्ञेया तत्रदाः कामदाशिलाः ।
पुण्यक्षेत्रे शुभे देशे ब्रह्मवृक्षनिरन्तरे ॥
कुशकाशोदकयुते मृगैःकृष्णैर्निषेविते ।
पद्मोत्पलसमाकीर्ण-व्रीहिक्षेत्रनिरन्तरे ॥
हिंतालपूगपुन्नाग-नारिकेळसमन्विते ।
तपस्विजनसम्बन्धे देशे ग्राह्याशिलास्सदा ॥

वर्जनीयशिलानि – तोयमन्तर्गतं स्वल्पं खनने यत्र दृश्यते ।
पिलुश्लेष्मातकाकीर्णस्नुद्विभीतकसंयुता ॥
तृणोदकविहीना च शर्करोत्करसंयुता ।
सृगाला यत्र दृश्यन्ते तथैव मृगतृष्णकाः ॥
वायवी सा क्षितिः ज्ञेया शिला तत्र तु वर्जिता ।

नदीतिरे कूपतटे पूतिभूमौ चतुष्पदे ॥
वल्मीके पितृभुवौ च लवणोदक सङ्कुले ।
अमेध्यभूमौ शबरचण्डालादिनिषेविते ॥
देवालयसमीपे च तप्ते वा चातपादिभिः।
देशे वर्ज्याश्शिलास्सर्वाः गृहीता चेदनर्थता ॥

## ॥ आलयपरिग्रहः ॥

तत्र शिल्पियजमानयोः संवादः । तद्यथा, यजमानः -

त्वं निर्मितं दारुशिलादिखण्डैः देव(वी) प्रतिष्ठार्थमिदं सुगेहम् ।
तक्षन् प्रयच्छाद्य सुशान्तचेताः येनात्र कुर्मो विधिनाङ्गकर्म ॥

शिल्पी - त्वया सम्पादितं पुण्यं दशांशं देहि मे प्रभो ।
तद्गृहित्वा मुदा गेहं प्रदास्यामि नरोत्तम ॥

यजमानः – मया सम्पादितं पुण्यं प्रदास्यामि कदाचन ।
त्वमीप्सितं धनं रत्नं गृहाणालयकारक ॥

शिल्पी - मया कृतमिदं गेहं आज्ञया तव वै प्रभो ।
प्रयच्छामि प्रतिष्ठार्थं वृद्धिर्भवतु ते सदा ॥

एवं यजमानः शिल्पिनं वस्त्राभरणदक्षिणादिभिः सन्तोष्य, तस्य हस्तात् प्रासादं स्वीकृत्य, आचार्याय समर्पयेत् ।

## ॥ बिम्बपरिग्रहः ॥

अथ यजमानः बिम्बकृतशिल्पिनं वस्त्राभरणदक्षिणादिभिः सन्तोष्य, तस्य हस्तात् बिम्बं परिगृह्य, आचार्याय दद्यात् । बिम्बं पूर्वाभिमुखतया भद्रासने संस्थाप्य, ततः गुरुः तं बिम्बं शिल्पिनः पुरतः यजमानहस्तात् प्रतिगृह्य, ऊर्ध्वगतदर्भाग्रकराभ्यां बिम्बस्य चरणद्वयं गृह्णीयात् (दक्षिणकरेण दक्षिणपादं

वामकरेण वामपादं इत्यर्थः) । शालग्रामस्य पुरतः फलपुष्पताम्बूलादिकं विन्यस्य, हरिगुरु-इष्टदेवताः प्रार्थयेत् ।

## ॥ प्रतिष्ठासङ्कल्पः ॥

आचम्य, प्राणानायम्य, भूतोच्चाटनादिकं विधाय, देशकालौ सङ्कीर्त्य, 'देवतामूर्ति'प्रेरणया, 'देवतामूर्ति'प्रीत्यर्थं, मम(यजमानस्य)सकुटुम्बानां, समस्तभक्तजनानां 'देवता'सम्पूर्णानुग्रहप्रसादसिद्ध्यर्थं, क्षेमस्थैर्यवीर्य विजयाभयायुरारोग्यानन्दऐश्वर्याभिवृद्ध्यर्थं, सर्वेषां समस्तजनानां सुखशान्ति-युतजीवनप्राप्तिद्वारा, परमात्मनः चरणारविन्दयोः अविच्छिन्नभक्ति, देशेविदेशेषु च सर्वेषां विष्णुसर्वोत्तमत्वपरिपालन मनः प्राप्त्यर्थं, एतस्मिन् देशे अतिवृष्ट्यानावृष्टिदोषपरिहारद्वारा यथाकाल सुवृष्टिप्राप्तिद्वारा वापीकूप तटाकादीनां परिपूर्णत्वेन पूर्वोत्तराणां सस्यानां समृद्ध्यर्थं, सकलजीवानां सुखशान्तिप्राप्त्यर्थं, सर्वेषां भक्तजनानां परस्पर सौम्येन चिरकालसुखसंसार निर्वहणयोग्यतासिद्ध्यर्थं, लोककल्याणार्थं 'देवता' प्रतिष्ठामहोत्सवाख्यं कर्म करिष्ये ।

## ॥ तोरणमुहूर्तः ॥

ततः द्वारसमीपे स्वस्तिकायां तोरणं संस्थाप्य, गन्धपुष्पादिभिः अलङ्कृत्वा, आचम्य, प्राणानायम्य, भूतोच्चाटानादिकं कृत्वा, सङ्कल्प्य, गुरुं गणपतिं च सम्प्राथ्र्य, ॐ पं पद्माय नमः इति तोरणे पीठं सम्पूज्य, 'अग्निमीळे' इति मन्त्रेण ऋग्वेदं, 'इषे त्वोर्जे' इति मन्त्रेण यजुर्वेदं, 'अग्न आ याहि' इति मन्त्रेण सामवेदं, 'शं नो देविरिति' मन्त्रेण अथर्ववेदं, 'गन्धद्वारामिति' मन्त्रेण श्रियं, 'यस्ते स्तनः' इति मन्त्रेण वाणीं, 'भारती पवमानस्य' इति मन्त्रेण भारतीं, 'गौरीर्मिमाय' इति मन्त्रेण गौरीं, 'इन्द्राणीमासु' इति मन्त्रेण शचीं च आवाह्य, ॐ मङ्गलतोरणदेवताभ्यो नमः इति षोडशोपचारैः सम्पूज्य, नीराज्य, मङ्गलसूक्तानि पठन् द्वारे तोरणं संस्थापयेत् ।

## ॥ उग्राणमुहूर्तः ॥

तत्रस्थितान् सर्वान् यज्ञसम्भारान् गृहित्वा, सुवासिनी ब्राह्मणान् अग्रतः कृत्वा, वाद्यादिघोषैः सह सुमङ्गलद्रव्य सहितः, सपूर्णकुम्भः, यजमानः 'भद्रं कर्णेभिः' इत्यादि पठन् यागमण्डपं प्रदक्षीणीकृत्य मण्डपस्य पश्चिमद्वारमागत्य द्वारदेशे प्रार्थयेत् ।

आगच्छ देवि कल्याणि वसुधे लोकधारणि ।
पृथिव त्वं ब्रह्मदत्तासि कश्यपेनाभिवन्दिता ॥
भूतधात्री रत्नगर्भा विपुला सागराम्बरा ।
अस्मिन् यज्ञे महादेवि विघ्नं विध्वंसयाम्बिके ॥

इति सम्प्रार्थ्य फलपुष्पाञ्जलिं दत्त्वा, ॐ भूम्यै नमः इति मन्त्रेण सम्पूज्य,

ॐ भूमिर्धेनुर्धरणी लोकधारिणी ।
उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥

इति संवन्द्य, प्रसन्नार्घ्यं समर्पयेत् ।

ॐ उदात्यैर्जिहते बृहद्द्वारो देवीर्हिरण्ययीः । पवमानेन सुष्टुताः ॥

इति द्वारपालदेवते अभिवन्द्य पश्चिमद्वारेण प्रवेशयेत् । उपयुक्तान् सर्वान् सम्भारान् उग्राणे निक्षिप्य पूरयेत् । अथ पुण्याहवाचनं वाचयित्वा, नान्दीसमाराधनं कुर्यात् ।

## ॥ नान्दीमुखम् ॥

अग्निष्वत्ता बर्हिषद आज्यपाः सोमपा इति ।
अमूर्तास्तेषु चत्वारः पितरश्च पितामहाः ॥
प्रपितामहास्तथा प्रोक्तस्समूर्तास्तेष्विति त्रयः ।
अमूर्ता देवकार्येषु समूर्ताः पितृकर्मसु ॥
अग्निजिह्वा विप्रजिह्वा विश्वेदेवा द्विधा स्मृताः ।
नान्दीमुखे सत्यवसू काम्यके धुरिलोचनौ ॥
क्रतुदक्षावुत्सवे तु पार्वणे तु पुरूरवाः ।
सपिण्डीकरणश्राद्धे अष्टकायां तथैव च ॥

विश्वेदेवाः कालकामौ विप्रजिह्वा दशस्मृताः ।

करिष्यमाण'देवता'प्रतिष्ठामहोत्सवकर्मणः अभ्युदयार्थं मातृकापूजनपूर्वक नान्दी-समाराधनं करिष्ये इति सङ्कल्प्य, स्वस्तिकां प्रतिष्ठाप्य, तन्मध्ये मातृकापूजनं कुर्यात् ।

गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥
धृतिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥
वाराही च तथेन्द्राणी चामुण्डा सप्तमातरः ।

इति गौर्यादिषोडशमातृः ब्राह्म्यादिसप्तमातृः, दुर्गां, गणपतिं च स्वस्तिके आवाह्य, सम्पूज्य,

ॐ गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥

इति मन्त्रेण प्रार्थयेत् । अथ नान्दीशोभनदेवताप्रीत्यर्थं नान्दीसमाराधनाख्यं करिष्ये इति सङ्कल्प्य, तथा - अग्निष्वत्ताः पितृगणाः नान्दीमुखाः इदं वः पाद्यमर्घ्यमिदं च स्वाहा नमः । भूर्भुवःस्वः । अयं च वृद्धिः इति पाद्यं अर्घ्यं च दद्यात् । बर्हिषदाः पितृगणाः...वृद्धिः । आज्यपाः पितृगणाः...वृद्धिः। सोमपाः पितृगणाः...वृद्धिः । क्रतुदक्षसंज्ञका विश्वेदेवाः नान्दीमुखाः इदं वः पाद्यमर्घ्यमिदं च स्वाहा नमः । भूर्भुवःस्वः । अयं च वृद्धिः । अग्निष्वत्ताः पितृगणाः नान्दीमुखाः उभयोरिदमासनगन्धाद्युपचारकल्पनं स्वाहा नमः । भूर्भुवःस्वः । अयं च वृद्धिः इति गन्धादिकं दद्यात् । बर्हिषदाः पितृगणाः... वृद्धिः । आज्यपाः पितृगणाः...वृद्धिः । सोमपाः पितृगणाः... वृद्धिः । क्रतुदक्षसंज्ञका विश्वेदेवाः नान्दीमुखाः उभयोरिदमासन- गन्धाद्युपचार कल्पनं स्वाहा नमः । भूर्भुवःस्वः । अयं च वृद्धिः । अग्निष्वत्ताः पितृगणाः नान्दीमुखाः युग्मब्राह्मणभोजनपर्याप्तमिदमामं सोपस्कर ताम्बूल दक्षिणं स्वाहा नमः । भूर्भुवःस्वः । अयं च वृद्धिः । बर्हिषदाः पितृगणाः...वृद्धिः । आज्यपाः पितृगणाः...वृद्धिः। सोमपाः पितृगणाः... वृद्धिः । क्रतुदक्षसंज्ञका विश्वेदेवाः

नान्दीमुखाः युग्मब्राह्मण भोजन पर्याप्तमिदमामं सोपस्करताम्बूलदक्षिणं स्वाहा नमः। भूर्भुवःस्वः। अयं च वृद्धिः।

उपास्मै गायता नरः पवमानायेन्दवे। अभि देवाँ इयक्षते॥

अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः। देवं देवाय देवयु॥

स नः पवस्व शं गवे शं जनाय शमर्वते। शं राजन्नोषधीभ्यः॥

बभ्रवे नु स्वतवसेऽरुणाय दिविस्पृशे। सोमाय गाथमर्चत॥

हस्तच्युतेभिरद्रिभिः सुतं सोमं पुनीतन। मधावा धावता मधु॥

कृतस्य नान्दीश्राद्धस्य साङ्गतासिद्धर्थ्यं द्राक्षाऽमलककन्दमूलयवांश प्रत्याम्नायं किंचित् हिरण्यं सम्प्रददे श्रियै। इयं च वद्धिः।

अग्निष्वत्ता बर्हिषद आज्यपाः सोमपास्तथा।
एते भवन्तु मे प्रीताः प्रयच्छन्तु च मङ्गलम्॥

इति सम्प्रार्थ्य, कर्मावसानपर्यन्तं नान्दीस्वस्तिकं प्रतिष्ठाप्य, कर्मान्ते विसर्जयेत्।

## ॥ ऋत्विग्वरणम् ॥

आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः।
तथा प्रतिष्ठाकार्ये त्वं आचार्यो भव सुव्रत॥

'देवता'प्रतिष्ठामहोत्सवं कर्तुं आचार्यं त्वामहं वृणे।

यथा चतुर्मुखो ब्रह्मा स्वर्गे लोके पितामहः।
तथा त्वं देव(वि) यागेऽस्मिन् ब्रह्मा भव बुधोत्तम॥

ब्रह्माणं त्वामहं वृणे ।

मूर्तिपास्तु यथा स्वर्गे दिगीशा मूर्तिधारकाः।
तथा त्वं देव(वि)यागेऽस्मिन् मूर्तिपो भव वै द्विज॥

मूर्तिपो त्वामहं वृणे ।

इति यथा शक्ति ऋत्विजो वृणुयात्। ब्राह्मणान् अभ्यर्च्य, फलताम्बूल-वस्त्रादिभिः सन्तोष्य,

अस्य यागस्य निष्पत्तौ भवताऽभ्यर्थिता मया।

सुप्रसन्नाः प्रकुर्वन्तु कर्मेदं विधिपूर्वकम् ॥

इति सम्प्रार्थयेत् । तेच विप्राः -

अस्य यागस्य निष्पत्तौ भवन्ताऽभ्यर्थिता वयम् ।
सुप्रसन्नाः करिष्यामः कर्मेदं विधिपूर्वकम् ॥

ॐ तथा, वृताः स्मः । यथाज्ञातं कर्म करिष्यामः इति ब्रूयुः ।

## ॥ कौतुकबन्धनम् ॥

द्वादशाङ्गुलपरिमितं हरिद्राखण्डयुतं ग्रन्थित्रयसमन्वितं कौशेयसूत्रं पञ्चगव्य पुण्याहकलशजलैः अभिषिच्य, शुद्धपात्रे संस्थाप्य आचम्य, 'देवता' प्रतिष्ठाकर्मणि सङ्कल्पप्रभृतिस्नपनकर्मावसानपर्यन्तं स्पृष्टास्पृष्टदोषपरिहारार्थं रक्षार्थं विघ्ननाशनार्थं च रक्षासूत्रबन्धनं करिष्ये इति सङ्कल्प्य, सूत्रे ॐ पं पद्माय नमः इति पद्मपीठं सम्पूज्य, सूत्रेषु महाशेषं, ग्रन्थिषु गौतमं, हरिद्रामूले हिमांशुं च नाममन्त्रेण आवाह्य, सम्पूज्य

ॐ शेषराज नमस्तेस्तु नमस्ते धरणीधर ।
सूत्ररूप नमस्तेस्तु सर्वमङ्गलदायक ॥ इति प्रार्थयेत् ।

सूत्रं ब्रह्मगायत्र्या (अस्त्रमन्त्रेण वा) अभिमन्त्र्य, दक्षिणकरे बध्नीयात् । तत्र मन्त्रः -

ॐ विश्वेत्ता ते सवनेषु प्रवाच्या या चकर्थ मघवन्निन्द्र सुन्वते ।
पारावतं यत्पुरुसम्भृतं वस्वपावृणोः शरभाय ऋषिबन्धवे ॥

स्त्रीदेवतायां 'श्रिये जातः' इति मन्त्रेण वामकरे बध्नीयात् ।

## ॥ स्थानशुद्धिः ॥

अथ आचार्यः खननयोग्यप्रदेशे उपविश्य, आचम्य, प्राणानायम्य, देवालयगतमूत्ररुधिर शवादिस्पर्शन, पतितादीनां प्रवेश, उलूककाकगृध्रश्व-गर्दभोष्ट्रसूकरशिवावानरडुण्डुभादीनां गर्भगृहप्रवेशादि सम्भावित सामान्य दोषपरिहारार्थं शुद्ध्यर्थं च खननादि सप्तशुद्धिं करिष्ये इति सङ्कल्पं कुर्यात् ।

खननं हरणं दाहः पूरणं गोनिवासनम् ।

विप्रोच्छिष्टं पञ्चगव्यं सप्तैताः स्थानशुद्धयः ॥

खदिरकृतखनित्रं अस्त्रमन्त्रेण प्रोक्ष्य, सम्पूज्य तेन खनित्रेण,

ॐ कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन ।
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥

इति मन्त्रेण यथा योग्यं खात्वा तत्पांसुं,

ॐ तव वायवृतस्पते त्वष्टुर्जामातरद्भुत । अवांस्या वृणीमहे ॥

इति मन्त्रेण निर्ऋतिकोणे संत्यजेत् । तत्रगर्ते दर्भाक्षतान् निक्षिप्य लक्ष्मीनारायणौ ध्यात्वा, औपासनक्रमेण अग्निं प्रतिष्ठाप्य स्थानशुद्धिहोमं कुर्यात् । अग्नौ वराह सप्ताक्षरीमन्त्रेण अष्टाविंशतिवारं आज्यं हुत्वा, अस्त्रमन्त्रेण सितसर्षपं, ॐ लं स्वाहा इति तिलैः, ॐ वं स्वाहा इति दूर्वाभिः, ॐ रं स्वाहा इति अक्षतद्रव्येण, ॐ यं स्वाहा इति आज्येन, ॐ हं स्वाहा इति मधुना पृथक् अष्टवारं हुत्वा, व्याहृत्या पूर्णाहुतिं हुत्वा भस्मादिकं संत्यजेत् । ॐ 'शं नो देविरिति' मन्त्रेण पञ्चगव्यैः गर्तं आप्लावयेत् । ध्रुवाद्यौरिति मन्त्रेण कुशमूल, तुलसीवनस्थ, नदी, औषधीवनस्थ, यज्ञकुण्डस्थ, तीर्थ, गोनिवासात् आहृताभिः शुद्धाभिः मृद्भिः गर्तमापूर्य दृढीकृत्य गोपूजां कुर्यात् ।

ॐ आ गावो अग्मन्नुत भद्रमक्रन्त्सीदन्तु गोष्ठे रणयन्त्वस्मे ।
प्रजावतीः पुरुरूपा इह स्युरिन्द्राय पूर्वीरुषसो दुहानाः ॥

इति गोमिथुनं निवास्य, सम्पूज्य, तृणाङ्कुरं यवसादिकं दत्त्वा, भूमिं संशोध्य, ब्राह्मणान् भोजयेत् । उपहारेण वा सन्तोष्य, दक्षिणां दत्त्वा, उच्छिष्टादिकं त्यक्त्वा, स्थलं परिशोध्य, गायत्र्या पञ्चगव्यैः प्रोक्षेत् ।

## ॥ प्रासादशुद्धिः ॥

प्रासादस्य दक्षिणपार्श्वे द्वादशपदयुक्तमण्डलं विलिख्य, तस्मिन् पश्चिमादि पूर्वान्तक्रमेण क्रमात् पलाशशाखासहदेवीसमन्विता साग्रदर्भमुष्टिं, गोमयजलं, सिद्धार्थं, दर्भमुष्टिद्वयं, दशपुष्पाणि, त्रिगुणीकृतसूत्रं, दर्भरज्जुं, ओषधीव्रजं,

साग्रसमूलदर्भान्, चन्दनोदकं, पँचगव्यं चेति द्वादशशोधनद्रव्याणि न्यसेत् । आचम्य, प्राणानायम्य, प्रासादस्थित समस्तदोषपरिहारद्वारा पावित्र्यसिद्ध्यर्थं प्रासादशुद्धिं करिष्ये इति सङ्कल्प्य, शङ्खपूजां विधाय, गुरुं गणपतिं च सम्पूज्य, स्वस्तिके ॐ पं पद्माय नमः इति पीठं सम्पूज्य, अस्त्रदेवतां आवाह्य सम्पूज्य, क्रमात् संस्पृश्य, अस्त्रमन्त्रं सञ्जप्य, नीराज्य प्रार्थयेत् । प्रासादस्य द्वारसमीपे स्थित्वा, अस्त्रमन्त्रं जप्त्वा, प्रासादं निरीक्ष्य, दक्षिणकरतले शङ्खात् जलं गृहित्वा, अष्टवारं प्रणवमन्त्रं सञ्जप्य, ॐ फट् इति प्रासादं प्रोक्ष्य, तालत्रयादिना रक्षां कुर्यात् । गायत्र्या पलाशशाखासहदेवीसमन्विता साग्रदर्भमुष्ट्या आग्नेयादीशपर्यन्तं सम्मार्ज्य, ॐ यं ॐ इति गोमयजलेन सम्प्रोक्ष्य, शतवारमस्त्रेणाभिमन्त्रितसिद्धार्थं मूलमन्त्रेण प्रासादे सर्वत्र विकीर्य, तालत्रयादीना रक्षेत् । ॐ यं ॐ इति दर्भमुष्ट्या सम्मार्ज्य, अस्त्रमन्त्रेण पुनः दर्भमुष्ट्या सम्मार्ज्य, दशपुष्पाणि अस्त्रमन्त्रेण विकिरेत् । दिग्बन्धनं कृत्वा, प्रासादद्वारसमीपे उपविश्य, भूदेवीं ध्यात्वा, भूम्याः शोषणदहनप्लावनानि कृत्वा, तत्र स्थळे भूदेव्याः सान्निध्यं सञ्चिन्त्य जलगन्धादिभिः पूजयेत् । सूत्रं दर्भदाम च गृहित्वा ॐ अं विश्वाय नमः ॐ, ॐ उं तैजसाय नमः ॐ, ॐ मं प्राज्ञाय नमः ॐ, इति मन्त्रत्रयान् आवृत्या प्रासादस्य ईशकोणमारभ्य कपोतोपरि ईशकोणावसानं संवेष्ट्य, गायत्र्या ओषधीव्रजेन सम्मार्ज्या, गायत्र्या पञ्चगव्यं प्रोक्ष्य, पुनः दशपुष्पाणि विकीर्य, वायुबीजेन मुष्ट्या सम्मार्ज्य, पुनः अस्त्रमन्त्रेण मुष्ट्या सम्मार्ज्य, साग्रदर्भान् विकीर्य, मूलमन्त्रेण चन्दनोदकं च प्रोक्ष्येत् । राक्षोघ्नसूक्तेन धूपदीपेन च परितः सम्भूप्य, रक्षार्थं देवागारे ईशान्यकोणे कलशं संस्थाप्य, अस्त्रदेवतां आवाह्य, सम्पूज्य, सम्प्रार्थ्य, प्रतिष्ठान्तं रक्षेत् ।

देवी च दूर्वामधुकन्मुसल्यः क्रान्ता हरेरञ्चलिका च ।
लक्ष्मी च भद्राः मधमल्लिका च सम्मोहिनीत्थं कुसुमा दशैते ॥

## ॥ अग्निकार्यनिरूपणम् ॥

**अरणिमन्थनपद्धतिः -** बालाग्निमन्थनात् प्रोक्तः सूर्यकान्ताद्युवा स्मृतः ।
वृद्धाग्निं लौकिकं विद्यादागमप्रोक्तवार्त्मना ॥
प्रतिष्ठा यज्ञकर्मादौ बालाग्निस्सततं भवेत् ।
प्रायश्चित्तोत्सवादौ तु युवाग्निस्तत्र कीर्थ्यते ॥
नित्ययागविधौ काम्य वृद्धाग्निं सम्प्रकीर्तयेत् ।
उत्तमो मन्थिताग्निश्च मध्यमः सूर्यकान्तजः ॥
अधमो लौकिकः प्रोक्तः दैवकार्येषु सर्वदा ।
लौकिकाग्नि हुताद्धोमाद्द्विगुणं सूर्यकान्तजे ॥
तस्माद्दशगुणं ब्रह्मन् मन्थिताग्नौ फलं भवेत् ।
यथाऽश्वथं समाश्रित्य सवदाहमुपस्थितः ॥
तथैव सर्वदेवाश्च मत्सान्निध्यं समाश्रिताः ।
तत्रैव निवसन्त्यस्मात्तद्वृक्षजनितोऽनलः ॥
साक्षान्ममस्वरूपः स्यातदग्नौ हुतमव्ययम् ।
सर्वेषामपि देवानां प्रियं हितकरं भवेत् ॥
तस्मात् सर्वप्रयत्नेन यज्ञाद्युत्तमकर्मसु ।
मन्थनेनैव मार्गेण श्रेष्ठमग्निं प्रसादयेत् ॥

इति भगवद्वचनानुसारेण अरणीमथनजनितवैष्णवाग्नौ होमः सर्वसु देवतासु प्रशस्तः । पुण्याहवाचनं वाचयित्वा, विष्णुगायत्र्या मन्थनपात्राणि पञ्चगव्यैः सम्प्रोक्ष्य, अस्त्रमन्त्रेण भूमिं गोमयेन संशोधयेत् । पद्ममण्डलं विलिख्य, 'स्योना पृथिवीति' मन्त्रेण भूमिं सम्प्रार्थ्य, तदुपरि 'ओषधय संवदन्ते' इति मन्त्रेण द्रोणमानेन तदर्धेन वा पीठं प्रकल्प्य, तदुपरि 'युवं वस्त्रेति' मन्त्रेण अष्टदलपद्मयुतं वस्त्रं आच्छाद्य, 'पवित्रं तेति' मन्त्रेण कूर्चं विन्यस्य, तदुपरि 'ध्रुवाद्यौरिति' मन्त्रेण मन्थनपात्राणि संस्थापयेत् ।

आचार्यस्त्वरणीमध्ये श्रीसूक्तेनैव वर्त्मना ।
श्रियमावाह्य विधिवत् अर्घ्याद्यैः स्वयमर्चयेत् ॥
ततस्तु दण्डमध्ये च नृसूक्तेन विधानतः ।

विष्णुमावाह्य तत्पश्चात् पूजयेत् कमलासन ॥
अनन्तं तु रज्जुमध्ये पट्टिकायां सुदर्शनम् ।
क्रमादावाह्य सम्पूज्य स्वस्वमन्त्रैर्द्विजोत्तमः ॥
तव वायुरिति ब्रह्मन् पश्चादावातवायु च ।
उच्चरन् सर्वपात्राणि अभिमन्त्र्य तदा गुरुः ॥
अरण्यं दण्डमासाद्य अग्निं दूतमिति क्रमात् ।
ऋत्विग्भिर्मन्थयेदग्निं यावद्वह्नेस्तु सम्भवः ॥

अरणीमध्ये श्रीसूक्तेन पराशक्तिश्रियं, पुरुषसूक्तेन दण्डमध्ये परमपुरुषं च षोडशोपचारैः सम्पूज्य, रज्जौ अनन्तं, पट्टिकायां सुदर्शनं च सम्पूज्य, मन्थनपात्राणि 'तव वाय', 'आवात वायु' इत्यादि वायुमन्त्रैः अभिमन्त्र्य, अग्निं दूतमित्यादि अग्निमन्त्राणि पठन् अग्निमन्थनं कुर्यात् । वह्नेरुद्भवकाले विप्रेभ्यः फलदक्षिणादिकं दत्त्वा, अग्निं सङ्गृह्य रक्षेत् ।

कुण्डसंस्कारविधिः - वीक्षणं प्रोक्षणं चैव ताडनाभ्युक्षणे तथा ।
खननं पूरणं चैव समीकरण सेचने ॥
कुण्ठनं मार्जनं चैव त्रिसूत्रीकरणं पुनः ।
अर्चनं वज्रकरणं चतुष्पथविभावनम् ॥
तनुपादाक्षिकरणं संस्काराष्टादशा स्मृताः ।

आचम्य, प्राणानायम्य, सङ्कल्प्य, गोमयालिप्तं, रङ्गवल्यादिभिः सुशोभितं कुण्डं 'ॐ हैं नमः प्रकाशप्रज्वलनेत्राभ्यां वौषट्' इति मन्त्रेण संवीक्ष्य, 'ॐ आं ह्रीं क्ष्रौं क्रों हुं फट्' इति मन्त्रेण शङ्खोदकेन त्रिवारं प्रोक्ष्य, 'ॐ हः नमः दीप्तोदृप्तप्रभाय अस्त्राय फट्' इति पुष्पैः ताडयित्वा, 'ॐ हां नमः परंब्रह्मशिरसे स्वाहा' इति अभ्युक्षणं कुर्यात् । 'ॐ आं ह्रीं क्ष्रौं क्रों हुं फट्' इति मन्त्रेण कुण्डान्तः यथायोग्यं खनित्वा, तत्पांसुं निर्ऋतिकोणे संत्यजेत् । 'ॐ हं नमः ॐ हंसः शुचिषदे हृदयाय नमः' इति गर्तं शुद्धाभिः मृद्भिः सम्पूर्य, 'ॐ क्षीं क्षिः नमः नारायणाय विश्वात्मने ह्रीं स्वाहा' इति मन्त्रेण समीकरणं कृत्वा, 'ॐ हां नमः परंब्रह्मशिरसे स्वाहा' इति मन्त्रेण सेचनं कुर्यात् । प्रणवेन कुण्ठनं कृत्वा, 'ॐ हः नमः दीप्तोदृप्तप्रभाय अस्त्राय फट्' इति मन्त्रेण गन्धतोयेन मार्जनं

कुर्यात् । 'ॐ हुं नमः शाश्वतशरण्य कवचाय हुम्' इति मन्त्रेण मेखलां त्रिगुणीकृतसूत्रेण संवेष्ट्य, उपरिगतमेखलां 'ॐ अं विश्वाय नमः ॐ' इति अभ्यर्च्य , पुनः मध्यममेखलां 'ॐ उं तेजसाय नमः ॐ' इति अभ्यर्च्य, ततोऽधमेखलां 'ॐ मं प्राज्ञाय नमः ॐ' इति अर्चयेत् । 'ॐ आं ह्रीं क्ष्रौं क्रों हुं फट्' इति मन्त्रेणाभिमन्त्रित साग्रदर्भैः कुण्डभित्तिगणं सर्वं 'ॐ हं नमः ॐ हंसः शुचिषदे हृदयाय नमः' इति मन्त्रेण परिभूष्य, कुण्डमध्ये ॐ ब्रह्मणे नमः, ॐ वैवस्वताय नमः, ॐ सोमाय नमः इति मन्त्रत्रयेण पश्चिमादिपूर्वान्तः तिस्रः रेखाः पुनः ॐ रुद्राय नमः, ॐ विष्णवे नमः, ॐ शक्राय नमः इति मन्त्रत्रयेण दक्षिणाद्युत्तरान्तः तिस्रः रेखाश्च दर्भकाण्डेन विलिख्येत् ।

अष्टाक्षरेण तदनु शालिधान्यं विनिक्षिपेत् ।
तस्मिन् शलाकया स्वर्णकृतया च चतुर्मुख ॥
रेखाष्टकं प्रागुदक्च लिखेच्छास्त्रविधानतः ।
तत्र चैकोनपञ्चाशत् कोष्ठानि विभजेद्गुरुः ॥
मध्यमे कोष्ठभूभागे तु चन्द्रमण्डलमालिखेत् ।

| | | | | | | |
|---|---|---|---|---|---|---|
| शं | षं | सं | झं | ञं | टं | ठं |
| वं | छं | ज | लृं | लॄं | एं | डं |
| लं | चं | ॠं | अं | आं | ऐं | ढं |
| रं | ङं | ऋं | ॐ न मों नां रा यं णां यं | इं | ओं | णं |
| यं | घं | ऊं | उं | ईं | औं | तं |
| मं | गं | खं | कं | अः | अं | थं |
| भं | बं | फं | पं | नं | धं | दं |

तस्मिन्नष्टाक्षरं बीजं विन्यसेत् क्रमयोगतः ॥

तद्बहिस्त्वष्टकोष्ठकोणेषु अकाराद्यक्षरान् लिखेत् ।
ऋकारान्तं ततः पश्चात् तद्बहिः कोष्ठभूमिषु ॥
षोडशेषु लृकारादिजकारान्तानि विन्यसेत् ।
तद्बाह्यकोष्ठभूभागे चतुर्विंशतिधा कृते ॥
झकारादि सकारान्तं वर्णान् विलिखेत् क्रमात् ।
योनिमध्ये हकारं च लकारं च क्षकारकम् ॥

चतुष्पथोपरि शालीन् शालिपिष्टं वा अष्टाक्षरेण निक्षिप्य, अष्टाक्षरेण मातृकामन्त्रैश्च तस्मिन् सुवर्णशलाकाया लिपियन्त्रं विलिख्येत् । हकारं ळकारं क्षकारं च योनिमध्ये विलिख्य, यन्त्रं अष्टाक्षरेण मातृकामन्त्रैश्च अर्चयेत् ।

तादात्मनि हरिं ध्यायेत् कुण्डे देवीं श्रियं तथा ॥
विष्णुवीर्यात्मकं वह्निं निक्षिपेत् प्रणवेन ह ।
कुर्यात् क्रियाः षोडश च व्याहृतिभिः पृथक् पृथक् ॥

यन्त्रमध्ये साग्रदर्भाक्षतान् न्यस्य, गन्धद्वारामिति मन्त्रेण पराशक्तिश्रियं आवाह्य, ब्रह्मा ऋषिः । दैवी गायत्री छन्दः । पराशक्ति श्रीर्देवता

ॐ ह्रां हृदयाय नमः । ह्रीं शिरसे स्वाहा । ह्रूं शिखायै वषट् । ह्रैं कवचाय हुम् । ह्रौं नेत्राभ्यां वौषट् । ह्रः अस्त्राय फट्

ध्यानम् - कौशेयरक्तवसनामरविन्दनेत्राम् ।
पाशाङ्कुशाभयवरोद्यतपद्महस्ताम् ॥
उद्यच्छतार्कसदृशां परमाङ्कसंस्थाम् ।
ध्यायेद्विधीशनतपादयुगां जनित्रीम् ॥

मन्त्रः - ॐ ह्रीं (पराशक्त्यै नमः) इत्यष्टवारं जपित्वा, पुनः सहस्रशीर्षेति मन्त्रेण परमपुरुषनारायणं आवाह्य, प्रणवं सञ्जप्य, सम्पूज्य, नीराज्य -

कुण्डमध्ये स्थितां लक्ष्मीं सर्वाभरणभूषिताम् ।
सर्वावयवसम्पूर्णां ऋतुस्नातां विचिन्तयेत् ॥
देवं नारायणं ध्यात्वा सर्वलक्षणलक्षितम् ।
चतुर्भुजं विशालाक्षं कोमलं पीतवाससम् ॥

इति ध्यात्वा, सम्प्रार्थयेत् । ॐ ह्रीं [पराशक्त्यै नमः] इति त्रिवारं व्याप्य, रक्षेत्।

होमविधिः - संस्कारकृतकुण्डे विष्णुवीर्यात्मकं अग्निं प्रतिष्ठाप्य, स्वगृह्योक्तविधानेन होमं कुर्यात् । विष्णुप्रधाने अन्वाधानम् - अस्मिन् अन्वाहिते अग्नौ, अग्नेः षोडशसंस्कारसिद्ध्यर्थं व्यस्तसमस्तव्याहृतिभिः षोडशवारमाज्येन, काल्यादिसप्त जिह्वेभ्यः एकैकवारं आज्येन (काली कराली च मनोजवा च सुलोहिता या च सधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुचीति वह्नेर्जिह्वाभ्य आभ्यो जुहुयाद्धूतानि ॥), वैष्णवत्वसिद्ध्यर्थं अष्टाक्षर-द्वादशाक्षरमन्त्रैः अष्टाष्टवारं आज्येन, विष्णुगायत्र्या अष्टवारं आज्येन, पुरुषसूक्तेनप्रत्यृचं एकैकवारं आज्येन, समस्तव्याहृत्या पूर्णाहुत्या चाज्येन, परदेवतादि पीठदेवतामन्त्रैः सकृत्सकृदाज्येन, जातवेदसमग्निमिध्मेन, प्रजापतिं चाघारदेवते आज्येन, अग्निसोमौ चक्षुषी आज्येन, गायत्र्या पक्वं, अत्र प्रधानं.....(वक्ष्यमाणस्य अन्वाधानस्य योजना कर्तव्या), लक्ष्म्यादि आवरणदेवतामन्त्रैः सकृत्सकृदाज्येन, शेषेण स्विष्टकृतमग्निं, इध्मसन्नहेन रुद्रं, विश्वान् देवान् संस्रावेण अयासमग्निं-देवान्-विष्णुं-अग्निं-वायुं-सूर्यं-प्रजापतिं चैताः प्रायश्चित्तदेवताः आज्य द्रव्येण, ज्ञाताज्ञात दोषनिबर्हणार्थं अनाज्ञातद्वयमग्निं, न्यूनातिरिक्तदोष निबर्हणार्थं अग्निं, मन्त्रविपर्यासादि दोषप्रायश्चित्तार्थं मरुतश्च पृथक् पृथक् आज्येन एता अङ्गदेवताः, प्रधानदेवताः प्रायश्चित्तदेवतास्ताः सर्वाः सन्निहितास्सन्तु । एवं साङ्गोपाङ्गेन कर्मणा सद्यो यक्ष्ये ।

अन्येषु - अस्मिन् अन्वाहिते अग्नौ, अग्नेः षोडशसंस्कारसिद्ध्यर्थं व्यस्तसमस्त व्याहृतिभिः षोडशवारमाज्येन, काल्यादिसप्तजिह्वाभ्यः एकैकवारं आज्येन (काली कराली च मनोजवा च सुलोहिता या च सधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुचीति वह्नेर्जिह्वाभ्य आभ्यो जुहुयाद्धूतानि ॥), वैष्णवत्वसिद्ध्यर्थं अष्टाक्षरद्वादशाक्षरमन्त्रैः अष्टाष्टवारं आज्येन, विष्णुगायत्र्या अष्टवारमाज्येन, पुरुषसूक्तेन प्रत्यृचमेकैकवारं आज्येन, समस्तव्याहृत्या

पूर्णाहुतिं चाज्येन, परदेवतादि पीठदेवतामन्त्रैः सकृत्सकृदाज्येन, 'देवतामूर्तिं' तत् मन्त्रेण अष्टोत्तरशतवारं (अष्टाविंशतिवारं वा) आज्येन, लक्ष्म्यादि आवरणदेवतामन्त्रैः सकृत्सकृत् आज्येन, जातवेदसमग्निं इध्मेन, प्रजापतिं चाघारदेवते आज्येन, अग्निसोमौ चक्षुषी आज्येन, गायत्र्या पक्वं, अत्र प्रधानं....(वक्ष्यमाणस्यन्वाधानस्य योजना कर्तव्या), शेषेण स्विष्टकृतमग्निं, इध्मसन्नहेन रुद्रं, विश्वान् देवान् संस्रावेण अयासमग्निं, देवान्, विष्णुं, अग्निं, वायुं, सूर्यं, प्रजापतिं चैताः प्रायश्चित्तदेवताः आज्यद्रव्येण, ज्ञाताज्ञात दोषनिबर्हणार्थं अनाज्ञातद्वयं अग्निं, न्यूनातिरिक्त दोषनिबर्हणार्थं अग्निं, मन्त्रविपर्यासादिदोषप्रायश्चित्तार्थं मरुतश्च पृथक् पृथक् आज्येन एता अङ्गदेवताः, प्रधानदेवताः प्रायश्चित्तदेवतास्ताः सर्वाः सन्निहितास्सन्तु । एवं साङ्गोपाङ्गेन कर्मणा सद्यो यक्ष्ये ।

इध्मलक्षण - इध्ममेकविंशत्य कुशाभ्यां बन्धयेत्ततः ।
समित्प्रादेशयुगळं चतुर्विंशाङ्गुळः कुशैः ॥

ब्रह्मकूर्चादयः - चतुर्विंशतिदर्भैश्च ब्रह्मकूर्चादयः स्मृता ।
मूलमङ्गुळमुत्सृज्य तदग्रं विसृजेद्बुधः ॥
पवित्रग्रन्थिवद्ग्रन्थिर्वेणिरूपं तदाकृतिः ।
त्रिःप्रादेशंतु परिधीन्प्रादेशं स्यात्पवित्रकम् ॥

स्रुक्स्रुवौ - यज्ञाङ्गं खादिरोवापि स्रुक्स्रुवौकारयेत्सुधीः ।
चतुर्विंशांगुळायामं तदग्रे कमलाकृतिः ॥
बिलमङ्गुळमात्रं स्यात्स्रुवमेवं प्रकीर्तितम् ।
द्वादशाङ्गुळदण्डं स्याच्चतुरङ्गुळकं बिलम् ॥
जुहुरष्टाङ्गुळं चैव स्रुचमित्यभिधीयते ।

समिधः प्रमाणं दोषयुक्तसमिधः प्रयोगफलनिर्देशश्च -
आयामः समिधां तालः कनिष्ठानाहनं मतम् ।
चर्महीने निनाशः स्यात् भेदे क्षीणकुलं भवेत् ॥
आर्द्रा तु बन्धुनाशः स्यात् पुत्रनाशः पुरातने ।

तक्षासु भार्यामरणं फलहाय च शाखिनी ॥
उद्वेगाय भवेत्स्थूला ह्रस्वावग्रहकारिणी ।
दीर्घातिवृष्टिजननी त्याज्या दोषयुता समित् ॥

द्रव्यपरिमाणनिर्देशः- होमे सर्पिर्मधुक्षीरधाराः स्युश्चतुरङ्गुलाः ।
शुक्तिर्दध्नाहुतिर्ग्रासं पायसाद्याहुतिर्भवेत् ॥
भक्ष्याहुतिस्तर्तदर्धेन फलैः पुष्पैरखण्डितैः ।
निष्पावबीजमानेन धूपद्रव्याहुतिर्भवेत् ॥
अष्टाङ्गुला तदर्धा वा समिद्दूर्वा षडङ्गुला ।
पूर्णाहुतिर्घृतस्य स्यात्कुडवेन मुनीश्वर ॥
न्यूनाधिकप्रमाणेन हव्यकव्याहुतीः कृताः ।
भुञ्जते दानवाः दैत्याः न फलाय प्रकल्पते ॥

चरुपाकविधानम् - चरुपात्रद्वयं प्रोक्तं ताम्रं मृन्मयमेव वा ।
ताम्रं तु सर्वदा शस्तं तदलाभे तु मृन्मयम् ॥
पात्रं प्रक्षालयेत् पूर्वं विष्णुगायत्रिया बुधः ।
अष्टाक्षरेण मन्त्रेण स्पृशेत् प्रसृतिमुद्रया ॥
स्पृशेच्च तण्डुलान् पश्चाद् द्वादशाक्षरविद्यया ।
क्षिपेत् द्वादशमुष्टिं तु क्रमात् द्वादशनामभिः ॥
नमस्कारान्तसंयुक्तैर्ध्यात्वा नारायणं प्रभुम् ।
ततश्च चतुरो मुष्टीन् प्रक्षिपेन्मूर्तिनामभिः ॥
तण्डुलान् क्षालयेत् पश्चात् बीजेन परमेष्ठिना ।
चुल्लीमारोपयेत् पश्चाद् बीजेन पुरुषात्मना ॥
अग्निं समेवयेत् पश्चाद् विश्वबीजेन साधकः ।
निवृत्या चाभिघार्याथ सर्वेणैवावतारयेत् ॥
मूलमन्त्रेण वा सर्वं कुर्यात् तन्त्रविचक्षणः ।

वर्ज्यचरून् - विलीनं वर्जयेत् बल्यमतिपक्वं तथैव च ।
तथा व्यापक्वं सम्पूर्णं ततस्तण्डुलमेव च ॥
वर्णान्तरगतं चैव गन्धदुष्टं च धूमितम् ।
विपक्वं स्रावितं चैव आघ्रातं निर्विधानतः ॥
अवक्षतं श्वासहतं मुखवायुहतं तथा ।
पत्स्पृष्टं पशुना स्पृष्टमदीक्षितनिरीक्षितम् ॥

लङ्घितं शीतमत्युष्णं भिन्नभाण्डगतं तथा ।
क्रिमिकेशादिसंयुक्तं स्वेदबिन्दुहतं तथा ॥
मन्त्रहीनं क्रियाहीनं अगुप्तमभिभाषितम् ।
अर्कपत्रयुतं चापि वर्जयेद्यत्नतश्चरुम् ॥
अभिन्नस्तण्डुला ग्राह्या अस्विन्नाश्च तथैव च ।
अतुषा अत्वचश्चापि पाषाणक्रिमिवर्जिताः ॥
अकणाश्च रजोहीना अवाक्स्पर्शविवर्जिताः ।
अपक्वास्तण्डुलाद्यास्तु न निवेद्याः कथञ्चन ॥
पक्वमेव चरुं दद्यात् वर्जितं तु विवर्जयेत् ।
वर्जितं च चरुं मोहान्निवेदयति यो गुरुः ॥
राक्षसाश्च पिशाचाश्च हृष्टा गह्णन्ति तं चरुम् ।
कुप्यत्येव हरिश्चात्र नात्र कार्या विचारणा ॥
तस्मात् सर्वप्रयत्नेन वर्जितं तु विवर्जयेत् ।

## ॥ रक्षोघ्नहोमः ॥

देवालयस्थ समस्तभूतप्रेतराक्षसादीनां निरासार्थं, समस्तघोरोपशमनार्थं रक्षासिद्ध्यर्थं च राक्षोघ्नहोमं करिष्ये इति सङ्कल्प्य, स्थण्डिले अग्निं प्रतिष्ठाप्य अन्वादध्यात् । तद्यथा- अत्र प्रधानं लक्ष्मीनरसिंहं रक्षोघ्नमन्त्रेण (अनुष्टुप् मन्त्रेण वा) अष्टोत्तरशतवारं आज्येन, रक्षोहाग्निं कृणुष्वपाज इत्यादि अष्टादशमन्त्रैराज्येन, ये देवाः इत्यादि पञ्चभिरेकैकवारं आज्येन, दुर्गा जातवेदसे इत्यादि पञ्चभिराज्येन, 'अस्त्रदेवतां' तन्मन्त्रेण अपमार्गसमित् सर्पिश्चर्वाज्यद्रव्यैः प्रत्येकं अष्टोत्तरशतवारं, चरुशेषेणस्विष्टकृतं इत्यादिकं वदेत्

रक्षोघ्ननरसिंहमन्त्रः - ब्रह्मा ऋषिः । त्रिष्टुप् छन्दः । नरसिंहरूपी परमात्मा देवता ॐ क्ष्रौं नमो भगवते नरसिंहाय हृदयाय नमः । ज्वालामालिने दीप्तदंष्ट्राय शिरसे स्वाहा । अग्निनेत्राय सर्वरक्षोघ्नाय शिखायै वषट् । सर्वभूतविनाशनाय सर्वज्वरविनाशनाय कवचाय हुम् । दहदह पचपच रक्षरक्ष नेत्रत्रयाय वौषट् । हुं फट् स्वाहा अस्त्राय फट्

ध्यानम् - जान्वोरासक्ततीक्ष्णस्वनखरुचिलसद् बाहुसंस्पृष्टकेशः ।

चक्रं शङ्खं च दोर्भ्यां दधदनलसमज्योतिषा भग्नदैत्यः ॥
ज्वालामालापरीतं रविशशिदहनत्रीक्षणं दीप्तजिह्वम् ।
दंष्ट्रोग्रं धूतकेशं वदनमभिवहन् पातु वो नारसिंहः ॥

मन्त्रः-ॐ क्ष्रौं नमो भगवते नरसिंहाय ज्वालामालिने दीप्तदंष्ट्राय अग्निनेत्राय सर्वरक्षोघ्नाय सर्वभूतविनाशनाय सर्वज्वर विनाशनाय दहदह पचपच रक्षरक्ष हुं फट् स्वाहा।

नरसिंहानुष्टुप् मन्त्रः - ब्रह्मा ऋषिः । अनुष्टुप् छन्दः । नरसिंहरूपीपरमात्मा देवता

ॐ उग्रं वीरं महाविष्णुं हृदयाय नमः । ज्वलन्तं सर्वतोमुखं शिरसे स्वाहा । नृसिंहं भीषणं भद्रं शिखायै वषट् । मृत्युमृत्युं नमाम्यहम् कवचाय हुम् । उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखं - नृसिंहं भीषणं भद्रं मृत्योर्मृत्युं नमाम्यहम् अस्त्राय फट्

ध्यानम् - ध्यायेन्नृसिंहमुरुवृत्तरवित्रिनेत्रम् ।
जानुप्रसक्तकरयुग्ममथापराभ्याम् ॥
चक्रं दरं च दधतं प्रिययासमेतम् ।
तिग्मांशुकोट्यधिकतेजसमग्र्यशक्तिम् ॥

मन्त्रः- ॐ उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।
नृसिंहं भीषणं भद्रं मृत्योर्मृत्युं नमाम्यहम् ॥

रक्षोघ्नसूक्तम् - गौतमो वामदेवर्षिः । त्रिष्टुप् छन्दः । रक्षोहाग्निर्देवता

ध्यानम् - त्रिशूलं परशुं चैव कपालं डमरुं तथा ।
बिभ्राणमुग्रवपुषं त्रिणेत्रम् चन्द्रशेखरम् ॥
दंष्ट्राकरालवदनं भ्रुकुटीकुटिलाननम् ।
वडवाग्निसमाकारं दहन्तं भुवनत्रयम् ॥
भूतप्रेतपिशाचादीन् भक्षयन्तं महाप्रभुम् ।
एवं ध्यात्वा जपेन्नित्यं रक्षोहाग्निं समाहितः ॥

ॐ कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन ।
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥

तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानः ।
तपूंष्यग्ने जुह्वा पतङ्गानसन्दितो वि सृज विष्वगुल्काः ॥
प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः ।
यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरा दधर्षीत् ॥
उदग्ने तिष्ठ प्रत्या तनुष्व न्यमित्राँ ओषतात्तिग्महेते ।
यो नो अरातिं समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥
ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्र मृणीहि शत्रून् ॥
स ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत् ।
विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो वि दुरो अभि द्यौत् ॥
सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः ।
पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः ॥
अर्चामि ते सुमतिं घोष्यर्वाक्सं ते वावाता जरतामियं गीः ।
स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनु द्यून् ॥
इह त्वा भूर्या चरेदुप त्मन्दोषावस्तर्दीदिवांसमनु द्यून् ।
क्रीळन्तस्त्वा सुमनसः सपेमाभि द्युम्ना तस्थिवांसो जनानाम् ॥
यस्त्वा स्वश्वः सुहिरण्यो अग्न उपयाति वसुमता रथेन ।
तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग्जुजोषत् ॥
महो रुजामि बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय ।
त्वं नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः ॥

अस्वप्नजस्तरणयः सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठाः ।
ते पायवः सध्र्यञ्चो निषद्याग्ने तव नः पांत्वमूर ॥
ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् ।
ररक्ष तान्त्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाह देभुः ॥
त्वया वयं सधन्य१स्त्वोतास्तव प्रणीत्यश्याम वाजान् ।
उभा शंसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण ॥
अया ते अग्ने समिधा विधेम प्रति स्तोमं शस्यमानं गृभाय ।
दहाशसो रक्षसः पाह्य१स्मान्द्रुहो निदो मित्रमहो अवद्यात् ॥
रक्षोहणं वाजिनमा जिघर्मि मित्रं प्रथिष्ठमुप यामि शर्म ।
शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स रिषः पातु नक्तं ॥
वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा ।
प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृंगे रक्षसे विनिक्षे ॥
उत स्वानासो दिवि षंत्वग्नेस्तिग्मायुधा रक्षसे हंतवा उ ।
मदे चिदस्य प्र रुजंति भामा न वरंते परिबाधो अदेवीः ॥

## ॥ भूवराहहोमः ॥

भूखनन-दारुच्छेदन-पाषाणखण्डनादि समस्तदोषपरिहारार्थं, देवालयभूमौगत समस्त मालिन्यदोषनिवारणपूर्वक पावित्र्यसिध्यर्थं च भूवराहहोमाख्यं करिष्ये, इति सङ्कल्प्य, स्थण्डिले अग्निं प्रतिष्ठाप्य अन्वादध्यात् । तध्यथा - अत्रप्रधानं भूवराहरूपी परमात्मानं सप्ताक्षरमन्त्रेण मधुयुक्तलाज-तिल-समिदाज्यद्रव्यैः प्रत्येकमष्टोत्तरशतवारं, लक्ष्म्यादि... इत्यादि वदेत् ।

## ॥ वास्तुपूजा ॥

मण्डपे वास्तुमण्डलं विलिख्य, मण्डलस्य पूर्वदिग्भागे पद्ममण्डलोपरि स्वस्तिकां संस्थाप्य, आचम्य, प्राणानायम्य, भूतोच्चाटनाधिकं विधाय, एतत् स्थलस्थित समस्त भूतप्रेतादि क्षुद्रदेवतानिस्सरणपूर्वक समस्तमालिन्य-दोषनिवारणद्वार पावित्र्य सिद्ध्यर्थं, आलये स्थिरवास्तुसानिध्य सिद्ध्यर्थं च वास्तुपूजां करिष्ये इति सङ्कल्पं कुर्यात् । शङ्खपूजां विधाय, गरुं गणपतिं च सम्पूज्य, स्वस्तिके पीठपूजां विधाय, अष्टाक्षरमन्त्रेण ब्रह्मादि एकोनपञ्चाशद्देवतानामन्तर्यामि लक्ष्मीनारायणं विधिवत् आवाह्य, षोडशोपचारैः पूजयेत् । नैवेद्यकाले मधु, कदळीं च मिश्रितपायसं निवेद्य, नीराज्य छत्रचामरादि राजोपचारानि समर्प्य, प्रार्थयेत् । पायसं द्विभागं कृत्वा, एकभागेन वास्तुहोमं अन्येकभागेन वास्तुबलिं च कुर्यात् ।

सितचन्दनयुक्तेन श्वेतपुष्पं प्रगृह्य च ।
हरेर्ध्यानं ततः कुर्यात्स्थापयेन्मध्यमण्डले ॥
आवाह्य चासनं दद्यात्ततः पाद्यादिकत्रयम् ।
मधुपर्कं ततो दद्याद्वास्तोष्पतिमथेश्वरम् ॥
अस्य मन्त्रस्य च ऋषिश्छन्दो गायत्रमीरितम् ।
देवता च भवेद्ब्रह्मा योजयेदश्वमेधकम् ॥

वास्तुमण्डले परमपुरुषादि पृथिव्यान्तं पीठपूजां विधाय,

संस्थितोऽसौ धरां व्याप्य प्रोत्तानः कृष्णवर्णकः ।
जानुकूर्परकौ वास्तोर्वह्निवायु प्रकोष्ठकौ ॥
पितृपादपुटश्चायमीशमूर्ध्ना हृदञ्जलिः ।
ऊर्ध्वकेशः सुपीनश्च वर्तुलाक्षोऽसुराकृतिः ॥

वास्तुपुरुषं विचिन्त्य, मण्डलमध्ये कोष्ठचतुष्टये विष्णुं तस्य नाभिकमले ब्रह्माणं सञ्चिन्त्य मण्डले आवाहयेत् । ॐ पं पद्माय नमः इति पद्मपीठं सङ्कल्प्य, ॐ सृष्ट्यै नमः । ऋद्ध्यै । स्मृत्यै । मेधायै । कान्त्यै । द्युत्यै । प्रज्ञायै । धारणायै । सिद्ध्यै नमः । ॐ नमो ब्रह्मणे सर्वशक्तिकमलासनाय नमः,

योगपद्मासनं कल्पयामि इति नवशक्तिपूजां विधाय, ब्रह्माणमावाहयेत् । वास्तोष्पते इत्यस्य ईश्वर ऋषिः । त्रिष्टुप् छन्दः । ब्रह्मा देवता । आवाहने विनियोगः

ॐ वास्तोष्पते प्रतिं जानीह्यस्मान्त्स्वांवेशो अंनमीवो भंवा नः ।

यत्त्वेमंहे प्रति तन्नों जुषस्व शं नों भव द्विपदे शं चतुंष्पदे ॥

मण्डलमध्ये ॐ भूर्भुवःस्वः ब्रह्माणमावाहयामि, इत्यावाह्य, मुद्राः दर्शयेत् । ॐ ब्रह्मणे हृदयाय नमः। धात्रे शिरसे स्वाहा । विरिञ्चाय शिखायै वषट् । अजाय कवचाय हुम् । पाद्माय अस्त्राय फट्

ध्यानम् - ध्यायेन्निषण्णमजमच्युतनाभिपद्मे ।
प्रोद्यद्दिवाकरसमूहनिकाशमग्र्यम् ॥
मातृप्रकारकरमुत्तमकान्तिमद्भिः ।
वक्त्रैः सृजन्तमखिलैः परमार्थविद्याम् ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| हारि बुध | हरि | गभीर | गाहन | गहन | शुभ | त्रात | अङ्गारक दारण |
| बृहस्पति | सूर्य | | काम | | | विनायक | विदरि |
| चर | | ईशान | इन्द्र | | अग्नि | | दूत |
| चारण | स्कन्द | सोम | ब्रह्मा | | यम | | प्रद्योत |
| सञ्चर | | | | | | धातृ | द्योतन |
| प्रचर | कुबेर | वायु | वरुण | | निर्ऋति | | दरि |
| विचार | | विधातृ | | | काल | | मृत्यु |
| चार भार्गव | चार्वङ्ग | क्षण | क्षोभण | विक्षर | क्षारि | क्षरण | शनैश्चर पुष्कर |

इति ध्यात्वा, ॐ ब्रह्मणे नमः इति मूलमन्त्रमष्टवारं सञ्जप्य, पाद्यादि पुष्पान्तोपचाराणि समर्पयेत् । तत्तत् पदे इन्द्रादि वास्तुदेवताः क्रमेण आवाह्य, गन्धपुष्पाक्षताणि समर्पयेत् ।

ॐ इन्द्राय नमः । यमाय । वरुणाय । सोमाय । अग्नये । निर्ऋतये । वायवे । ईशानाय । कामाय । धात्रे । विधात्रे । स्कन्दाय । सूर्याय । विनायकाय । कालाय । कुबेराय । हारये । हरये । गभीराय । गाहनाय । गहनाय । शुभाय । त्राताय । अङ्गारकाय । दारणाय । विदरये । दूताय । प्रद्योताय । द्योतनाय । दरये । मृत्यवे । शनैश्चराय । पुष्कराय । क्षरणाय । क्षारये । विक्षराय । क्षोभणाय । क्षणाय । चार्वङ्गाय । भार्गवाय । चाराय । विचाराय । प्रचराय । सञ्चराय । चारणाय । चराय । बृहस्पतये । बुधाय नमः

सर्वे चतुर्भुजाः देवाः वास्तुदेहे व्यवस्थिताः ।
कृताञ्जलिपुटाः सर्वे खड्गखेटकृपाणयः ।
ब्रह्माणं सन्निरीक्षन्ते तद्वक्त्राभिमुखाश्रये ॥

इति ध्यात्वा, धूपदीपौ दर्श्य, नैवेद्यकाले पुष्पसहित पायसेन बलिं दद्यात् । मण्डलस्य वामभागे चतुरश्रमण्डलं कृत्वा, तदुपरि साग्रदर्भानास्तीर्य, पुष्पाक्षतान् विकीर्य, मध्ये ब्रह्माणं परितः इन्द्रादीनां च बलिं दद्यात् । ब्रह्मणे स्वाहा, भो ब्रह्मन् इमं बलिं गृहाण गृहाण, देवालयं रक्षरक्ष, इह स्थानं स्थिरीकुरु स्थिरीकुरु, बलिदानेन सुप्रीतो वरदो भव । एवमेव इन्द्रादि बुधान्त देवतानां बलिं दत्त्वा, हस्तं प्रक्षाल्य, आचम्य, नीराज्य, 'ब्रह्मादि देवताभ्यो नमः आलये सुस्थिरो भव, सुप्रतिष्ठितो भव' इति सम्प्रार्थ्य ध्रुवाद्यौरिति मन्त्रं पठेत् । वास्तुहोमः - शम्यपामार्गखदिर समिद्भिर्जुहुयात्तथा ।

वास्तुनाथस्य मन्त्रेण चरुणाजुहुयाच्छतम् ॥
चरुणा वास्तुदेवानां प्रत्येकं होममाचरेत् ।

वास्तुमण्डलस्य दक्षिणे स्थण्डिले अग्निं प्रतिष्ठाप्य वास्तुहोमं कुर्यात् । तत् ईशान्ये जलकलशं संस्थाप्य पूजयेत् । वास्तुहोमे अन्वाधानम् - अत्रप्रधानं

वास्तोष्पति ब्रह्माणं 'वास्तोष्पते प्रति जानीहि' इति मन्त्रेण शतवारं (अष्टाविंशतिवारं वा) शमीसमिद्भिः, पुनः 'वास्तोष्पते प्रतरणो' इति मन्त्रेण शतवारं (अष्टाविंशतिवारं वा) अपमार्गसमिद्भिः, पुनः 'वास्तोष्पते शग्मया' इति मन्त्रेण शतवारं (अष्टाविंशतिवारं वा) खदिरासमिद्भिः, पुनः 'अमीवहा वास्तोष्पते' इति मन्त्रेण शतवारं (अष्टाविंशतिवारं वा) पायसेन, पुनः 'वास्तोष्पते ध्रुवा' इति मन्त्रेण शतवारं (अष्टाविंशतिवारं वा) आज्येन, पुनः हिरण्यगर्भः समावर्तताग्रे इत्यादि दशमन्त्रैः एकैकवारं पायसेन, इन्द्रादि वास्तुदेवताः नाममन्त्रेण एकैकवारं पायसेन, समस्तव्याहृत्या पूर्णाहुत्या आज्येन, शंनो इद्राग्निमित्यादिमन्त्रैः एकैकवारं आज्येन, शेषेण...इत्यादि वदेत्। अथ वास्तुरक्षोघ्नहोमसम्पाताज्यं, प्रणीतजलं, हुतभस्मं, पञ्चगव्यशेषं, कलशजलं च सम्मिश्र्य, आपोहिष्ठादिमन्त्रैः, वास्तुरक्षोघ्न सूक्तादिभिश्च अभिमन्त्र्य, तेन जलेन प्रासादं अन्तर्बहिश्च प्रोक्ष्येत्।

वास्तोष्पते इति सूक्तस्य वसिष्ठ ऋषिः । त्रिष्टुप् छन्दः अन्त्या गायत्री । वास्तोष्पतिर्देवता

ॐ वास्तो॑ष्पते॒ प्रति॑ जानीह्य॒स्मान्त्स्वा॑वे॒शो अ॑नमी॒वो भ॑वा नः ।
यत्त्वेम॑हे॒ प्रति॒ तन्नो॑ जुषस्व॒ शं नो॑ भव द्वि॒पदे॒ शं चतु॑ष्पदे ॥
वास्तो॑ष्पते प्र॒तर॑णो न एधि गय॒स्फानो॒ गोभि॒रश्वे॑भिरिन्दो ।
अ॒जरा॑सस्ते स॒ख्ये स्या॑म पि॒तेव॑ पु॒त्रान्प्रति॑ नो जुषस्व ॥
वास्तो॑ष्पते श॒ग्मया॑ सं॒सदा॑ ते सक्षी॒महि॑ र॒ण्वया॑ गातु॒मत्या॑ ।
पा॒हि क्षेम॑ उ॒त योगे॒ वरं॑ नो यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥
अ॒मी॒व॒हा वा॑स्तोष्पते॒ विश्वा॑ रू॒पाण्या॑वि॒शन् । सखा॑ सु॒शेव॑ एधि नः ॥

वास्तोष्पते ध्रुवा स्थूणामितस्य काण्व इरिम्बिटिः वास्तोष्पतिर्बृहती ।
ॐ वास्तो॑ष्पते ध्रु॒वा स्थूणांस॑त्रं सो॒म्यानाम् ।
द्र॒प्सो भे॒त्ता पु॒रां शश्व॑तीना॒मिन्द्रो॒ मुनी॑नां॒ सखा॑ ॥

हिरण्यगर्भसूक्तस्य भृगु ऋषिः । त्रिष्टुप् छन्द । ब्रह्मा देवता

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥
य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य च्छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥
यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥
यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥
येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः ।
यो अंतरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥
यं क्रंदसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥
आपो ह यद्बृहतीर्विश्वमायन्गर्भं दधाना जनयंतीरग्निम् ।
ततो देवानां समवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥
यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयंतीर्यज्ञम् ।
यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम ॥
मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान ।
यश्चापश्चंद्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ॥
प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥

## ॥ मण्डपसंस्कारः ॥

आलयस्य पूर्वस्यां चैशान्ये चोत्तरेपि वा।
द्वितीयावरणे यद्वा तृतीयावरणेपि वा ॥
यागार्थं मण्डपं कुर्यात् षोडशस्तम्भसंयुतम्।
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ॥
तद्भुवं नवधा कृत्वा तन्मध्ये ब्रह्मणःपदे।
वेदीं निर्माय परितः दिक्षु कुण्डानि कल्पयेत् ॥

अधिवासार्थं अङ्कुरार्पणार्थं च एकमण्डपं, कलशस्थापनादि कर्माङ्ग अन्यं एकं मण्डपं च इति मण्डपद्वयं निर्माय, सर्वालङ्कृतमण्डपं अर्चयेत्। अथ आचार्यः 'भद्रं कर्णेभिः' इत्यादि मन्त्रघोषादिकं कृत्वा, आचम्य, मण्डपस्य प्रधानद्वारि स्थित्वा, अस्त्रमन्त्रमुच्चार्य मण्डपं निरीक्ष्य, अन्तः प्रविश्य, निरृतिकोणे उपविश्य, भूतोच्चाटनादिकं विधाय, सङ्कल्प्य, शङ्खपूजां विधाय, गुरुं गणपतिं च सम्पूज्य, प्रासादशुद्धौ उक्तक्रमेण मण्डपं संशोध्य, अथ प्रधानद्वारि स्थित्वा स्तम्भपूजनं कुर्यात्। तथा मध्यवेद्य ईशानस्तम्भे -
ब्रह्मणाते इत्यस्य विश्वामित्र ऋषिः। त्रिष्टुप् छन्दः। ब्रह्मा देवता। आवाहने विनियोगः

ॐ ब्रह्मणा ते ब्रह्मयुजा युनज्मि हरी सखाया सधमाद आशू।
स्थिरं रथं सुखमिन्द्राधितिष्ठन्प्रजानन्विद्वाँ उप याहि सोमम् ॥

ब्रह्मणे रक्तवर्णाय पद्मद्वयवराभयहस्ताय हंसवाहनाय इहागच्छागच्छ आवाहयामि इत्यावाह्य, ॐ ब्रह्मणे नमः इति पूजयेत्। आग्नेयस्तम्भे -
इदं विष्णुः काण्वो मेधातिथिः विष्णुर्गायत्री। विष्ण्वावाहने विनियोगः

ॐ इदं विष्णुर्विचक्रमे त्रेधा नि दधे पदम्। समूह्ळमस्य पांसुरे ॥

विष्णवे मेघश्यामवर्णाय चक्रशङ्खगदापद्मधराय गरुडवाहनाय इहागच्छागच्छ आवाहयामि, इत्यावाह्य ॐ विष्णवे नमः इति पूजयेत्।
नैरृत्यस्तम्भे - अघोरः काण्वो रुद्रो गायत्री। रुद्रावाहने विनियोगः

ॐ कद्रुद्राय प्रचेतसे मीळ्हुष्टमाय तव्यसे। वोचेम शन्तमं हृदे ॥

रुद्राय स्फटिकवर्णाय शूलहस्ताय वृषभवाहनाय इहागच्छागच्छ आवाहयामि इत्यावाह्य, ॐ रुद्राय नमः इति पूजयेत् । वायुकोणस्तम्भे -

इन्द्रं वो वैश्वामित्रो मधुच्छन्दा इन्द्रो गायत्री । इन्द्रावाहने विनियोगः

ॐ इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः ॥

इन्द्राय नीलवर्णाय वज्रहस्ताय ऐरावतवाहनाय इहागच्छागच्छ आवाहयामि, इत्यावाह्य ॐ इन्द्राय नमः इति पूजयेत् । ईशानस्तम्भे -

उदुत्यमिति काण्वःप्रस्कण्वर्षिः । गायत्री छन्दः । सूर्यो देवता । आवाहने विनियोगः

ॐ उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यं ॥

सूर्याय अरुणवर्णाय पद्मद्वयधराय सप्ताश्वरथवाहनाय इहागच्छागच्छ आवाहयामि, इत्यावाह्य ॐ सूर्याय नमः इति पूजयेत् ।

ईशानपूर्वयोरन्तरालस्तम्भे -

आतूनेति काण्वः कुसीदि गणपतिर्गायत्री । गणपत्यावाहने विनियोगः

ॐ आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय । महाहस्ती दक्षिणेन ॥

गणपतये रक्तवर्णाय पाशदन्ताङ्कुशाभयहस्ताय मूषिकवाहनाय इहागच्छागच्छ आवाहयामि इत्यावाह्य, ॐ गणपतये नमः इति पूजयेत् ।

पुर्वाग्नयोन्तरालस्तम्भे –

यमाय सोमं वैवस्वतो यमो यमोऽनुष्टुप् । यमावाहने विनियोगः

ॐ यमाय सोमं सुनुत यमाय जुहुता हविः ।

यमं ह यज्ञो गच्छत्यग्निदूतो अरङ्कृतः ॥

यमाय अञ्जनवर्णाय दण्डधराय महिषारूढाय इहागच्छागच्छ आवाहयामि , इत्यावाह्य ॐ यमाय नमः इति पूजयेत् ।

अग्निकोणस्तम्भे - आयं गौः सार्पराज्ञी शेषो गायत्री । शेषावाहने विनियोगः

ॐ आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ॥

शेषाय शुक्लवर्णाय हलसौनन्दधराय विष्णुतल्पाय इहागच्छागच्छ आवाहयामि इत्यावाह्य, ॐ शेषाय नमः इति पूजयेत्।

आग्नेयदक्षिणयोन्तरालस्तम्भे -

उत त्या इति कुमारः स्कन्दो गायत्री। स्कन्दावाहने विनियोगः

ॐ उत त्या यंजता हरीं कुमारात्सांहदेव्यात्। प्रयंता सद्य आ ददे॥

स्कन्दाय वह्निवर्णाय शक्तिधनुर्धराय मयूरवाहनाय इहागच्छागच्छ आवाहयामि, इत्यावाह्य ॐ स्कन्दाय नमः इति पूजयेत्।

दक्षिणनैर्ऋत्ययोरन्तरालस्तम्भे -

तव वायो वैयश्वो विश्वमुना वायुर्गायत्री। वाय्वावाहने विनियोगः

ॐ तवं वायवृतस्पते त्वष्टुंर्जामातरद्भुत। अवांस्या वृंणीमहे॥

वायवे रक्तवर्णाय गदाऽभयकराय इहागच्छागच्छ आवाहयामि, इत्यावाह्य, ॐ वायवे नमः इति पूजयेत्। ततो निर्ऋतिस्तम्भे -

त्वं नः सोम इत्यस्य गोतमो राहूगणः सोमो गायत्री। सोमावाहने विनियोगः

ॐ त्वं नः सोम विश्वतो रक्षां राजन्नघायतः। न रिंष्येत्त्वावंतः सखां॥

सोमाय गोक्षीरवर्णाय कुमुदहस्ताय श्वेताश्ववाहनाय इहागच्छागच्छ आवाहयामि, इत्यावाह्य ॐ सोमाय नमः इति पूजयेत्।

निर्ऋतिपश्चिमयोर्मध्यस्तम्भे -

उदुत्तममित्यस्य अजीगर्तिः शुनःशेपो वरुणो गायत्री। वरुणावाहने विनियोगः

ॐ उदुंत्तमं मुंमुग्धि नो वि पाशं मध्यमं चृंत। अवांधमानिं जीवसें॥

वरुणाय शुक्लवर्णाय पाशहस्ताय मकरवाहनाय इहागच्छागच्छ आवाहयामि, इत्यावाह्य ॐ वरणाय नमः इति पूजयेत्। पश्चिमवायुव्ययोर्मध्यस्तम्भे -

गृहं गृहमिति दीर्घतमा वसवः त्रिष्टुप्। वसूनामावाहने विनियोगः

ॐ गृहं गृंहमहना यात्यच्छां दिवेदिंवे अधि नामा दधांना।
सिषांसन्ती द्योतना शश्वदागादग्रंमग्रमिद्भंजते वसूंनाम्॥

अष्टवसून् अश्ववाहनसंयुक्तान् पुष्पमालादिभूषितान् इहागच्छागच्छ आवाहयामि, इत्यावाह्य ॐ वसुभ्यो नमः इति पूजयेत्।

ततो वायव्यस्तम्भे -

सोमं राजानमिति तापसो धनदोनुष्टुप् । धनदावाहने विनियोगः

ॐ सोमं राजानमवसेऽग्निं गीर्भिर्हवामहे ।

आदित्यान्विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ॥

धनदाय दिव्यमालाम्बरधराय गदाहस्ताय यक्षपूजिताय इहागच्छागच्छ आवाहयामि, इत्यावाह्य, ॐ धनदाय नमः, इति पूजयेत् ।

वायव्योत्तरन्तरालस्तम्भे -

बृहस्पते गृत्समदो बृहस्पतिस्त्रिष्टुप् । बृहस्पत्यावाहने विनियोगः

ॐ बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ।

यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥

बृहस्पतये हेमरोचनवर्णाभाय सर्वविद्याविशारदाय इहागच्छागच्छ आवाहयामि, इत्यावाह्य ॐ बृहस्पतये नमः इति पूजयेत् । उत्तरईशानयोर्मध्यस्तम्भे - भौवनो विश्वकर्मा त्रिष्टुप् । विश्वकर्मावाहने विनियोगः

ॐ वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम ।

स नो विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्मा ॥

विश्वकर्मणे शुद्धस्फटिकसङ्काशाय देवर्षिपितृभूतानां गर्भिताराय इहागच्छागच्छ आवाहयामि, इत्यावाह्य, ॐ विश्वकर्मणे नमः इति पूजयेत् ।

तोरणपूजा - उत्तरद्वारे निर्गत्य, पूर्वद्वारे 'ॐ अग्निमीळे.....रत्नधातामम्' इति मन्त्रेण अश्वत्थतोरणं न्यस्त्वा, ॐ सुशोभनाय नमः सुशोभनं आवाहयामि इत्यावाह्य, ॐ सुशोभनाय नमः इति गन्धादिभिः पूजयेत् । दक्षिणद्वारे 'ॐ इषेतोर्जे.....कर्मणे' इति मन्त्रेण औदुम्बरतोरणं न्यस्त्वा, ॐ सुभद्राय नमः, सुभद्रं आवाहयामि इत्यावाह्य, ॐ सुभद्राय नमः इति गन्धादिभिः पूजयेत् । पश्चिमद्वारे 'ॐ अग्न आयाहि.....बर्हिषि' इति मन्त्रेण वटतोरणं न्यस्य, ॐ सुकर्मणे नमः सुकर्मणमावाहयामि इत्यावाह्य, ॐ सुकर्मणे नमः इति गन्धादिभिः पूजयेत् । उत्तरद्वारे 'ॐ शं नो......वंतु नः' इति मन्त्रेण प्लक्षतोरणं न्यस्त्वा, ॐ सुहोत्रे नमः सुहोत्रमावाहयामि इत्यावाह्य, ॐ सुहोत्रे नमः इति

गन्धादिभिः पूजयेत् । इति विष्णौ तोरणपूजनम् । (दुर्गायां - अश्वत्थ न्यग्रोधोदुम्बरप्लक्षतोरणानि, शिवगणेशकुबेरस्कन्देषु प्लक्षोदुम्बरअश्वत्थ-न्यग्रोधतोरणानि, अन्येषु विष्णौ कथितान्येव)

लक्ष्म्यां तोरणदेवताः - ॐ बलाकिन्यै नमः । वनमालिन्यै । विभीषिकायै । शाङ्कर्यै नमः

दुर्गायां - ॐ यज्ञेशाय नमः । प्रभाकराय । मङ्गलाय । सुप्रभाय नमः

अजे - ॐ सुदृढाय नमः । विकटाय । सुभीमाय । सुप्रभाय नमः

सरस्वत्यां - ॐ पुष्कराय नमः । पूर्णाय । आनन्दाय । नन्दनाय नमः

हनुमति - ॐ आनन्दाय नमः । चित्रकर्मणे । भगवते । विघ्ननाशिने नमः

शिवे - ॐ प्रमोदाय नमः । अभयाय । शान्ताय । महते नमः

पार्वत्यां - ॐ भद्राय नमः । विजयाय । विजृम्भाय । लोहिताय नमः

शेषे - ॐ कल्याणाय नमः। पूर्णभद्राय । स्वस्तिलक्षणाय । आनन्दाय नमः

गरुडे - ॐ सत्याय नमः । सुपर्णाय । ताक्ष्याय । विहगेश्वराय नमः

कामे - ॐ मदनाय नमः । शुभाङ्गाय । स्मराय । विनोदाय नमः

स्कन्दे - ॐ वरदाय नमः । यशोदाय । पुष्टिदाय । श्रीपादाय नमः

सूर्ये - ॐ प्रभूताय नमः । विमलाय । साराय । समाराध्याय नमः

गणपतौ - ॐ सुपूर्णाय नमः । पूर्णभद्राय । प्रशान्ताय । विजयाय नमः

कुबेरे - ॐ भद्राय नमः । श्रीदाय । पुष्टिदाय । शुभदाय नमः

**ध्वजपूजा** - अष्टौ ध्वजाः स्थापनीयाः पूर्वादिक्रमयोगतः ।

अरुणोऽग्निनिभश्चैव कृष्णः शुक्लोऽथ पीतकः ॥
रक्तवर्णस्तथा श्वेतः सर्ववर्णस्तथैव च ।

पूर्वे अरुणपताकं संस्थाप्य, ॐ कुमुदाय नमः कुमुदमावाहयामि इत्यावाह्य, ॐ कुमुदाय नमः इति गन्धपुष्पादिभिः पूजयेत् । आग्नेय्यां रक्तपताकं संस्थाप्य, ॐ कुमुदाक्षाय नमः कुमुदाक्षमावाहयामि इत्यावाह्य, ॐ

कुमुदाक्षाय नमः इति गन्धपुष्पादिभिः पूजयेत् । दक्षिणे कृष्णपताकं संस्थाप्य, ॐ पुण्डरीकाय नमः पुण्डरीकमावाहयामि इत्यावाह्य, ॐ पुण्डरीकाय नमः इति गन्धपुष्पादिभिः पूजयेत् । नैर्ऋत्ये शुक्लपताकं संस्थाप्य, ॐ वामनाय नमः वामनमावाहयामि इत्यावाह्य, ॐ वामनाय नमः इति गन्धपुष्पादिभिः पूजयेत् । पश्चिमे पीतपताकं संस्थाप्य, ॐ शङ्कुकर्णाय नमः शङ्कुकर्णमावाहयामि इत्यावाह्य, ॐ शङ्कुकर्णाय नमः इति गन्धपुष्पादिभिः पूजयेत् । वायव्ये रक्तपताकं संस्थाप्य, ॐ सर्पनेत्राय नमः सर्पनेत्रमावाहयामि इत्यावाह्य, ॐ सर्पनेत्राय नमः इति गन्धपुष्पादिभिः पूजयेत् । उत्तरे श्वेतपताकं संस्थाप्य, ॐ सुमुखाय नमः सुमुखमावाहयामि इत्यावाह्य, ॐ सुमुखाय नमः इति गन्धपुष्पादिभिः पूजयेत् । ईशान्ये सर्ववर्णपताकं संस्थाप्य, ॐ सुप्रतिष्ठिताय नमः ॐ सुप्रतिष्ठितमावाहयामि इत्यावाह्य ॐ सुप्रतिष्ठिताय नमः इति गन्धपुष्पादिभिः पूजयेत् । इति विष्णौ ध्वजपूजानम् ।

लक्ष्म्यां ध्वजदेवतामन्त्राः - ॐ धृत्यै नमः । लज्जायै । सावित्रै । मायायै । शुद्ध्यै । तुष्ट्यै । शान्त्यै । ॐ कीर्त्यै नमः

दुर्गायां - ॐ काळ्यै नमः । कराळ्यै । विरजायै । मन्दरायै । विन्ध्यवासिन्यै । सुप्रभायै । सिंहवक्त्रायै । दैत्यमर्दिन्यै नमः

अजे सरस्वत्यां च -ॐ ऐरावताय नमः । पुण्डरीकाय । कुमुदाय । अञ्जनाय । वामनाय । पुष्पदन्ताय । सार्वभौमाय । सुप्रतीकाय नमः

हनुमति - ॐ कपीश्वराय नमः । वज्रदेहाय । दीर्घदेहाय । हरीश्वराय । सुमुखाय । रक्तनेत्राय । हैमवते । ऊर्ध्वरोमकाय नमः

शिवे - ॐ भृङ्गीशाय नमः । स्कन्दाय । वृषभाय । नन्दिने । महाकालाय । कुम्भोदराय । महोदराय । वीरभद्राय नमः

पार्वत्यां - ॐ कुन्द्यै नमः । कुमुदिन्यै । विद्यामाल्यै । विभूषिण्यै । कविष्यै । घोषिण्यै । करवीराक्षिण्यै । रेवत्यै नमः

शेषे - ॐ शेषाय नमः । वासुकये । तक्षकाय । कार्कोटकाय । पद्माय । महापद्माय । शङ्खपालाय । कुलिकाय नमः

गरुडे - ॐ खगेन्द्राय नमः । अग्निनेत्राय । मृत्युरूपाय । भयङ्कराय । नागपाशिने । वायुजवाय । अमृताय । रुद्ररूपिणे नमः

कामे - ॐ शोकाय नमः । मोहाय । विलासाय । विभ्रमाय । मदनातुराय । अपजयाय । युवाकामाय । चूतपुष्पाय नमः

स्कन्दे -ॐ देवसेनापतये नमः । अग्निलोचनाय । दण्डहस्ताय । असिधारिणे । कालपाशाय । ध्वजशेखराय । गदिने । शूलविलासिने नमः

सूर्ये - ॐ चन्द्रमसे नमः । अङ्गारकाय । बुधाय । बृहस्पतये । शुक्राय । शनैश्चराय । राहवे । केतवे नमः

गणपतौ - ॐ वज्रदन्ताय नमः । गजास्याय । भीमाय । महिषाननाय । मेघनादाय । विरूपाक्षाय । विकटाय । बहुभक्ष्यभुजे नमः

कुबेरे - ॐ मणिभद्राय नमः । पूर्णभद्राय । चेलिमालिने । शिबिकुण्डलाय । नरेन्द्राय । चरेन्द्राय । हयग्रीवकाय । धृतराष्ट्राय नमः

द्वारकलशपूजा - मण्डपस्य अन्तः प्रविश्य, दक्षिणोत्तरक्रमेण पूर्वद्वारपार्श्वयोः कलशद्वयं संस्थाप्य क्रमात् पूर्णं पुष्करं च आवाह्य सम्पूज्य, पुनः -

इन्द्रश्रेष्ठानि भार्गवः शौनको गृत्समद इन्द्रस्त्रिष्टुप् । इन्द्रावाहने विनियोगः

ॐ इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे ।
पोषं रयीणामरिष्टिं तनूनां स्वाद्मानं वाचः सुदिनत्वमह्नाम् ॥ ॥

इन्द्राय सुराधिपतये नमः आवाहयामि इत्यावाह्य सम्पूजयेत् । आग्नेयकोणे कलशमेकं प्रतिष्ठाप्य, अग्निं दूतं काण्वो मेधातिथिरग्निर्गायत्री । अग्न्यावाहने विनियोगः

ॐ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥

अग्नये तेजोधिपतये नमः आवाहयामि इत्यावाह्य, सम्पूजयेत् ।

दक्षिणद्वारपार्श्वयोः पूर्वपश्चिमक्रमेण कलशद्वयं प्रतिष्ठाप्य क्रमात् आनन्दं, नन्दनं च आवाह्य सम्पूज्य, पुनः -

यमाय मधुमत्तम इति वैवस्वतो यमो यमोबृहती । यमावाहने विनियोगः

ॐ यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन ।

इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥

यमाय धर्माधिपतये नमः आवाहयामि इत्यावाह्य, सम्पूजयेत् । नैर्ऋत्यकोणे कलशमेकं प्रतिष्ठाप्य, मोषुणः घौरःकाण्वो निर्ऋतिर्गायत्री । निर्ऋत्यावाहने विनियोगः

ॐ मो षु णः परापरा निर्ऋतिर्दुर्हणा वधीत् । पदीष्ट तृष्णया सह ॥

निर्ऋतये रक्षोधिपतये नमः आवाहयामि इत्यावाह्य, सम्पूजयेत् । नैर्ऋत्यपश्चिमयोर्मध्ये कलशमेकं संस्थाप्य, नमो अस्तु सर्पेभ्यो इति अरो नाम अनन्तः पङ्क्तिः ।

ॐ नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु ।

ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥

अनन्ताय नागाधिपतये नमः आवाहयामि, इत्यावाह्य पूजयेत् ।

पश्चिमद्वारपार्श्वयोः उत्तरदक्षिण क्रमेण कलशद्वयं संस्थाप्य, क्रमात् वीरसेनं सुषेणं च आवाह्य सम्पूज्य, पुनः -

तत्त्वायामि आजीगर्तिः शनश्येपो वरुणस्त्रिष्टुप् । वरुणावाहने विनियोगः

ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः ।

अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः ॥

वरुणाय जलाधिपतये नमः आवाहयामि, इत्यावाह्य सम्पूजयेत् । वायव्यकोणे कलशमेकं संस्थाप्य, वायो तव इति वैश्वामित्रो मधुच्छन्दा वायुर्गायत्री । वाय्वावाहने विनियोगः

ॐ वायो तव प्रपृञ्चती धेना जिगाति दाशुषे । उरूची सोमपीतये ॥

वायवे प्राणाधिपतये नमः आवाहयामि, इत्यावाह्य सम्पूजयेत् ।

उत्तरद्वारपार्श्वयोः पूर्वपश्चिमक्रमेण कलशद्वयं संस्थाप्य क्रमात् सम्भवं प्रभवं चावाह्य सम्पूज्य, पुनः –

आ प्यायस्व गौतमः सोमो गायत्री । सोमावाहने विनियोगः

ॐ आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य सङ्गथे॥
सोमाय नक्षत्राधिपतये नमः आवाहयामि इत्यावाह्य, सम्पूजयेत्। ईशान्यकोणे कलशमेकं संस्थाप्य, तमीशानस्य गौतमो ईशानो जगती। ईशानावाहने विनियोगः

ॐ तमीशानं जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे हूमहे वयम्।
पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये॥

ईशानाय विद्याधिपतये नमः आवाहयामि, इत्यावाह्य सम्पूजयेत्। ईशानपूर्वयोर्मध्ये कलशमेकं संस्थाप्य, ब्रह्मजज्ञानमिति नकुलो ब्रह्मा त्रिष्टुप्। ब्रह्मावाहने विनियोगः

ॐ ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः।
स बुध्निया उपमा अस्य विष्ठाः सतश्च योनिमसतश्च वि वः॥

ब्रह्मणे लोकाधिपतये नमः आवाहयामि, इत्यावाह्य सम्पूजयेत्। इति विष्णौ द्वारकलशपूजा।

लक्ष्म्यां द्वारकलशदेवतामन्त्राः - ॐ ज्येष्ठायै नमः। विद्यायै। श्रद्धायै। कान्त्यै। सृष्ट्यै। क्रियायै। क्षमायै। ॐ जयायै नमः

दुर्गायां - ॐ जयायै नमः। विजयायै। रौद्र्यै। भीषण्यै। शूलिन्यै। प्रभायै। अपराजितायै। ॐ जयन्त्यै नमः

अजे - ॐ सञ्जीवनाय नमः। पावनाय। धनदाय। श्रीप्रदाय। प्रशान्ताय। शिशिराय। पर्जन्याय। अशोकाय नमः

सरस्वत्यां - ॐ मेधायै नमः। प्रज्ञायै। प्रभायै। विद्यायै। धीयै। धृत्यै। स्मृत्यै। बुद्ध्यै नमः

हनुमति - ॐ वज्रदन्ताय नमः। शान्ताय। धर्मिणे। वशिने। वीरमन्ताय। सुमन्ताय। दैत्यान्तकाय। दक्षाय नमः

शिवे - ॐ महोदराय नमः। महाकालाय। महाकण्ठाय। महोरस्काय। अग्निजिह्वाय। अग्निनेत्राय। विरूपाक्षाय। विशालाक्षाय नमः

**पार्वत्यां - ॐ पालिन्यै नमः । प्लाविन्यै । क्षमायै । शान्त्यै । आनन्द्यै । भैरव्यै । अद्भुत्यै । विकृत्यै नमः**

**शेषे - ॐ नीलाय नमः । अनीलाय । कुमुदाय । कुमुदाक्षाय । कर्क्कराय । अकर्क्कराय । कुण्डोदराय । महोदराय नमः**

**गरुडे -ॐ सुमुखाय नमः । पूर्णाय । भीमदंष्ट्राय । तीक्ष्णाय । कपिलाक्षाय । दीर्घबाहवे । शत्रुघ्नाय । नागाशनाय नमः**

**कामे - ॐ शोषणाय नमः । मोहनाय । सन्दीपनाय । तापनाय । हावाय । भावाय । कटाक्षाय । भ्रूविलासाय नमः**

**स्कन्दे - ॐ निकुम्भाय नमः । कुम्भकर्णाय । कुम्भाय । कुम्भोदराय । कुम्भनासाय । कुम्भपृष्ठाय । कुम्भास्याय । कुम्भगण्डकाय नमः**

**सूर्ये - ॐ दण्डिने नमः । पिङ्गलाय । चण्डाय । तीव्राय । प्रद्योताय । द्योतनाय । प्रत्यूषाय । प्रभासाय नमः**

**गणपतौ - ॐ अविघ्नाय नमः । विघ्नराजाय । सुवक्त्राय । बलवन्ताय । गोकर्णाय । गजकर्णाय । सुसौम्याय । शुभदायकाय नमः**

**कुबेरे- ॐ शङ्खनिधये नमः । महापद्मनिधये । कुन्दनिधये । कुमुदनिधये । मकरनिधये । कच्छपनिधये । नीलनिधये । पद्मनिधये नमः**

**अथ मण्डपस्य वेदिं सम्मार्ज्य, सम्प्रोक्ष्य, प्रासादशुद्धौ उक्तक्रमेण मुष्टिसर्षपादिभिः अग्निकोणादि ईशकोणवसानां सर्वां वेदीं कलशस्थानं, अधिवासकुण्डानि च शोधयेत् । शोधनकाले सिद्धार्थं विकिरं(दशपुष्पाणि) च किञ्चित् सङ्गृह्य, ईशकोणे न्यस्त्वा संरक्षेत् । मण्डपाभिमुखं स्थित्वा सर्वालङ्कृतमण्डपं ध्यायेत् ।**

उत्तप्तोज्ज्वलकाञ्चनेन रचितं तुङ्गाङ्गरङ्गस्थलम् ।
शुद्धस्फाटिकभित्तिकाविरचितैः स्तम्भैश्च हैमैः शुभैः ॥
द्वारैश्चामररत्नराजखचितैः शोभावहैर्मण्डपैः ।
तत्रान्यैरपि शङ्खचक्रधवलैः प्रोद्भासितं स्वस्तिकैः ॥
मुक्ताजालविलम्बिमण्डपयुतैर्वज्रैश्चसोपानकैः ।

नानारत्नविनिर्मितैश्च कलशैरत्यन्तशोभावहम् ॥
माणिक्योज्ज्वलदीपदीप्तिरचितं लक्ष्मीविलासास्पदम् ।
ध्यायेन्मण्डपमर्चनेषु सकलेष्वेवं विधं साधकः ॥

इति ध्यात्वा, ॐ दिव्यमहामडपाय नमः इति गन्धपुष्पादिभिः मण्डपं अभ्यर्च्य, मण्डपस्य परितः ध्वजतोरणदेवताभ्यः लोकपालेभ्यश्च पुष्पान्नैः बलिं दत्वा, पादं हस्तं च प्रक्षाल्य, प्रधानद्वारेण मण्डपस्य अन्तः प्रविश्य, कुम्भेशकलशं, कर्करीकलशं च पूजयेत् ।

**कुम्भेशकलशपूजा** - आत्मानमन्तरात्मानं परमात्मानमव्ययम् ।
नारायणमणीयासं सृष्टिसंहारकारणम् ॥
चिद्रूपं पुरुषं विष्णुं ध्यायेत् कुम्भोदमध्यमे ।

संस्कारकृतकलशमण्डपस्य ईशकोणे पद्मोपरि धान्यादिभिः विरचितपीठे सुसंस्कृतकुम्भं संस्थाप्य, कूर्चन्यासं जलपूरणादिकं च कुर्यात् । ॐ पं पद्माय नमः इति कुम्भमूले चतुर्दलपद्मं सङ्कल्प्य, ॐ अं आत्मने नमः आत्मानं आवाहयामि इत्यावाह्य, पुनः कुम्भमध्ये ॐ पं पद्माय नमः इति अष्टदलपद्मं सङ्कल्प्य, ॐ उं अन्तरात्मने नमः अन्तरात्मानं आवाहयामि, इत्यावाह्य, पुनः ॐ पं पद्माय नमः इति कुम्भमुखे चतुर्दलपद्मं सङ्कल्प्य ॐ मं परमात्मने नमः परमात्मानं आवाहयामि इत्यावाहयेत् । कुम्भोदके 'देवतामूर्तिं' आवाह्य सम्पूज्य नीराज्य, कलशपूरणं विधाय, पीठपूजां कृत्वा, विधिवत् 'देवतां' आवाह्य, न्यासादिकं विधाय, पूजयेत् ।

**कर्करिकलशपूजा** - तत्समीपे कलशमेकं संस्थाप्य, पीठपूजां विधाय, अस्त्रदेवतां आवाह्य, सम्पूज्य नीराज्य, कलशं १०८ वारं अस्त्रमन्त्रेण अभिमन्त्रणं कुर्यात् । अथ कुम्भेश, कर्करीकलशं च उद्धृत्य कुम्भेशं पृष्ठतः कृत्वा, अस्त्रमन्त्रेण ऐशानमारभ्य करकधारया कुड्यमूले सेचयित्वा कुम्भेशेन सह दक्षिणीकृत्वा तत्रैव आगत्य कर्कर्याः पीठे पूर्वस्थापितं सर्षपं विन्यस्य, तदुपरि कर्करीं न्यसेत् । कुम्भेशस्य पीठे पूर्वं सगृहीतं विकिरं न्यस्त्वा, तत्र

कुम्भेशं न्यसेत् । कुम्भेशं सम्पूज्य, कर्करी कलशे जलमापूर्य, अस्त्रदेवतां आवाह्य, सम्पूज्य, अस्त्रेणाभिमन्त्र्य, कलशान् वस्त्रद्वयेन संवेष्ट्य, तालत्रयादीना रक्षेत् ।

## ॥ मृत्तिकाहरणम् ॥

अङ्कुरार्पणार्थं गुरुः पुण्याहवाचनं वाचयित्वा, देवताः अभिवन्द्य, मृत्तिकां सङ्गृहीतुं पुष्पवनं, नदीतीरं, ताटकादि पुण्यक्षेत्रं वा गत्वा,
स्योना पृथिवीत्यस्य काण्वो मेधातिथिः पृथिवी गायत्री । भूस्पर्शने विनियोगः

ॐ स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ॥

इति मन्त्रेण मृदं अभिमन्त्र्य, ॐ ॐ ॐ इति पुण्याहवारिभिः सम्प्रोक्ष्य, भूसूक्तं पठेत् । पृथिवीस्थं भूवराहं पाद्यादिभिः सम्पूज्य, शङ्खोदकेन प्रसन्नार्घ्यं दत्त्वा, महीद्यौरिति मेधातिथिः काण्वो द्यावापृथिव्यौ गायत्री । प्रार्थने विनियोगः

ॐ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥
ॐ भूमिर्धेनुर्धरणी लोकधारिणी । उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥

सर्वभूतधरे देवी सर्वलोकनमस्कृते ।
विष्णुपत्नि जगद्धात्रि वसुधे सस्यमालिनि ॥
पुण्यकाननकेशाद्ये पर्वतस्तनमण्डिते ।
समुद्रवसने देवि नदीविष्यनिवासिनि ॥
वल्मीकश्रवणे देवि वेदभाषिणि श्रुतिसेविते ।
फुल्लाम्बुजेक्षणे देवि प्रसीद हरिवल्लभे ॥
नमस्ते भुवनेशाने नमः सर्वसुरार्चिते ।
नमो भार्गवि मे मातः प्रणतोऽस्मि वसुन्धरे ॥
विष्णुशक्तिसमुद्भूते शङ्खवर्णे महेश्वरि ।
अनेकरत्नसङ्कीर्णे भूमि तुभ्यं नमो नमः ॥

इति सम्प्रार्थ्य, पुष्पाञ्जलिं दत्त्वा अस्त्रमन्त्रेण दिग्बन्धनं कुर्यात् । कुद्दालादि शस्त्राणि प्रणवमन्त्रेण गन्धपुष्पादिभिः अभ्यर्च्य, तेन शस्त्रेण रक्षोघ्नसूक्तेन भूमिं खनेत् । मृत्तिकासूक्तेन मृदं सङ्गृह्य, लोहादिभिः कृतशुद्धपात्रे प्रपूर्य, तालत्रयादीना रक्षेत् । (ततो नदीतीरप्रदेशात् वालुकान्, गोकुलात् गोमयं च

सङ्गृह्य) वस्त्रेणाच्छाद्य याने, गजे, हये वापि समारोप्य वेदवाद्यादिघोषैः सह ग्रामं प्रदक्षणीकृत्य, अङ्कुरार्पणमण्डपं गत्वा, उत्तरस्यां दिशि मृदादिकं न्यस्य रक्षेत् ।

## ॥ अङ्कुरार्पणम् ॥

प्रतिष्ठामहोत्सवदिनात् प्राक् नव, सप्त, पञ्च वा दिवसे शुभरात्रौ मण्डपस्य उत्तरस्यां दिशि शुभाङ्कुरार्पणमण्डलं विलिख्य, आचम्य, प्राणानायम्य, भूतोच्चाटनादिकं विधाय, सङ्कल्प्य, गुरुं गणपतिं च सम्पूजयेत् । द्वादशकोष्ठेषु व्रीहिदर्भादिभिः पीठं प्रकल्प्य, पालिकादीनि पात्राणि प्रक्षाल्य, तन्तुं तन्वन् इति मन्त्रेण त्रिगुणीकृतसूत्रं संवेष्ट्य, ॐ ॐ ॐ इति धूपयित्वा, गन्धपुष्पाक्षतदूर्वादिभिः अलङ्कृत्वा, मृत्तिकासूक्तादिभिः मृद्वालूकाकरीष चूर्णैश्च सम्यक् प्रपूर्य, प्रणवेन कूर्चान् निधाय, विष्णुसूक्तेन क्रमेण पूर्व चतुष्कोणेषु चतस्रः पालिकाः, मध्यकोष्ठचतुष्टये चतस्रो पञ्चमुखीन्, पश्चिमकोष्ठचतुष्टये चतुर् शरावाँश्च संस्थापयेत् । मुद्गादि सप्तं द्वादशं वा धान्यानि हरिद्रोदकेन, शुद्धजलेन च संक्षाल्य, तत्तद्बीजे तत्तद्देवताः आवाहयेत् । सप्तधान्यानि पक्षे : मुद्गे - विष्णुं, यवे - ब्रह्माणं, सर्षपे - रुद्रं, श्यामाके - सोमं, माषे - इन्द्रं, तिले - यमं, व्रीहौ - अग्निं च आवाह्य गन्धादिभिः पूजयेत् । द्वादशधान्याः पक्षे : मुद्गे - विष्णुं, आढके - श्रियं, यवे - ब्रह्माणं, निष्पावे - वायुं, सर्षपे- रुद्रं, माषे - इन्द्रं, कङ्गुके- स्कन्दं, तिले - यमं, शाल्यां - सूर्यं, श्यामाके - सोमं, राजमाषे - वरुणं, खल्वे - वह्निं च आवाह्य, गन्धादिभिः पूजयेत् । ईशान्यादि क्रमेण पालिकाचतुष्टये, पञ्चमुखीचतुष्टये, शरावचतुष्टयेऽपि वासुदेवसङ्कर्षणप्रद्यम्नानिरुद्धान् आवाह्य, षोडशोपचारैः पूजयेत् । पालिकादीनां पश्चिमदेशे गन्धोदकेन सम्पूरितकलशं संस्थाप्य, ॐ पं पद्माय नमः इति पीठं सम्पूज्य, ॐ राकायै नमः । कुमुद्वत्यै । नन्दायै । सन्ध्यायै । सञ्जीविन्यै । क्षमायै । जोत्स्नायै । नित्यायै । प्रभायै नमः । ॐ सं

सोमाय योगपद्मपीठात्मने नमः, योगपद्मपीठं कल्पयामि, इति नवशक्तिपूजां विधाय, ओषधीदेवता सोमं आवाहयेत्।

सं ते पयांसि इत्यस्य राहूगणो गोतम ऋषिः। त्रिष्टुप् छन्दः। सोमो देवता। सोमावाहने विनियोगः

ॐ सं ते पयाँसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः।
आप्यायमानो अमृताय सोम दिवि श्रवाँस्युत्तमानि धिष्व॥

ॐ भूर्भुवःस्वः सोममावाहयामि इत्यावाह्य, मुद्राः सन्दर्श्य, षोडशोपचारैः पूजयेत्। सोमपञ्चाक्षरी मन्त्रः - अत्रि ऋषिः। पङ्क्तिश्छन्दः। सोमो देवता ॐ सों हृदयाय नमः। मां शिरसे स्वाहा। यं शिखायै वषट्। नं कवचाय हुम्। मः अस्त्राय फट्

ध्यानम् - सोमं हस्ताभ्यां कुमुदं वरं च दधतं शशिम्।
रोहिणीप्रियं श्वेताङ्गं सर्वालङ्कारभूषितम्॥

मन्त्रः - ॐ सोमाय नमः

अङ्कुरार्पणहोमः - अग्निं संस्थाप्य विधिवन्मूलमन्त्रेण देशिकः।
समिदाज्यचरून्हुत्वा नृसूक्तेन चरुं हुनेत्॥
सोममन्त्रेण जुहुयादाज्येनाष्टोत्तरं शतम्।
सम्पाताज्येन संस्पृस्य स्पर्शमन्त्रेणपालिकाः॥
आज्यशेषं बीजपात्रे निक्षिप्य जपमाचरेत्।
शतवारं विधोर्मन्त्रं ततो विप्राभ्यनुज्ञया॥

सोमकुम्भस्य पुरतः स्थण्डिले अग्निं प्रतिष्ठाप्य, अन्वाधानम् - 'देवतां' पलाशसमिच्चर्वाज्यद्रव्यैः प्रत्येकं अष्टाविंशतिवारं, पुनः अमुकसूकस्थमन्त्रैः (वेदोक्तमन्त्र न्यासे उक्तसूक्तानि परिग्रहेत्। गौर्यां कामे कुबेरे च वेदोक्तमन्त्रेण अष्टवारं) चरुणा, समस्तव्याहृत्या पूर्णाहुत्या आज्येन, ओषधिदेवता सोमं 'सं ते पयांसि' इति मन्त्रेण (पञ्चाक्षरिमन्त्रेण वा) अष्टोत्तरशतवारं आज्येन, चरुशेषेण...इत्यादि। ततः होमं समाप्य, बीजान् सम्मिश्र्य, ओषधीदेवता सोमं आवाह्य, होमसम्पाताज्येन पालिकाः संस्पृश्य, सम्पाताज्यशेषं बीजपात्रे

निक्षिपेत् । आज्यसिक्तं बीजं स्पृशन् सोममन्त्रं अष्टोत्तरशतवारं जपित्वा, ओषधिसूक्तं च पठेत् । शोभने मुहूर्ते जलाक्तपालिकादिषु,

ॐ जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
सुब्रह्मण्य नमस्तेस्तु नमः पुरुषपूर्वज ॥

इति मन्त्रेण हरिं स्मरन् गुरुः बीजानि अवपेत् । वाद्यादिघोषैः सह सोमकुम्भस्थवारिभिः पालिकादिषु जलं संसिच्य, तत्र कर्मावसानपर्यन्तं प्रतिरात्रं बलिं दद्यात् । पालिकादिषु वामभागे चतुरश्रमण्डलं कृत्वा, तदुपरि साग्रदर्भान् आस्तीर्य, पुष्पाक्षतान् विकीर्य, पूर्वाद्यष्टदिक्षु प्रदक्षिणेन विष्णवादीनां बलिं दद्यात् ।

ॐ विष्णवे स्वाहा इति पायसेन प्राच्याम्,

ॐ ब्रह्मणे स्वाहा इति पद्मसहिताक्षतेन आग्नेय्याम्,

ॐ शङ्कराय स्वाहा इति अपूपमिश्रितान्नेन याम्याम्,

ॐ देवेभ्यः स्वाहा इति पुष्पसहितान्नेन नैर्ऋत्याम्,

ॐ पितृभ्यः स्वाहा इति अन्नेन प्रतीच्याम् ,

ॐ गन्धर्वेभ्यः स्वाहा इति लाजैः वायव्याम्,

ॐ यक्षेभ्यः स्वाहा इति अक्षतैः उदीच्याम्,

ॐ भूतेभ्यः स्वाहा इति सक्तुभिः ईशान्यां, सर्वेषामपि पायसेन वा बलिं दद्यात् । अनिर्वाणदीपं संस्थाप्य, प्रतिदिनं पालिकादिषु विष्णुं सोमं च सम्पूज्य, बलिं दत्त्वा, हरिद्रावारिभिः सोमकुम्भवारिभिश्च प्रतिदिनं अङ्कुराणि सिञ्चेत् । कर्मान्ते अङ्कुरेषु पीतेषु, शुक्लेषु सुष्ठुप्रसूडेषु च शुभं विद्यात् । विपरीतेषु अशुभं, प्रायश्चित्तहोमपूर्वक संक्षिप्तक्रमेण अङ्कुरार्पणं कुर्यात् ।

काले तु त्वरिते प्राप्ते कुर्यात्सद्योऽकुरार्पणम् ।
पालिकादिषु पात्रेषु नारिकेलप्रसूनकम् ॥
दूर्वाक्षततिलैर्युक्तं पूरयेन्मूलमन्त्रतः ।
पूजां बल्यादिकं सर्वं सद्य एव समाचरेत् ॥

ओषधिसूक्तम् - या ओषधीः इति अथर्वणो भिषगोषधयोऽनुष्टुप् ॥

ॐ या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ।
मनै नु बभ्रूणामहं शतं धामानि सप्त च ॥
शतं वो अम्ब धामानि सहस्रमुत वो रुहः ।
अधा शतक्रत्वो यूयमिमं मे अगदं कृत ॥
ओषधीः प्रति मोदध्वं पुष्पवतीः प्रसूवरीः ।
अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥
ओषधीरिति मातरस्तद्वो देवीरुप ब्रुवे ।
सनेयमश्वं गां वास आत्मानं तव पूरुष ॥
अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।
गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥
यत्रौषधीः समग्मत राजानः समिताविव ।
विप्रः स उच्यते भिषग्रक्षोहामीवचातनः ॥
अश्वावतीं सोमावतीमूर्जयन्तीमुदोजसम् ।
आवित्सि सर्वा ओषधीरस्मा अरिष्टतातये ॥
उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते ।
धनं सनिष्यन्तीनामात्मानं तव पूरुष ॥
इष्कृतिर्नाम वो माताथो यूयं स्थ निष्कृतीः ।
सीराः पतत्रिणीः स्थन यदामयति निष्कृथ ॥
अति विश्वाः परिष्ठाः स्तेन इव व्रजमक्रमुः ।
ओषधीः प्राचुच्यवुर्यत्किं च तन्वो३ रपः ॥
यदिमा वाजयन्नहमोषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥
यस्यौषधीः प्रसर्पथाङ्गमङ्गं परुष्परुः ।
ततो यक्ष्मं वि बाधध्व उग्रो मध्यमशीरिव ॥
साकं यक्ष्म प्र पत चाषेण किकिदीविना ।
साकं वातस्य ध्राज्या साकं नश्य निहाकया ॥

अन्या वो अन्यामवत्वन्यान्यस्या उपावत ।
ताः सर्वाः संविदाना इदं मे प्रावता वचः ॥
याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चंत्वंहसः ॥
मुञ्चन्तु मा शपथ्या३दथो वरुण्यादुत ।
अथो यमस्य पड्बीशात्सर्वस्माद्देवकिल्बिषात् ॥
अवपतन्तीरवदन्दिव ओषधयस्परि ।
यं जीवमश्नवामहै न स रिष्याति पूरुषः ॥
या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।
तासां त्वमस्युत्तमारं कामाय शं हृदे ॥
या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु ।
बृहस्पतिप्रसूता अस्यै सं दत्त वीर्यम् ॥
मा वो रिषत्खनिता यस्मै चाहं खनामि वः ।
द्विपच्चतुष्पदस्माकं सर्वमस्त्वनातुरम् ॥
याश्चेदमुपशृण्वंति याश्च दूरं परागताः ।
सर्वाः सङ्गत्य वीरुधोऽस्यै सं दत्त वीर्यम् ॥
ओषधयः सं वदन्ते सोमेन सह राज्ञा ।
यस्मै कृणोति ब्राह्मणस्तं राजन्पारयामसि ॥
त्वमुत्तमास्योषधे तव वृक्षा उपस्तयः ।
उपस्तिरस्तु सो३ऽस्माकं यो अस्माँ अभिदासति ॥

## ॥ बिम्बशुद्धिः ॥

बिम्बानां पुरतः कुम्भं धान्यपीठे निवेशयेत् ।
सूत्रवेष्टितसर्वाङ्गं गन्धवस्त्राद्यलङ्कृतम् ॥
आढकद्वयमात्रेण गोघृतेन प्रपूरितम् ।
संस्थाप्य कृत्वा पुण्याहं प्रोक्षयित्वा यथाविधि ॥
अभर्च्यगन्धपुष्पाद्यैर्नैवेद्यान्तं यथाक्रमम् ॥

बिम्बं तु शोधयेत्सर्पिर्जलदर्भत्वगम्बुभिः ।
घृतं मिमिक्षे मन्त्रेण घृतेन स्नपनं चरेत् ॥
मानस्तोकेति मन्त्रेण स्नापयेदुष्णवारिभिः ।
ततो बिम्बानि सर्वाणि भूषयित्वा नवाम्बरैः ॥
भूषणैर्गन्धमालैश्च यथाविधि यथावसु ।

आचार्यः प्राणानायम्य, सङ्कल्प्य, घृतपूरितकलशमेकं संस्थाप्य, पुण्याहवाचनं वाचयित्वा, कलशं बिम्बं च पुण्याहवारिणा प्रोक्षयेत् । कलशे योगपीठपुरस्सर 'देवतां' सम्पूज्य, त्वक्, दर्भा, जलं चेति शोधनद्रव्याणि सङ्गृह्य, प्रणवमन्त्रेणाभिमन्त्र्य, अस्त्रमन्त्रेण बिम्बादिकं शोधयेत् । आदौ पीठ, ब्रह्मशिलासहितं बिम्बं (वाहनबिम्बादिकं च) जलेन अभिषिच्य, 'घृतं मिमिक्षे' मन्त्रेण घृतकलशेनाभिषिच्य, मानस्तोकेति मन्त्रेण उष्णोदकेन सङ्क्षाल्य, दर्भैः सङ्घृष्य, अस्त्रेण त्वग्भिः संशोध्य, पुनर्जलेन संस्नापयेत् ।

ततः शुक्लानि पुष्पाणि घृतं सिद्धार्थकं तथा ।
दूर्वां कुशाग्रं देवस्य दध्याच्छिरसि देशिकः ॥

इत्थं शोधनान्तरं बिम्बं गन्धपुष्पमालादिभिः अलङ्कृत्य, व्याहृतिहोमं कुर्यात्।

शमीपल्लवसंयुक्तैस्तिलैस्साज्यश्चरुं स्वयम् ।
सप्तव्याहृतिभिश्चैव प्रत्येकं जुहुयाद्गुरुः ॥
नृसूक्तेन चरुं पश्चात् जुहुयात् षोडशाहुतीः ।

व्याहृतिहोमः - अस्याः प्रतिमायाः स्थूलसूक्ष्मादिन्यूनाङ्गपरिपूर्णार्थं व्याहृतिहोमं करिष्ये इति सङ्कल्प्य, बिम्बस्य अग्रे स्थण्डिले अग्निं प्रतिष्ठाप्य, अन्वाधानम् - 'देवतां' मूलेन अष्टोत्तरशतवारमाज्येन, समस्तव्याहृत्या पूर्णाहुत्या आज्येन, भूरादि सप्तव्याहृतिभिः शमीपर्णमिश्रित तिल-आज्य-चरुद्रव्यैः प्रत्येकं प्रत्येकं अष्टोत्तरशतवारं (अष्टाविंशतिवारं वा), अमुक सूक्तस्थमन्त्रैः चरुणा (वेदोक्तमन्त्रेण अष्टवारं)शेषेण....इत्यादि । होमं समाप्य,

सम्पातं हुतभस्मं च प्रतिमायां अङ्गपरिपूर्णार्थं सप्तव्याहृतिभिः क्रमात् पाद-जानु-गुह्य-नाभि-हृदय-मुख-मूर्धसु अर्पयेत् ।

सप्तानां व्याहृतीनां क्रमेण विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपा ऋषयः । गायत्र्युष्णिगनुष्टुब्बृहती पङ्क्तित्रिष्टुप्जगत्यः छन्दांसि । अग्नि वाय्वादित्यबृहस्पतिवरुणेन्द्र विश्वेदेवा देवताः । ॐ भूः ॐ । भुवः । स्वः । महः । जनः । तपः । ॐ सत्यं ॐ

## ॥ अधिवासविधिः ॥

तत्रैव प्रतिमायाश्च कारयेदधिवासनम् ।
पञ्चगव्ये सप्तरात्रं क्षिप्त्वा पुरुषसूक्ततः ॥
कृत्वा जलाधिवासं च पूर्वं वा पञ्चगव्यतः ।

इत्याचार्यैरुक्तत्वादग्रे वक्ष्यमाण जल-मृद्-धान्य-गव्य-अमृत-पुष्पाद्यधिवासेषु जल-गव्याधिवासौ अवश्यं भवतः । सप्तसु रात्रिषु न शक्यते चेत् रात्रिमात्रं वा कुर्यात् ।

**जलाधिवासः** - अथ आचार्यः बिम्बं याने आरोप्य, स्वस्तिसूक्तादि पठन् वाद्यादिघोषैः सह तडागादि तीर्थसमीपे नीत्वा, यानस्थबिम्बमवतार्य, पूर्वाभिमुखं बिम्बं भद्रासने संस्थाप्य, वरुणपूजां कुर्यात् । अथ गुरुः आचम्य, बिम्बे रसधातुसिद्धिद्वारा तेजोऽभिवृद्ध्यर्थं जलाधिवासं करिष्ये, तदङ्ग वरुणपूजां करिष्ये इति सङ्कल्प्य, गुरुं गणपतिं च पूजयेत् । जले निर्विषीकरणादिमुद्राः प्रदर्श्य, ॐ पं पद्माय नमः इति पीठपूजां विधाय, ॐ सुधायै नमः । कुमुदिन्यै । पूर्णायै । वारुण्यै । विश्वतोमुख्यै । तरङ्गिण्यै । सुरसायै । सुशीलायै । आप्यायिन्यै । ॐ वं सकलगुणशक्तियुक्ताय योगपद्मपीठात्मने नमः, योगपद्मपीठं कल्पयामि, इति नवशक्तिपूजां विधाय वरुणमावाहयेत् ।

ध्रुवासुत्वासु इति वसिष्ठो वरुणस्त्रिष्टुप् । वरुणावाहने विनियोगः

ॐ ध्रुवासु त्वासु क्षितिषु क्षि यन्तो व्य१स्मत्पाशं वरुणो मुमोचत् ।
अवो वन्वाना अदितेरुपस्थाद्यूयं पात स्वस्तिभिः सदा नः ॥

ॐ भूर्भुवःस्वः वरुणमावाहयामि इत्यावाह्य , मुद्राः सन्दर्श्य, वरुणमन्त्रं जपेत् । वरुणषडक्षरमन्त्रः- वसिष्ठ ऋषिः । गायत्री छन्दः । वरुणो देवता ॐ वं हृदयाय नमः। रुं शिरसे स्वाहा । णां शिखायै वषट् । यं कवचाय हुम् । नं नेत्राभ्यां वौषट् । मः अस्त्राय फट्

ध्यानम्- पाशाभयकरोरक्तभूषणः पद्मिनीपतिः ।
वरुणोऽम्बुपतिः श्वेतवर्णो मकरवाहनः ॥

मन्त्रः - ॐ वरुणाय नमः

इमं मे सिन्धुक्षित् प्रैयमेधः नद्यो जगती । गङ्गादितीर्थाभिमानिदेवातानां आवाहने विनियोगः

ॐ इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या ।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥

ॐ भूर्भुवःस्वः गङ्गादि त्रैलोक्यतीर्थाभिमानिदेवतां आवाहयामि इत्यावाह्य,
गङ्गे च यमुने कृष्णे गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि चन्द्रभागे च कौशिकि ॥
स्वर्णलेखे कनखले पारिभद्रे च गण्डकि ।
श्वेतगङ्गे चन्द्ररेखे पम्पे चम्पे च गोमति ॥
पद्मावति विपर्णाशे विपाशे विरजे प्रभे ।
शतह्रदे चेलगङ्गे जलेस्मिन् सन्निधिं कुरु ॥ इति सम्प्रार्थ्य,

जलाभिमानिदेवतानामन्तर्यामि प्राणस्थ मत्स्यरूपी परमात्मानं ध्यात्वा, सम्पूज्य नीराज्य प्रार्थयेत् । अन्तर्जलं चतुरश्रदृढपीठं संस्थाप्य, बिम्बे 'देवतां' आवाह्य सम्पूज्य, फलादिकं निवेद्य नीराज्य, मङ्गलसूक्तानि पठन्, वाद्यादिघोषैः सह बिम्बं जलस्थपीठे उदङ्मुखं प्राक् शिरसं शाययेत् । जलस्थपीठस्य परितः पूर्वादि अष्टदिक्षु अष्टौ कुम्भान् संस्थाप्य, क्रमेण

इन्द्रादीन् आवाह्य सम्पूज्य, नैर्ऋत्ये कर्करीकलशं, ईशान्ये कुम्भेशं च संस्थाप्य पूजयेत् । अस्त्रमन्त्रेण दिग्बन्धनं कृत्वा, अधिवासहोमं कुर्यात् । गोमयलेपनादिभिः विशुद्धाया भूमौ स्थण्डिले अग्निं प्रतिष्ठाप्य, अन्वाधानं - 'देवतां' मूलेन अष्टोत्तरशतवारं आज्येन, समस्तव्याहृत्या पूर्णाहुत्या आज्येन, जलाधिपं वरुणं 'ध्रुवासु त्वासु' इति मन्त्रेण (षडक्षरमन्त्रेण वा) अष्टाविंशतिवारं आज्येन...इत्यादि । होमं समाप्य, तत् सम्पाताज्यं जले संसिच्य, अनिर्वाणदीपं संस्थाप्य, सप्तरात्रं, पञ्चरात्रं, त्रिरात्रं, एकरात्रं वा बिम्बं अधिवासयेत् ।

**मृदाधिवासः** - बिम्बानां अस्थिधातुसिद्धिद्वारा कान्त्याभिवृद्ध्यर्थं मृदाधिवासं करिष्ये इति सङ्कल्प्य, पूर्वोक्तक्रमेण मृदं सङ्गृह्य, जलाधिवासितबिम्बसमीपे गत्वा, कलशस्थदेवाताः संवन्द्य, उद्वास्य, बिम्बं 'उत्तिष्ठ ब्रह्मणस्पते' इति मन्त्रेण जलाधिवासात् उत्थाप्य, यानादिभिः आरोप्य, वेदवाद्यादिघोषैः सह अधिवासमण्डपे नयेत् । 'स्योना पृथिवीति' मन्त्रेण कटाहे अल्पं मृत्तिकां निक्षिप्य, तदुपरि मूलोपचारमन्त्रैः बिम्बं संस्थाप्य, मृत्तिकासूक्तभूसूक्तैश्च बिम्बस्य कण्ठान्तं मृत्तिकामभिपूर्य, बिम्बे देवतां आवाह्य, सम्पूज्य नीराज्य, अधिवासहोमं कुर्यात् । स्थण्डिले अग्निं प्रतिष्ठाप्य अन्वाधानं - 'देवतां' मूलेन अष्टोत्तरशतवारं आज्येन, समस्तव्याहृत्या पूर्णाहुत्या आज्येन, मृदधिदेवतां पृथिवीं 'स्योना पृथिवीति' मन्त्रेण अष्टाविंशतिवारं आज्येन...इत्यादि । होमं समाप्य, सम्पाताज्यं बिम्बे कटाहे च समर्प्य, अनिर्वाणदीपं संस्थाप्य, सप्तरात्रं, पञ्चरात्रं, त्रिरात्रं, एकरात्रं वा बिम्बं अधिवासयेत् ।

**धान्याधिवासः** - बिम्बे मांसधातुसत्वसिद्धिद्वारा कान्त्याभिवृद्ध्यर्थं धान्याधिवासं करिष्ये इति सङ्कल्प्य, बिम्बं 'उत्तिष्ठ ब्रह्मणस्पते' इति मन्त्रेण मृदाधिवासात् उत्थाप्य, संक्षालयेत् । कटाहे 'येनातोकया' इति मन्त्रेण धान्यैः

पीठं विरचय्य, तदुपरि बिम्बं मूलोपचारमन्त्रैः संस्थाप्य, ओषधीसूक्तेन कण्ठान्तः धान्यानि पूरयेत् । बिम्बे 'देवतां' आवाह्य, सम्पूज्य, निराज्य, अधिवासहोमं कुर्यात् ।

स्थण्डिले अग्निं प्रतिष्ठाप्य, अन्वाधानं - 'देवतां' मूलेन अष्टोत्तरशतवारं आज्येन, समस्तव्याहृत्या पूर्णाहुत्या आज्येन, ओषधिदेवता सोमं अष्टाविंशतिवारं आज्येन, शेषेण....इत्यादि । होमं समाप्य, सम्पाताज्यं बिम्बे कटाहे च समर्प्य, अनिर्वाणदीपं संस्थाप्य, सप्तरात्रं, पञ्चरात्रं, त्रिरात्रं, एकरात्रं वा बिम्बं अधिवासयेत् ।

**पञ्चगव्याधिवासः** - बिम्बस्य त्वक्, शरीरादि सिद्ध्यर्थं तेजोभिवृद्ध्यर्थं च पञ्चगव्याधिवासं करिष्ये इति सङ्कल्प्य, बिम्बं 'उत्तिष्ठ ब्रह्मणस्पते' इति मन्त्रेण धान्याधिवासात् उत्थाप्य, संक्षालयेत् । पञ्चगव्यद्रव्याणि सङ्गृह्य, तत्तत् द्रव्ये तत्तत् देवताः आवाह्य, सम्पूज्य उक्तक्रमेण संमेल्य, बिम्बं मूलोपचारमन्त्रैः कटाहे संस्थाप्य, मूलमन्त्रेण बिम्बे 'देवतां' आवाह्य, पाद्यादिकं दत्त्वा, स्नानकाले विष्णौ पुंसूक्तेन, लक्ष्म्यां अम्भृणीसूक्तेन, दुर्गायां पञ्चदुर्गामन्त्रैः, अजे हिरण्यगर्भसूक्तेन, सरस्वत्यां सरस्वती सूक्तेन, हनुमति बळित्थासूक्तेन, शिवे सद्योजातादिपञ्चमन्त्रैः, शेषे सर्पत्रयमन्त्रेण, गरुडे त्राक्ष्यर्सूक्तेन, पार्वत्यां मूलोपचार-वेदोक्त-गायत्रीमन्त्रैः, कामे मूल-वेदोक्त-गायत्रीमन्त्रैः संज्ञान सूक्तेन च, स्कन्दे कुमारसूक्तेन, सूर्ये सौरसूक्तेन, गणपतौ गणपतिसूक्तेन, वैश्रवणे हिरण्यसूक्तेन च बिम्बं पञ्चगव्येन अभिषिञ्चेत् । फलादिकं निवेद्य निराज्य, अधिवासहोमं कुर्यात् ।

स्थण्डिले अग्निं प्रतिष्ठाप्य, अन्वाधानं - 'देवतां' मूलेन अष्टोत्तरशतवारं आज्येन, समस्तव्याहृत्या पूर्णाहुत्या आज्येन, विष्णुं-ब्रह्माणं-रुद्रं-अग्निं-सोमं शक्रमादित्यं-वायुं-सवितारं-प्रजापतिं चेति गव्याभिमानिदेवताः अष्टाष्टवारं आज्येन...इत्यादि ।

होमं समाप्य, सम्पाताज्यं बिम्बे कटाहे च समर्प्य, अनिर्वाणदीपं संस्थाप्य, सप्तरात्रं, पञ्चरात्रं, त्रिरात्रं, एकरात्रं वा बिम्बं अधिवासयेत् ।

**पञ्चामृताधिवासः** - बिम्बे मेधोधातुसिद्धिद्वारा कान्त्यभिवृद्ध्यर्थं पञ्चामृताधिवासं करिष्ये इति सङ्कल्प्य, बिम्बं 'उत्तिष्ठ ब्रह्मणस्पते' इति मन्त्रेण पञ्चगव्याधिवासात् उत्थाप्य, संक्षालयेत् । पञ्चामृतद्रव्याणि सङ्गृह्य, क्रमात् क्षीरे गोविन्दं, दध्नि वामनं, घृते विष्णुं, मधुनि मधुसूदनं, इक्षुरसे(शर्करे) अच्युतं च आवाह्य सम्पूज्य, बिम्बं मूलोपचारमन्त्रैः कटाहे संस्थाप्य, मूलमन्त्रेण बिम्बे 'देवतां' आवाह्य, पाद्यादिकं दत्त्वा, स्नानकाले क्षीरादिद्रव्यैः तत्तन्मन्त्रैः अभिषिञ्चेत् । फलादिकं निवेद्य निराज्य, अधिवासहोमं कुर्यात् । स्थण्डिले अग्निं प्रतिष्ठाप्य अन्वाधानं - 'देवतां' मूलेन अष्टोत्तरशतवारं आज्येन, समस्तव्याहृत्या पूर्णाहुत्या आज्येन, गोविन्दं, वामनं, विष्णुं, मधुसूदनं, अच्युतं चेति पञ्चामृताभिमानिदेवताः अष्टाष्टवारं आज्येन, शेषेण...इत्यादि । होमं समाप्य, सम्पाताज्यं बिम्बे कटाहे च समर्प्य, अनिर्वाण दीपं संस्थाप्य, सप्तरात्रं, पञ्चरात्रं, त्रिरात्रं, एकरात्रं वा बिम्बं अधिवासयेत् ।

## ॥ बिम्बशुद्धिकलशस्थापनम् ॥

सप्तादशद्रव्यकलशमण्डलं विलिख्य, आचम्य, प्राणानायम्य, बिम्बस्थित समस्तदोषपरिहारार्थं, बिम्बशुद्ध्यर्थं देवताऽनुष्टानयोग्यतासिद्ध्यर्थं च स्नपनाङ्गकलशस्थापनं करिष्ये, इति सङ्कल्प्य, शङ्खपूजां विधाय, गुरुं गणपतिं च पूजयेत् । मण्डलोपरि धान्यादिभिः पीठं विरचय्य, सम्पूज्य, पूजितपीठे सुसंस्कृतकुम्भानि संस्थाप्य सम्पूज्य, कूर्चान् विन्यस्य, कुम्भेषु तत्तन्मन्त्रैः तत्तद्द्रव्याणि पूरयेत् । बाह्यावरणे पूर्वादिक्रमेण अष्टकुम्भेषु क्रमात् 'स्योना पृथिवीति' मन्त्रेण मृत्तिकाजलं (वल्मीकमृत्तिका- सहितजलम्), 'तत्सवितुरिति' मन्त्रेण पञ्चगव्यं, 'देवस्यत्वा' इति मन्त्रेण कुशोदकं, 'अर्चत

प्रार्चतेति' मन्त्रेण प्रोक्षणीतोयं (पुष्प-चन्दन-तिल-बिल्वैर्युतजलम्), 'आप्यायस्व' इति मन्त्रेण क्षीरं, 'दधिक्राव्णो' इति मन्त्रेण दधि, 'घृतं मिमिक्षे' इति मन्त्रेण घृतं, 'मधु वाता' इति मन्त्रेण मधु च पूरयेत् । तदन्तावरणे पूर्वादिक्रमेण अष्टकुम्भेषु क्रमात् 'स्वादुः पवस्व' इति मन्त्रेण इक्षुरसं, 'या फलिनीर्या' इति मन्त्रेण फलोदकं, 'अश्वत्थेवो' इति मन्त्रेण कषायोदकं (बिल्व-औदुम्बर-वट-पलाशत्वग्भिः कृतम्), 'ओषधयेति' मन्त्रेण धान्योदकं (अङ्कुरार्पणे उक्त धान्यैर्युतजलम्), 'हिरण्यरूपस्येति' मन्त्रेण लोहवारिं (सुवर्णादि पञ्चलोहैर्युतजलम्), 'स हि रत्नानि' इति मन्त्रेण रत्नतोयं (पञ्चरत्नैर्युतजलम्), 'गन्धद्वारामिति' मन्त्रेण गन्धोदकं, 'आयानेते' इति मत्रेण पुष्पोदकं, मध्यकुम्भे 'शं नो देविरिति' मन्त्रेण शुभोदकं च पूरयेत् । विधिवत् कलशपूरणं विधाय, पीठपूजां विधाय, आवाहनादिकं विधाय, सम्पूज्य, नीराज्य, शं न सूक्तादिभिः कलशाभिमन्त्रणं कुर्यात् ।

## ॥ बिम्बशुद्धिहोमः ॥

बिम्बस्थसकलदोषपरिहारद्वारा बिम्बशुद्ध्यर्थं देवताऽनुष्टानयोग्यता सिद्ध्यर्थं च बिम्बशुद्धिहोमं करिष्ये इति सङ्कल्प्य, कलशस्य दक्षिणे स्थण्डिले अग्निं प्रतिष्ठाप्य, अन्वाधानम् - 'देवतां' मूलमन्त्रेण अष्टोत्तरशतवारं आज्येन, समस्तव्याहृत्या पूर्णाहुत्या आज्येन, व्यस्तसमस्तव्याहृतिभिः क्रमेण घृताक्त खदिर-बिल्व-अर्क-दूर्वा समिद्भिः प्रत्येकं अष्टाविंशतिवारं, अस्त्रमन्त्रेण अष्टोत्तरशतवारं आज्येन....इत्यादि ।

## ॥ बिम्बशुद्धिकलशस्नपनम् ॥

आचम्य, बिम्बस्थसकलदोषपरिहारद्वारा बिम्बशुद्ध्यर्थं देवताऽनुष्ठानयोग्यता सिद्ध्यर्थं च कलशस्नपनं करिष्ये इति सङ्कल्प्य, बिम्बं 'उत्तिष्ठ ब्रह्मणस्पते' इति मन्त्रेण पञ्चामृताधिवासात् उत्थाप्य, भद्रपीठे संस्थाप्य, बिम्बं

चणकपिष्टैरुद्धृत्य, जलेन संक्षाल्य, ॐ पं पद्माय नमः इति पीठं सम्पूज्य, अञ्जलौ पुष्पं गृहित्वा, बिम्बे 'देवतां' आवाह्य, मुद्राः सन्दर्श्य, मूलमन्त्रेण त्रिवारं व्याप्य, मूलमन्त्रस्य ऋष्यादिन्यासं, अङ्गन्यासं, मन्त्राक्षरन्यासं च विधाय 'देवतां' ध्यात्वा, मूलमन्त्रं अष्टोत्तरशतवारं सञ्जपेत् । विष्णौ बिम्बस्थं तेजोमयं रामकृष्णादिमूर्त्यात्मकं ज्ञानानन्दरूपिणं नारायणं ध्यात्वा, अष्टाक्षरं सञ्जप्य,

तत्रतत्र स्थितं विष्णुं तत्तन्मूर्तिगतेन वै ।
एकीभूतं चिन्तयित्वा तद्रूपं व्याप्तरूपतः ॥ इति प्रार्थयेत् ।

दुर्गादि देवतायां तत्तद्देवतान्तर्यामि नरसिंहादिरूपिणं परमात्मानं, शिवादिषु तत्तद्देवतान्तर्यामि प्राणस्थ नरसिंहादिरूपिणं परमात्मानं च ध्यात्वा, तन्मन्त्रं जपित्वा,

तत्रतत्र स्थितो विष्णुस्तत्तच्छक्तीः प्रभोधयन् ।
एक एव महाशक्तिः कुरुते सर्वमञ्जसा ॥ इति प्रार्थयेत् ।

(इति गोलकचिन्तनम्) मूलमन्त्रेण षोडशोपचारैः सम्पूज्य, स्नानकाले पञ्चगव्याधिवासे उक्तमन्त्रैः कलशस्नपनं कुर्यात् । बिम्बशुद्धिहोमस्य सम्पाताज्यं हुतभस्मं च व्यस्तसमस्त व्याहृतिभिः बिम्बे संस्पृश्य, बाह्यावरणात् प्रारभ्य पूर्वादि प्रदक्षिणया कलशान् उद्धृत्य षोडशद्रव्यकलशैः अभिषिच्य, नेत्रोन्मीलनं कुर्यात् ।

**नेत्रोन्मीलनम्** - आचार्यः सौवर्णपात्रे मधु, रजतपात्रे घृतं च निक्षिप्य, मधुपात्रे सूर्यं, घृतपात्रे सोमं च आवाह्य, सम्पूज्य, मधुवाता इत्यादि मन्त्रत्रयेण मधु, घृतं मीमिक्षे, सविराजेति च मन्त्रेण घृतं च अभिमन्त्र्य, देवतापृष्ठतः तिष्ठन् 'हिरण्यगर्भः समवर्तताग्रे' इति मन्त्रेण सुवर्णशलाकाग्रेण मधु सङ्गृह्य,

ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥

इति मन्त्रेण दक्षिणनेत्रं, पुनः रजतशलाकाग्रेण घृतं सङ्गृह्य,

ॐ तच्चक्षुर्देवहितं शुक्रमुच्चरत् । पश्येम शरदः शतम् ।

जीवेम शरदः शतम् । नन्दाम शरदः शतम् ।

मोदाम शरदः शतम् । भवाम शरदः शतम् ।

शृणुवाम शरदः शतम् । प्रब्रवाम शरदः शतम् ।

अजिताः स्याम शरदः शतम् । ज्योक् पश्येम सूर्यं दृशे ॥

इति मन्त्रेण वामनेत्रं च विलिख्य, 'आ गावो' इति मन्त्रेण सवत्सां गाम्, ब्रह्मजज्ञानमितिमन्त्रेण ब्राह्मणान्, 'भद्रं कर्णेभिः' इति मन्त्रेण जनान्सर्वान् च सन्दर्श्य, शुद्धोदककलशेन अभिषिच्य, वस्त्र-विभूषण-उपवीत-आभरण-आसन-गन्धपुष्पाक्षताणि समर्प्य, धूपदीपौ सन्दर्श्य, पायसादिकं निवेद्य, पुनः धूपदीपौ सन्दर्श्य, नीराज्य छत्रचामरादि राजोपचारैः पूजयेत् ।

नरसिंहदुर्गाशिवेषु विशेषः - दूर्वया हैमया पूर्वं दक्षिणे मधु वामके ।

पयश्चाथ ललटास्थे लोचने मधु चैव हि ॥

सोमसूर्याग्निमन्त्रैस्तु तत्तत्स्थानेषु विन्यसेत् ।

दक्षिणनेत्रं 'चित्रं देवानां' इति मन्त्रेण, वामनेत्रं 'आप्यायस्व' इति मन्त्रेण, ललाटनेत्रं 'जातवेदसे' मन्त्रेण विलिख्येत् ।

## ॥ पुष्पाधिवासः ॥

बिम्बे शुक्लधातुसिद्धिद्वारा ओजोभिवृद्ध्यर्थं सकलाङ्गपरिपूर्णार्थं च पुष्पाधिवासं करिष्ये इति सङ्कल्प्य, बिम्बं उपचारमन्त्रेण पुष्पशय्ये शाययित्वा, मूलमन्त्रेण पाद्यादि उपचारैः सम्पूज्य, पुष्पोपचारकाले अष्टोत्तरशतसहस्रनामभिः वेदादिभिश्च पुष्पैः अभ्यर्च्य, नैवेद्यकाले पायसादिकं निवेद्य, 'योऽपां पुष्पं वेद' इत्यादि मन्त्रैः मन्त्रपुष्पं समर्प्य, नीराज्य, छत्रचामरादि राजोपचारैः पूजयेत् ।

## ॥ शय्याधिवासः ॥

स्थण्डिलं वेदिकायां तु शालीभिस्तिलतण्डुलैः ।
कृत्वा पद्मं समालिख्य दर्भान्पुष्पान् परिस्तरेत् ॥
शयनं कल्पयेत्तस्मिन् तण्डुलाद्यैरनुक्रमात् ।
नागेन्द्रं चार्चयेत्तत्र गन्धपुष्पादिभिर्बुधः ॥
[शयनं संस्तरेद्याम्ये स्वस्तिके धान्यराशिषु ।
शय्यायां पीठमभ्यर्च्य स्नानार्थं पूरयेत् घटम् ॥]

शय्याधिवासार्थं मण्डलं विलिख्य, पूर्वशिरस्कं शय्यास्थानं प्रकल्प्य, मण्डलोपरि तण्डुलादिभिः पीठं विरचय्य, तदुपरि साग्रदर्भानास्तीर्य, उत्तरच्छद्वयं शिरोपधानं, पादोपधानं द्वयं च इति श्रेष्ठवासांसि तत्तत् स्थानेषु विन्यसेत् । गुरुः प्राणानायम्य, भूतोच्चाटनादिकं कृत्वा, सङ्कल्प्य, गुरुं, गणपतिं च संवन्द्य, शङ्खपूजां कुर्यात् । शय्या अस्त्रमन्त्रेण प्रोक्ष्य, शोषण-दहन-प्लावनं च विधाय, परमपुरुषादिपद्मान्तं सम्पूज्य, ॐ पं पद्माय नमः इति शय्यायां अष्टदलपद्मं सङ्कल्प्य, नवशक्तीः आवाह्य, विष्णौ पुनः ॐ योगशय्यास्वरूपाय अनन्ताय नमः इति अनन्तं आवाह्य, मूलमन्त्रं स्मृत्वा, योगशय्यां कल्पयामि, इति पुष्पाञ्जलिं समर्प्य, शय्यां पञ्चोपचारैः सम्पूज्य, नीराज्य, तालत्रयादीना रक्षेत् । शिरोदेशे विधिवत् कलशमेकं संस्थाप्य, सम्पूज्य, ततः -

वासुदेवं नमस्कृत्य निद्रामावाहयाम्यहम् ।
मोहिनीं सर्वभूतानां मनोविभ्रमकारिणीम् ॥
एहि सावित्रिमूर्तिस्त्वं चक्षुर्भ्यां ज्ञानगोचरे ।
विशः नासपुटे रम्ये कण्ठे चोत्कण्ठिता भव ॥ इति प्रार्थयेत् ।

अथ शय्यायाः बहिर्भागे परितः पूर्वाद्यष्टदिक्षु व्रीह्यादिभिः रचितेषु पीठेषु विधिवत् अष्टकलशान् संस्थाप्य, तेषु विद्येशान् आवाह्य, मूलमन्त्रेण पूजयेत् ।

**विष्णौ विद्येशमन्त्राः- ॐ वराहाय नमः । नारसिंहाय । श्रीधराय । हयशिरसे । भार्गवाय । रामचन्द्राय । वामनाय । वासुदेवाय नमः**

**लक्ष्म्यां - ॐ शक्त्यै नमः । विभूत्यै । इच्छायै । प्रीत्यै । रत्यै । मायायै । धियै । महिमायै नमः**

**दुर्गायां - ॐ जयायै नमः । विजयायै । कीर्त्यै । प्रीत्यै । प्रभायै । श्रद्धायै । मेधायै । श्रुत्यै नमः**

**अजे - ॐ चतुर्मुखाय नमः । धात्रे । विधात्रे । विधये । कर्त्रे । विरिञ्चये । भूतेशाय । शतानन्दाय नमः**

**सरस्वत्यां - ॐ योगायै नमः । सत्यायै । विमलायै । ज्ञानायै । बुद्ध्यै । स्मृत्यै । मेधायै । प्रज्ञायै नमः**

**हनुमति - ॐ हनुमते नमः । महाबलाय । कपीश्वराय । पिङ्गळाक्षाय । रामदूताय । धीमते । अनन्तविक्रमाय । पवनात्मकाय नमः**

**शिवे - ॐ रुद्राय नमः । शर्वाय । पशुपतये । उग्राय । अशन्ये । भवाय । महादेवाय । ईशानाय नमः**

**पार्वत्यां - ॐ उमायै नमः । गौर्यै । शिवायै । रुद्राण्यै । भवान्यै । गिरिजायै । शर्वाण्यै । मात्रे नमः**

**शेषे - ॐ अनन्ताय नमः । नराय । लक्ष्मणाय । बलाय । सङ्कर्षणाय । नीलवाससे । जगद्धक्षाय । जलेशयाय नमः**

**गरुडे - ॐ सत्याय नमः । सुपर्णाय । गरुडाय । ताक्ष्र्याय । विहगेश्वराय । वैनतेयाय । वेदात्मने । गरुत्मते नमः**

**कामे - ॐ कामाय नमः । भस्मशरीराय । अनङ्गाय । मन्मथाय । वसन्तसखाय । स्मराय । इक्षुधनुर्धराय । पुष्पबाणाय नमः**

**स्कन्दे - ॐ कार्तिकेयाय नमः । विशाखाय । गुहाय । असुरान्तकाय । सेनान्ये । षण्मुखाय । मयूरवाहनाय । शक्तिपाणये नमः**

**सूर्ये - ॐ सहस्रकिरणाय नमः । आदित्याय । रवये । भास्कराय । प्रभाकराय । दिवाकराय । अंशवे । भानवे नमः**

गणपतौ - ॐ विघ्नाय नमः । विनायकाय । वीराय । शूराय । हस्तिमुखाय । एकदन्ताय । क्षिप्रप्रसादाय । गणेश्वराय नमः

कुबेरे- ॐ वैश्रवणाय नमः । कुबेराय । धनदाय । महाबलाय । धनाधिपाय । पद्महस्ताय । दण्डधराय । यक्षाधिपाय नमः

शिरोभागे निद्राकलशस्य वामे कुम्भेशकर्करीकलशान् संस्थाप्य विधिवत् पूजयेत् । पूर्वाद्यष्टविद्येशकलशयोः मध्ये यज्ञीयवृक्षजाष्टमङ्गलद्रव्याणि स्वस्तिसूक्तादिभिः संस्थापयेत् ।

विष्णौ - शङ्खं चक्रं पताकां च श्रीवत्सं दर्पणं वृषम् ।
मत्स्ययुग्मं च कुम्भं च मङ्गलानि प्रचक्षते ॥

दुर्गायाम् - मृगराजं वृषं नागं व्यजनं कलशं तथा ।
वैजयन्तीं तथा भेरीं दीपमित्यष्टमङ्गलम् ॥

शिवे - दर्पणं पूर्णकुम्भं च वृषभो युग्मचामरम् ।
श्रीवत्सं स्वस्तिकः शङ्खो दीपश्शैवाष्टमङ्गलम् ॥

कुमारे - दर्पणं पूर्णकुम्भश्च मयूरं युग्मचामरम् ।
श्रीवत्सं स्वस्तिकं शङ्खं दीपो देवोऽष्टमङ्गलम् ॥

अन्येषु - दर्पणं पूर्णकुम्भं च वृषभो युग्मचामरम् ।
श्रीवत्सं स्वस्तिकं शङ्खो दीपश्शैवाष्टमङ्गलम् ॥
अन्येषामपि देवानां देवीनां चाष्टमङ्गले ।
वृषं त्यक्त्वा तदर्थं तु स्वस्ववाहनमाचरेत् ॥

भद्रदीप-धूप-फलपुष्पादिकं न्यस्य, 'उत्तिष्ठ ब्रह्मणस्पते' इति मन्त्रेण बिम्बं पुष्पाधिवासात् उत्थाप्य, मङ्गलसूक्तानि पठन् वाद्यादिघोषैः सह बिम्बं प्रदक्षिणेन शय्याया समीपे नीत्वा, गुरुः उपचारमन्त्रेण शय्योपरि पुष्पाक्षतान् विकीर्य, मूलमन्त्रेण बिम्बं शय्यायां शाययेत् । आचार्यः अधिवासाङ्ग पुण्याहवाचनं वाचयित्वा, बिम्बं पुण्याहवारिभिः प्रोक्ष्य, शिरस्तत्वहोमं कुर्यात् ।

**शिरस्तत्वहोमः** - शय्याध्युषितबिम्बस्य शिरोभागस्थ कुण्डे अग्निं प्रतिष्ठाप्य, अन्वाधानम् - 'देवतां' मूलमन्त्रेण अष्टोत्तरशतवारं आज्येन, (विष्णौ प्रणव - व्याहृति - विष्णुषडक्षर - द्वादशाक्षर - सवितागायत्रीमन्त्रैश्च अष्टाष्टवारं आज्येन, इत्यधिकम्) पुनः अमुकसूक्तस्थमन्त्रैः (वेदोक्तसूक्तन्यासे उक्त सूक्तानि, पार्वत्यां कामे कुबेरे च वेदोक्तमन्त्रेण अष्टवारं हुनेत्) एकैकवारं आज्येन, गायत्रीमन्त्रेण अष्टवारमाज्येन, पञ्चप्राणमन्त्रैः एकैकवारं आज्येन, सप्तव्याहृतिभिः एकैकवारं आज्येन, समस्तव्याहृत्या पूर्णाहुत्या आज्येन, शक्त्याद्यखिल तत्वमन्त्रैः प्रत्येकं अष्टाविंशतिवारं (अष्टाष्टवारं वा), अजादिमातृकामन्त्रैः अष्टाष्टवारं (एकैकवारं वा) आज्येन, केशवादि मूर्तिभ्यः अष्टाष्टवारं (एकैकवारं) आज्येन, शेषेण....इत्यादि । होमं समाप्य, सम्पाताज्यं तत्तत् न्यासमन्त्रैः तत्तत् स्थानेषु संस्पृष्य, बिम्बस्य हृदयं स्पृष्ट्वा, 'देवतां' ध्यात्वा, मूलमन्त्रमष्टोत्तरशतवारं जपेत् । गोलकचिन्तनं कृत्वा, पाद्यादिभिः सम्पूज्य, नैवेद्यकाले फल-क्षीर-पानीय-भक्ष्यादिकं निवेद्य, नीराज्य, मूलमन्त्रेण बिम्बमधिवास्य, रक्षेत् ।

[वक्ष्यामिलक्षणं चाष्टमङ्गळानि यथा तथम् ।
यज्ञवृक्षान् समाधाय क्षीरवृक्षं विशेषतः ॥
आयाममेकहस्तं स्याद्विस्तारं च षडङ्गुळम् ।
घनं त्रयाङ्गुळं प्रोक्तं रक्ताङ्गं श्वेतवर्णकम् ॥
पीताभं पङ्कजाभं च राजा राष्ट्रशुभावहम् ।
दर्पणे तु उमादेवीं पूर्णकुम्भे तु जाह्नवीम् ॥
वृषभे तु धरादेवीं कावेरीं युग्मचामरौ ।
श्रीवत्सेतु महालक्ष्मीं स्वस्तिके तु सरस्वतीम् ॥
शङ्खे तु शक्तिदेवीं च दीपे स्वाहाधिदेवताम् ।
उर्वशी मेनका चैव रम्भा चैव तिलोत्तमा ॥
सुमुखी सुन्दरी चैव कौमुखी कामवर्धिनी ।

एते अप्सरसः प्रोक्ता अष्टमङ्गलधारिकाः ॥
मङ्गलाष्टकदेवानामेवमेवेति विन्यसेत् ।]

## ॥ प्रतिष्ठाहोमाः ॥

त्रयोदशात्रकुण्डानि परितः कारयेद् बुधः ।
उक्तलक्षणयुक्तानि प्रधानं त्वग्निकोणके ॥

शय्यां परितः द्वादशकुण्डानि मेषादिस्थाने कृत्वा, तत्राग्नेयकुण्डस्य पार्श्वे प्रधानकुण्डं चाहृत्य त्रयोदशकुण्डानि करणीयानि । बिम्बे सम्पूर्णसानिध्य प्राप्त्यर्थं प्रतिष्ठासमये होमान् कुर्युः । प्रधानकुण्डस्य वामे कलशमेकं (प्रतिष्ठाकलशः) विधिवत् प्रतिष्ठाप्य पूजयेत् ।

आज्याहुतिं तेषु कुर्यात् प्रत्येकं लक्षसङ्ख्यकम् ।
प्रत्येकमयुतं वाऽपि प्रधाने लक्षसङ्ख्यकम् ॥
अर्धं तदर्धमथवा मूलमन्त्रेण मन्त्रवित् ।

तत्र त्रयोदशेषु कुण्डेषु मूलेन आज्येन यथाशक्ति सहस्रादि लक्षसंख्या पर्यन्तं होमाः करणीयाः । एषः प्रकारः सर्वेषु देवेषु समानः ।

एते तु सर्वमन्त्राणां मूलमन्त्रा विशेषतः ।

इति विष्णौ विशेषोऽयं विद्यते । तत्र अष्टमहामन्त्राः ग्राह्याः । प्रकारान्तरञ्च -

समिदाज्यचरुं लाजं मधुरत्रितयं तथा ।
यवव्रीहितिलांश्चैव तण्डुलं गोघृतं हुनेत् ॥

समित् - आज्य - चरु - लाज - त्रिमधुर - यव - व्रीहि - तिला - तण्डुल - घृतेति दशद्रव्याः होमेषु सर्वेषु प्रशस्ताः । विष्णौ मेष-कर्काटक-तुला-मकरराशिस्थान स्थितेषु कुण्डेषु अनुक्रमेण वासुदेवादिमन्त्रैः, अवशिष्टेषु अष्टसु कुण्डेषु प्रणव - व्याहृति - षडक्षर - अष्टाक्षर - द्वादशाक्षर - सवितागायत्री - पुरुषसूक्त - अजादि मातृकामन्त्रैश्च होमाः कार्याः । मेष-कर्काटक-तुला-मकरराशिस्थितेषु कुण्डेषु क्रमेण अश्वत्थ-औदुम्बर-वट-प्लक्ष समिधः, अवशिष्टेषु कुण्डेषु अमृतवल्ली-

अपामार्ग-बिल्व-अर्क-न्यग्रोध-शमी-खदिर-दूर्वाश्चेति समिधः भवन्ति । नव कुण्डपक्षे प्रधानादि कुण्डेषु समिधः -

पलाशखदिराश्वत्थप्लक्षन्यग्रोधजास्तथा।
काश्मर्यो रोहिताश्चैव बिल्वोदुम्बरजाः क्रमात्॥

प्रागादिकुण्डेषु क्रमेण प्रणव-व्याहृति-षडक्षर-अष्टाक्षर-द्वादशाक्षर-सविता गायत्री-पुरुषसूक्त-अजादिमातृकामन्त्रान् च योजयेत् । पञ्चकुण्डपक्षे विधि विशेषोऽयं भवति । प्राक्कुण्डे वासुदेवमन्त्रेण तथा पलाशसमिदाज्य दुग्धान्नतिलैः एभिः द्रव्यचतुष्कैः प्रत्येकम् अष्टोत्तरशतवारम् (अष्टाविंशतिवारं वा), दक्षिणे कुण्डे सङ्कर्षणमन्त्रेण खदिरसमिदाज्य कृसरान्नशालिद्रव्यैः, पश्चिमे कुण्डे प्रद्युम्नमन्त्रेण बिल्वसमिदाज्यगुडान्न यवद्रव्यैः, उत्तरकुण्डे अनिरुद्धमन्त्रेण औदुम्बरसमिदाज्यहरिद्रान्नवेणुबीजैः आहुतयः दद्युः । प्रधान कुण्डे कस्य मूर्तिः प्रतिष्ठाप्यते तन्मूर्तिमन्त्रेण अष्टाक्षरेण वा पूर्वोक्त दशद्रव्यैः पूर्वोक्तसङ्ख्यया होमः कार्यः । लक्ष्म्यां पञ्चकुण्डपक्षे लक्ष्म्यादि चतुर्भिर्मन्त्रैः मूलमन्त्रेण च होमः कार्यः । दुर्गायाः विचारे त्रयोदशकुण्डपक्षे मेष-कर्काटक-तुला-मकरराशिषु स्थितेषु कुण्डेषु क्रमेण 'तामग्निवर्णाम्' इत्यादि चतुर्भिः दुर्गामन्त्रैः (शिवे सद्योजात-वामदेव-अघोर-ईशानमन्त्रैः), वृषभ-सिंह-वृश्चिक-कुम्भराशिषु स्थितेषु कुण्डेषु 'जातवेदसे' इति मन्त्रेण (शिवे वेदोक्तमन्त्रः), अन्येषु चतुर्षु कुण्डेषु गायत्रीमन्त्रेण, प्रधानकुण्डे मूलमन्त्रेण च होमः कार्यः । अन्येषु मेष-कर्काटक-तुला-मकरराशिषु स्थितेषु कुण्डेषु मूलमन्त्रेण, वृषभ-सिंह-वृश्चिक-कुम्भराशिषु स्थितेषु कुण्डेषु वेदोक्त मन्त्रेण, अन्येषु चतुर्षु कुण्डेषु गायत्रीमन्त्रेण च होमः कार्यः । नवकुण्डपक्षे समिधः -

लक्ष्म्यां - श्रीब्रह्मखदिरप्लक्षपिप्पलीवटमार्गजाः।
शमीमय्यश्चसमिधः प्रागाद्यासुयथाक्रमात्॥

दुर्गायां - पालाशश्चैव पैप्पल्यः खादर्यो बैल्व इत्यमूः ।
दिग्विदिक्षुक्रमान्मध्ये पालाश्यः समिधः स्मृताः ॥

शिवे - पलाशोदुम्बराश्वत्थ वटाः पूर्वादिषु क्रमात् ।
शम्यपामार्गश्रीवृक्ष पिप्पलैश्चाग्निकोणतः ॥
प्रधानस्य पलाशस्स्यात् समिधस्संप्रकीर्तिताः ।

पार्वत्याम् - पलाशखदिराश्वत्थप्लक्षन्यग्रोधमेव च ।
उदुम्बरमपामार्गं खदिरं च विशेषतः ॥
पूर्वादीशानपर्यन्तं क्रमेण परिकीर्तितम् ।
पलाशं स्यात्प्रधानस्य कथ्यन्ते समिधः क्रमात् ॥

कुमारे - पलाशदूर्वाखदिरकुशाश्वत्थगलूचिकाः ।
वटार्कौ समिधः प्रोक्ता पूर्वादीनां दिशां क्रमात् ।
प्रधाने तु पलाशः स्यात् परिधिस्तेन तेन वै ॥

सूर्ये - प्लक्षोदुम्बश्वत्थवटौ पूर्वादितः क्रमात् ।
पलाशं खदिरं बिल्वमपामार्गं विदिक्षु च ॥
प्रधानस्यार्कमेवोक्तं होमकर्म निवेदयेत् ।

गणेशे - प्लक्षोदुम्बरकाश्वत्थवटाः पूर्वादितः क्रमात् ।
शम्यपामार्गखदिराः कोणेष्वर्कोऽप्युदाहृतः ॥

कुबेरे - समिधः स्वर्णासनबिल्वखदिरजाः स्युर्दिशासु विदिशासु ।
साशोकसमीद्विजतरु रोहिणजाः मध्यतस्तु पलाश्यः ॥

त्रयोदशकुण्डपक्षे मेष-कर्काटक-तुला-मकरराशिषु स्थितेषु कुण्डेषु दिशोक्तसमिधः, वृषभ-सिंह-वृश्चिक-कुम्भराशिषु स्थितेषु कुण्डेषु विदिशोक्त समिधः भवन्ति । तथा अन्यकुण्डेषु पलाशः ।

अजाऽञ्जनेयशेषगरुडकामेषु -

प्लक्षोदुम्बरकाश्वत्थवटाः पूर्वादितः क्रमात् ।
पलाशस्तु प्रधानस्य समिदित्थं प्रकल्पयेत् ॥

मेषादि पूर्वादि वा चतुर्षु कुण्डेषु अश्वत्थ-औदुम्बर-प्लक्ष-वटसमिधः भवन्ति अन्येषु कुण्डेषु पलाशश्च । प्रधानकुण्डे मूलमन्त्रेण पूर्वोक्त दशद्रव्यैः होमः कार्यः । नवकुण्डपक्षे विष्णुश्रीदुर्गाशिवान् विहाय अन्येषु पूर्वादि अष्टसु कुण्डेषु विद्येशमन्त्रैः होमः इति पक्षान्तरमपि ग्राह्यः । पञ्चकुण्डपक्षे विष्णुश्रीदुर्गाशिवान् विहाय अन्येषु पूर्वादि कुण्डेषु क्रमेण मूल-वेदोक्त-गायत्री-उपचारमन्त्राः प्रधानकुण्डे मूलमन्त्रश्च भवन्ति (दुर्गायां पूर्वादिकुण्डेषु तामग्निवर्णामित्यादि चतुर्भिर्मन्त्रैः, प्रधानकुण्डे जातवेदमन्त्रेण । शिवे चतुर्षु कुण्डेषु सद्योजात-वामदेव-अघोर-ईशानमन्त्रैः, प्रधानकुण्डे गायत्र्या च) । होमान् परिसमाप्य, सर्वेषु

कुण्डेषु स्थितचैतन्यः प्रणवमूलमन्त्रैः प्रधानकुण्डे उद्वास्य, प्रधानकुण्डस्याग्निं प्रतिष्ठान्तं संरक्षत्। विष्णौ पक्षान्तरेण होमद्रव्याः -

समिदाज्यचरूंल्लाजान्सर्षपाँश्च यवाँस्तिलान्।
व्रीहीनाज्यं पुनश्चैव सर्वकुण्डेषु होमयेत्॥

लक्ष्म्यां - समिदाज्यचरूंल्लाजान् यवान्शालितिलास्तथा।

दुर्गायां - हविर्हविर्यवव्रीहि तिलसर्षपदौर्वकाः।
द्रव्याणि सप्त चैतानि सर्वत्र हव त्विह॥

अजे - समिदाज्यचरूंश्चापि तिलवेणुयवानपि।
माषं च क्रमतो मन्त्रैरङ्गैर्मूलादिभिर्बुधः॥

सरस्वत्यां - समिदाज्यचरूँल्लाजान् व्रीहिसिद्धार्थसर्षपान्।
तिलाँश्चाष्टोत्तरशतं जुहुयस्ते पृथक् पृथक्॥

शेषे - समिदाज्यचरूंल्लाजान् सक्तुक्षीरयवांस्तिलान्।
कदलीं पनसं चैव सर्षपांश्च यथाक्रमम्॥

गरुडे - समिदाज्यचरूंल्लाजान्सर्षपाश्च यवांस्तिलान्।
शालीनिवारगोधूममुद्गाश्चैव यथाक्रमम्॥

शिवे - समिदाज्यचरू लाज सर्षपाश्चैव वैणवाः॥
यवप्रियङ्गुशाल्यश्च मुद्गमाश कुलुत्यकाः।
मधु क्षीर गुले सक्तु फलादावुदकास्स्मृताः॥
त्रिपञ्चसप्तनवभिः रुद्रैर्विश्वैश्च पक्षकैः।
द्रव्यैर्वा सप्तदशभिस्समस्तैर्होममाचरेत्॥

पार्वत्याम् - समिदाज्यौदनं मुद्गतिलसर्षपमाषकम्।
अपूपं लाजाः सक्तुश्च क्षौद्रं यथाक्रमेण तु॥

स्कन्दे - समिदाज्यचरुं लाजं त्वपूपं गुलकं मधु।
तिलसर्षपमुद्गानि प्रियङ्गुं च दशोच्यते॥

रवौ - पलाशार्कसमित्सर्पिश्चरुलाजतिलाक्षतैः।
सिद्धार्थैः सर्वधान्यैश्च हुत्वाज्येन पुनः शतम्॥

गणेशे - समिदाज्यचरुं लाजं पृथुकं लड्डुकं तथा।

अपूपं शष्कुलीं चैव घृतं जुह्वतु क्रमेण ॥
समिदाज्यचरून्लाजान्सक्तुकान्यवांस्तिलान् वा ।
धनदे - समिदाज्यहविर्लाजतिलान् जुहुयुरथ च शालियवान् ।

## ॥ मण्डलपूजा ॥

**वर्णाः** - सितं शालिपिष्टं तु चूर्णं सुपीतं हरिद्रोद्भवं चाथ रक्तं कुङ्कुमम् ।
भवेच्छयामवर्णैः पलाशैस्तु तादृक् सुनीलं विदग्धैस्तथा व्रीहिभिः स्यात् ॥
शालिपिष्टं सितं प्रोक्तं कौसुम्भं रक्तकं भवेत् ।
हरिद्रं पीतमुद्दिष्टमीषच्छुक्लेन संयुतम् ॥
व्रीहिभिः पुटदग्धैस्तु कृष्णं चैवोज्वलं रजः ।
श्यामं श्यामच्छदैः कुर्याद् याज्ञिके रज उज्वलम् ॥

**विष्णौ चक्राब्जमण्डलपूजा** - अधिवासित बिम्बस्य उत्तरभागे सुन्दरं चक्राब्जमण्डलं विलिख्य, गुरुः आचम्य, प्राणानायम्य, भूतोच्चाटनाऽदिकं विधाय, 'प्रतिष्ठाङ्ग चक्राब्जमण्डले नृसिंहरामकृष्णाद्यन्तावताररूपगुण क्रियात्मक परमात्मनः पूजां करिष्ये' इति सङ्कल्प्य, शङ्खपूजां विधाय, गुरुं गणपतिं च पूजयेत् । पञ्चवर्णेषु क्रमात् वासुदेवादि पञ्चमूर्तीः आवाहयेत् ।
तथा - शुक्लवर्णे ॐ शुक्लवणाय वासुदेवाय नमः, वासुदेवमावाहयामि,
रक्तवर्णे ॐ रक्तवर्णाय सङ्कर्षणाय नमः, सङ्कर्षणमावाहयामि,
पीतवर्णे ॐ पीतवर्णाय प्रद्युम्नाय नमः, प्रद्युम्नमावाहयामि,
असितवर्णे ॐ असितवर्णाय अनिरुद्धाय नमः, अनिरुद्धमावाहयामि,
श्यामवर्णे ॐ श्यामवर्णाय नारायणाय नमः, नारायणं आवाहयामि,
इत्यावाह्य, गन्धादिपञ्चोपचारैः सम्पूजयेत् । परमपुरुषादि पृथिव्यान्तं पीठपूजां विधाय, ॐ कालचक्राय नमः, ॐ कालचक्रात्मने शिंशुमाराय नमः इति अभ्यर्च्य, तन्मण्डलं कालचक्रं परिकल्पयेत् । मण्डलमध्ये कर्णिकायां - ॐ पं पद्माय नमः इत्यष्टदलपद्मं सम्पूज्य, नवशक्तिपूजां विधाय,

योगपीठस्वरूपिणं अनन्तं सम्पूज्य, कर्णिकायां बिन्दौ - ॐ ॐ नमो नारायणाय ॐ परमपुरुषाय नमः, नारायणमावाहयामि इत्यावाह्य, मुद्राः सन्दर्श्य, अष्टाक्षरमन्त्रं जपेत्। नारायणाङ्के - ॐ श्रीं पराशक्त्यै नमः पराशक्ति श्रियमावाहयामि इत्यावाहयेत्।

पूर्वादिदिक्षुक्रमेण - ॐ क्रुद्धोल्काय नमः । महोल्काय । वीरोल्काय । द्यूल्काय नमः । आग्नेयादिविदिक्षु - सहस्रोल्काय नमः इत्यङ्गानि पूजयेत्।

पूर्वाद्यष्टदलेषु क्रमेण-ॐ ॐ विश्वाय नमः ॐ। नं तेजसाय। मों प्राज्ञाय। नां तुरीयाय। रां आत्मने। यं अन्तरात्मने। णां परमात्मने। यं ज्ञानात्मने नमः, इत्यष्टमूर्तीः आवाहयेत्।

वृत्तत्रयेषु क्रमेण - ॐ सं सत्वाभिमानिन्यै श्रियै नमः । रं रजोभिमानिन्यै भूम्यै । तं तमोभिमानिन्यै दुर्गायै नमः । पूर्वादिद्वादशारेषु - केशवाय । नारायाणाय। माधवाय। गोविन्दाय। विष्णवे। मधुसूदनाय। त्रिविक्रमाय। वामनाय। श्रीधराय। हृषीकेशाय। पद्मनाभाय। दामोदराय नमः

मेषादि राशिदलेषु ईशान्यादि क्रमेण - मत्स्याय । कूर्माय । वराहाय । नारसिंहाय । वामनाय। भार्गवरामाय। रामचन्द्राय। कृष्णाय। बुद्धाय। कल्किने। अनन्ताय। विश्वरूपाय नमः। वीथिकायां अजादिमूर्तीः तत्तत् मन्त्रैः आवाहयेत्।

ईशान्ये चक्रचिह्नायाम् - ॐ सुदर्शनाय नमः । आग्नेय्यां शङ्खे - पाञ्चजन्याय। नैर्ऋत्ये गदायां - कौमोदक्यै। वायव्ये पद्मे - पद्माय नमः।

पूर्वाद्यष्ट उपशोभेषु क्रमेण - ॐ वाणीहिरण्यगर्भाभ्यां नमः । भारती मुख्यप्राणाभ्यां। उमामहेश्वराभ्यां। वारुणीअनन्ताभ्यां। सुपर्णीगरुडाभ्यां। शचीपुरन्दराभ्यां। रतिमन्मथाभ्यां। देवसेनाषण्मुखाभ्यां नमः

पूर्वाद्यष्टशोभेषु - ॐ नन्दाय नमः। सुनन्दाय। चण्डाय। प्रचण्डाय। जयाय। विजयाय। कुमुदाय। कुमुदाक्षाय नमः

पूर्वादिद्वारेषु क्रमेण - ॐ इन्द्राय सुराधिपतये शचीसहिताय वज्रहस्ताय सपरिग्रहाय लक्ष्मीनारायणपार्षदाय नमः । यमाय धर्माधिपतये

श्यामलासहिताय दण्डहस्ताय सपरिग्रहाय लक्ष्मीनारायणपार्षदाय नमः । वरुणाय जलाधिपतये गङ्गासहिताय पाशधराय सपरिग्रहाय लक्ष्मीनारायणपार्षदाय नमः । सोमाय नक्षत्राधिपतये रोहिणी सहिताय कुमुदहस्ताय सपरिग्रहाय लक्ष्मीनारायणपार्षदाय नमः

आग्नेयादिकोणेषु - अग्नये तेजोधिपतये स्वाहासहिताय शक्तिधराय सपरिग्रहाय लक्ष्मीनारायणपार्षदाय नमः । निर्ऋतये रक्षोधिपतये कालिकासहिताय खड्गहस्ताय सपरिग्रहाय लक्ष्मीनारायणपार्षदाय नमः । वायवे प्राणाधिपतये भारतीसहिताय गदाहस्ताय सपरिग्रहाय लक्ष्मीनारायणपार्षदाय नमः । ईशानाय विद्याधिपतये गिरिजासहिताय शूलधराय सपरिग्रहाय लक्ष्मीनारायणपार्षदाय नमः । इति मण्डले तत्तत् स्थाने देवताः आवाह्य, मण्डले आवाहितदेवताभ्यो नमः इत्युक्त्वा, मुद्राः प्रदर्शयेत् । मण्डलमध्ये सपरिवारसहितं परमात्मानं षोडशोपचारैः सम्पूज्य, पूष्पोपचारकाले अष्टमहामन्त्रैः, स्थाप्यमूर्तिमन्त्रेण १०८ वारं, अष्टोत्तर शतनामभिः, सहस्रानामभिश्च तुलसिपुष्पादिभिः अर्चयेत् । पायसादिकं निवेद्य, पुरुषसूक्तादिभिः मन्त्रपुष्पं समर्प्य, नीराज्य, संप्रार्थ्य, प्रतिष्ठान्तं देवं न उद्वास्य, रक्षेत् ।

लक्ष्म्यां पद्मोदरमण्डलपूजा - गुरुः आचम्य, प्राणानायम्य, भूतोच्चाटनादिकं विधाय, प्रतिष्ठाङ्ग पद्मोदरमण्डले सपरिवार सहित नारायणाङ्कस्थां श्रीमहालक्ष्म्याः पूजां करिष्ये इति सङ्कल्प्य, शङ्खपूजां विधाय, गुरुं गणपतिं च पूजयेत् । मण्डलमध्ये पीठपूजां विधाय, तत्तत् स्थाने तत्तद्देवताः आवाहयेत् । कर्णिकायां बिन्दौ - ॐ श्रीं श्रियै नमः इति परमाङ्कस्थां श्रियमावाह्य मुद्राः प्रदर्श्य मूलमन्त्रं सञ्जपेत् । पूर्वादिदिक्षु - ॐ श्रियै नमः । लक्ष्म्यै । मायै । इन्दिरायै नमः । आग्नेयादिविदिक्षु - रमायै नमः इत्यङ्गानि पूजयेत् । पूर्वाद्यष्टदलेषु क्रमेण - ॐ श्रीं अणिमायै नमः । श्रीं महिमायै । श्रीं लघिमायै । श्रीं गरिमायै । श्रीं प्राप्त्यै । श्रीं प्रकाशायै । श्रीं

ईशायै । श्रीं वशिन्यै नमः । वृत्तत्रयेषु क्रमेण - ॐ श्रीं इच्छाशक्त्यै नमः । क्लीं क्रियाशक्त्यै । ह्रीं ज्ञानशक्त्यै नमः

मेषादि राशिदिक्षुगतद्वादशपद्मेषु क्रमेण - श्रियै । लक्ष्म्यै । कमलायै । पद्मायै । पद्मिन्यै । कमलालयायै । रमायै । वृषाकप्यै । धन्यायै । वृद्ध्यै । यज्ञायै । इन्दिरायै नमः

पद्मान्तरालेषु- ॐ वेदायै नमः । वेदवत्यै । धात्र्यै । महालक्ष्म्यै । सुखालयायै । हरिण्यै । सीतायै । रुग्मिण्यै । रेवत्यै । प्रभायै । अनन्तायै । विश्वरूपायै नमः ।

उपशोभेषु चक्राब्जक्रमात् वाणीहिरण्यगर्भादीन् आवाह्य, शोभेषु - ॐ चण्ड्यै नमः । प्रचण्ड्यै । बलाकिन्यै । वनमालिन्यै । जयायै । विजयायै । विभीषिकायै । शाङ्कर्यै नमः । द्वारादिषु- इन्द्रादीन् आवाहयेत् । इति मण्डले तत्तत् स्थाने देवताः आवाह्य, 'ॐ मण्डले आवाहितदेवताभ्यो नमः' इत्युक्त्वा, मुद्राः प्रदर्शयेत् ।

मण्डलमध्ये आवाहितां सपरिवारसहितां परमाङ्कस्थश्रियं षोडशोपचारैः सम्पूज्य, पुष्पोपचारकाले मूलमन्त्रेण १०८ वारं, अष्टोत्तरशतनामभिः, सहस्रनामभिश्च पुष्पैः अर्चयेत् । पायसादीन् निवेद्य, श्रीसूक्तादिभिः मन्त्रपुष्पं समर्प्य, नीराज्य, संप्रार्थ्य, प्रतिष्ठान्तं न उद्वास्य, रक्षेत् । एवं अन्यदेवतायां पद्मोदरमण्डलपूजा क्रमात् तत्तत् देवतामन्त्रैः पूजयेत् ।

## दुर्गायां शक्तिभद्रकमण्डलपूजा -

कर्णिकायां बिन्दौ - ॐ दुः दुर्गायै नमः

पूर्वादिदिक्षुक्रमेण - ॐ दुः हृदयाय नमः । दुं शिरसे स्वाहा । गीं शिखायै वषट् । यैं कवचाय हुम् । अग्रे - नं नेत्रत्रयाय वौषट् । आग्नेयादिविदिक्षु - मः अस्त्राय फट् इत्यङ्गानि पूजयेत् ।

पूर्वाद्यष्टदलेषु क्रमेण - जयायै । विजयायै । कीर्त्यै । प्रीत्यै । प्रभायै । श्रद्धायै । मेधायै । श्रुत्यै नमः

पूर्वाद्यष्टपदेषु - ब्राह्म्यै । माहेश्वर्यै । कौमार्यै । वैष्णव्यै । वाराह्यै । नारसिंह्यै । ऐन्द्रै । चामुण्डायै नमः । द्वारादिषु - इन्द्रादीन् आवाहयेत् ।

**अजे पद्ममण्डलपूजा -**

पद्ममध्ये बिन्दौ - ॐ हिरण्यगर्भाय नमः

वामे - ॐ सरस्वत्यै नमः । दक्षे - ॐ सावित्र्यै नमः

पूर्वादिदिक्षुक्रमेण - ॐ ब्रह्मणे नमः । धात्रे । विरिञ्चाय । अजाय नमः

आग्नेयादिविदिक्षु - पाद्माय नमः इत्यङ्गानि पूजयेत् ।

पूर्वाद्यष्टदलेषु क्रमेण - ॐ चतुर्मुखाय नमः । धात्रे । विधात्रे । विधये । कर्त्रे । विरिञ्चये । भूतेशाय । शतानन्दाय नमः

दलान्तरालेषु दिक्षु - सनकाय - सनन्दनाय । सनातनाय । सनत्कुमाराय । सनत्सुजाताय । विदिक्षु - विद्यायै । ज्ञानायै । क्षमायै । शमायै नमः

पूर्वाद्यष्टदलाग्रेषु - ॐ कपिलाय नमः । रुद्राय । मनवे । भृगवे । नारदाय । काश्यपाय । कामाय । प्राणाय नमः

पूर्वाद्यष्टदिक्षु क्रमेण - मरीचये । वसिष्ठाय । अङ्गिरसे । अत्रये । पुलस्त्याय । क्रतवे । दक्षाय । मित्राय नमः । भूपुरे पूर्वादिदिक्षु- इन्द्रादीन् आवाहयेत् ।

**सरस्वत्यां पद्ममण्डलपूजा -**

पद्ममध्ये बिन्दौ - ॐ ब्रह्माण्यै नमः

पूर्वादिदिक्षुक्रमेण - ॐ ब्रं हृदयाय नमः । ह्मां शिरसे स्वाहा । ण्यैं शिखायै वषट् । नं कवचाय हुम् । आग्नेयादिविदिक्षु - मः अस्त्राय फट् इत्यङ्गानि पूजयेत् ।

पूर्वाद्यष्टदलेषु क्रमेण - योगायै । सत्यायै । विमलायै । ज्ञानायै । बुद्ध्यै । स्मृत्यै । मेधायै । प्रज्ञायै नमः

दलान्तरालेषु - सनकाय । सनन्दनाय । सनातनाय - सनत्कुमाराय । सनत्सुजाताय । विद्यायै । ज्ञानायै । क्षमायै । शमायै नमः । भूपुरे पूर्वादिदिक्षु- इन्द्रादीन् आवाहयेत् ।

## हनुमति पद्ममण्डलपूजा -

पद्ममध्ये बिन्दौ- ॐ रां रामदूताय स्वाहा

पूर्वादिदिक्षुक्रमेण- ॐ रां हृदयाय नमः । रामदूताय शिरसे स्वाहा । स्वाहा शिखायै वषट्। रां कवचाय हुम् । अग्रे- रामदूताय नेत्राभ्यां वौषट् । आग्नेयादिविदिक्षु - स्वाहा अस्त्राय फट् - इत्यङ्गानि पूजयेत् ।

पूर्वाद्यष्टदलेषु क्रमेण - रामभक्ताय । महातेजसे । कपीश्वराय । महाबलाय । द्रोणाद्रिहारकाय । मेरुपीठार्चनकारकाय । दक्षिणभास्कराय । विघ्नविनाशिने नमः । दलान्तरालेषु - सुग्रीवाय । अङ्गदाय । नीलाय । जाम्बवते । नलाय । सुषेणाय । द्विविदाय । मयन्दाय नमः । भूपुरे पूर्वादिदिक्षु - इन्द्रादीन् आवाहयेत्।

## शिवे भद्रकमण्डलपूजा -

पद्ममध्ये बिन्दौ- ॐ नमः शिवाय

पूर्वादि क्रमेण - ॐ तत्पुरुषाय नमः । अघोराय । सद्योजाताय । वामदेवाय । मध्ये -ईशानाय नमः (इति पञ्च वक्त्रान् पूजयेत्) ।

सदाशिवाङ्के - ॐ पार्वत्यै नमः । पूर्वादिदिक्षु क्रमेण- ॐ नं हृदयाय नमः । मं शिरसे स्वाहा । शिं शिखायै वषट् । वां कवचाय हुम् । आग्नेयादिविदिक्षु - यं अस्त्राय फट् इत्यङ्गानि पूजयेत् । पूर्वाद्यष्टदलेषु क्रमेण-ॐ अनन्ताय नमः । सूक्ष्माय । शिवोत्तमाय । एकनेत्राय । एकरुद्राय । त्रिमूर्तये । श्रीकण्ठाय । शिखण्डिने नमः

दलान्तरालेषु - मन्यवे - मनवे । महानसाय । महते । शिवाय । ऋतध्वजाय - मरुरेताय । भवाय । कालाय । वामदेवाय । धृतव्रताय नमः

पूर्वाद्यष्टपदेषु - विनायकाय । स्कन्दाय । नन्दिने । भृङ्गिरटये । वीरभद्राय । वृषभाय । चण्डेश्वराय । महाकालाय नमः । पूर्वादिदिक्षु - इन्द्रादीन् आवाहयेत् ।

पार्वत्यां पद्ममण्डलपूजा - पद्ममध्ये बिन्दौ - ॐ नमः शिवायै

दक्षे - विनायकाय नमः । वामे - स्कन्दाय नमः

पूर्वादिदिक्षु क्रमेण - ॐ नं हृदयाय नमः । मं शिरसे स्वाहा । शिं शिखायै वषट् । वां कवचाय हुम् । आग्नेयादिविदिक्षु - यैं अस्त्राय फट् इत्यङ्गानि पूजयेत् । पूर्वाद्यष्टदलेषु क्रमेण - उमायै । गौर्यै । शिवायै । रुद्राण्यै । भवान्यै । गिरिजायै । शर्वाण्यै । मात्रे नमः । पूर्वादिदिक्षु- इन्द्रादीन् आवाहयेत् ।

**शेषे पद्ममण्डलपूजा -**

पद्ममध्ये बिन्दौ- ॐ शें शेषाय नमः

शेषस्य वामे- ॐ वारुण्यै नमः

पूर्वादिदिक्षु क्रमेण - ॐ शें हृदयाय नमः । शें शिरसे स्वाहा । षां शिखायै वषट् । यं कवचाय हुम् । अग्रे - नं नेत्राभ्यां वौषट्

आग्नेयादिविदिक्षु - ॐ मः अस्त्राय फट् इत्यङ्गानि पूजयेत् ।

पूर्वाद्यष्टदलेषु क्रमेण - ॐ अनन्ताय नमः । नराय । लक्ष्मणाय । बलाय । सङ्कर्षणाय । नीलवाससे । जगद्रक्षाय । जलेशयाय नमः

पूर्वाद्यष्टदलाग्रेषु क्रमेण - शें शेषाय नमः। वां वासुकये । तं तक्षकाय । कं कार्कोटकाय । पं पद्माय । मं महापद्माय । शं शङ्खपालाय । कुं कुलिकाय नमः । दलान्तरालेषु - ॐ शेषकुलनागेभ्यो नमः । वासुकीकुलनागेभ्यो । तक्षककुलनागेभ्यो । कार्कोटककुलनागेभ्यो । पद्मकुलनागेभ्यो । महापद्मकुलनागेभ्यो । शङ्खपालकुल नागेभ्यो । कुलिककुलनागेभ्यो नमः ।

भूपुरे पूर्वादिदिक्षु - इन्द्रादीन् आवाहयेत् ।

**गरुडे पद्ममण्डलपूजा -**

पद्ममध्ये बिन्दौ - ॐ क्षिप ॐ स्वाहा

गरुडस्य वामे - ॐ सौपर्ण्यै नमः

पूर्वादिदिक्षु क्रमेण- ॐ क्षिं हृदयाय नमः । पं शिरसे स्वाहा । ओं शिखायै वषट् । स्वां कवचाय हुम् । आग्नेयादिविदिक्षु-हां अस्त्राय फट् इत्यङ्गानि

पूजयेत् । पूर्वाद्यष्टदलेषु क्रमेण- ॐ गरुत्मते नमः । ताक्ष्याय । वैनतेयाय । खगेश्वराय । नागान्तकाय । विष्णुरथाय । सुपर्णाय । विषहराय नमः

दलान्तरालेषु- ॐ रुद्राय नमः । सुकीर्त्यै । सुमुखाय । सुवर्णाय । सुबलाय । सुनामाय । सुनेत्राय । सुवर्चाय नमः । भूपुरे पूर्वादिदिक्षु – इन्द्रादीन् आवाहयेत्।

**कामे पद्ममण्डलपूजा –**

पद्ममध्ये बिन्दौ – ॐ क्लीं कामाय नमः

वामे- ॐ रत्यै नमः । दक्षे- ॐ प्रीत्यै नमः

पूर्वादिदिक्षु क्रमेण- ॐ क्लीं हृदयाय नमः । कां शिरसे स्वाहा । मां शिखायै वषट् । यं कवचाय हुम् । अग्रे- नं नेत्राभ्यां वौषट्

आग्नेयादिविदिक्षु – मः अस्त्राय फट् इत्यङ्गानि पूजयेत् ।

पूर्वाद्यष्टदलेषु क्रमेण – कामाय । भस्मशरीराय । अनङ्गाय । मन्मथाय । वसन्तसखाय । स्मराय । इक्षुधनुर्धराय । पुष्पबाणाय नमः । भूपुरे पूर्वादिदिक्षु- ॐ इन्द्राय नमः । अग्नये । यमाय । निर्ऋतये । वरुणाय । वायवे । सोमाय । पुष्पाङ्गाय नमः

**स्कन्दे षड्दलमण्डलपूजा –**

चतुरश्रं ततो मध्ये षड्दळं पद्ममालिखेत् ।
कर्णिकां च त्रिभागैकं पीतवर्णेन कारयेत् ॥
श्वेतं पीतं च रक्तं च स्फटिकं श्यामवर्णकम् ॥
एतैर्वर्णैश्च मतिमान् षड्दळानि च पूरयेत् ।
रजोभिर्विविधैर्वर्णैर्यथाशोभं विभूषयेत् ॥

पद्ममध्ये बिन्दौ – ॐ रं स्कन्दाय नमः

पूर्वादिदिक्षु – ॐ देवसेनायै नमः । विद्यायै । मेधायै । प्रज्ञायै नमः

आग्नेयादिविदिक्षु – ॐ शक्तये नमः । कुक्कुटाय । मयूराय । गजाय नमः

पूर्वादिदिक्षुक्रमेण- ॐ रं हृदयाय नमः । स्कं शिरसे स्वाहा । दां शिखायै वषट् । यं कवचाय हुम् । अग्रे - नं नेत्राभ्यां वौषट् । आग्नेयादिविदिक्षु - मः अस्त्राय फट् इत्यंगानि पूजयेत् ।

पूर्वादि षड्दलेषु क्रमेण - ॐ जगद्भुवे नमः । वचद्भुवे । विश्वभुवे । रुद्रभुवे । ब्रह्मभुवे । भुवनभुवे नमः

पूर्वादिपदेषु - ॐ गं गजेन्द्राय नमः । अं अग्नये । यं यमाय । नं निर्ऋतये । वं वरुणाय । यं वायवे । सं सोमाय । सुं सुमित्राय नमः

## सूर्ये पद्ममण्डलपूजा –

पद्ममध्ये - ॐ ॐ घृणिः सूर्य आदित्यः

पूर्वादिदिक्षु क्रमेण - ॐ घृणिः हृदयाय नमः। सूर्यः शिरसे स्वाहा । आदित्यः शिखायै वषट् । आदित्यः कवचाय हुम् । अग्रे - सूर्यः नेत्राभ्यां वौषट् । आग्नेयादिविदिक्षु - घृणि अस्त्राय फट् इत्यङ्गानि पूजयेत् ।

पूर्वादिदिक्षु क्रमेण - आदित्याय । रवये । भानवे । भास्कराय नमः

आग्नेयादिविदिक्षु - उषायै । प्रज्ञायै । प्रभायै । सन्ध्यायै नमः

पूर्वाद्यष्टदलेषु क्रमेण - सहस्रकिरणाय । आदित्याय । रवये । भास्कराय । प्रभाकराय । दिवाकराय । अंशवे । भानवे नमः

दलान्तरालेषु - ॐ चन्द्रमसे नमः । अङ्गारकाय । बुधाय । बृहस्पतये । शुक्राय । शनैश्चराय । राहवे । केतवे नमः

## गणपतौ पद्ममण्डलपूजा -

पद्ममध्ये बिन्दौ - ॐ क्षिप्रप्रसादाय नमः । वामे- ॐ पुष्ट्यै नमः

पूर्वादिदिक्षुक्रमेण - ॐ क्षिप्रप्रसादाय हृदयाय नमः । नमः शिरसे स्वाहा । क्षिप्रप्रसादाय शिखायै वषट् । नमः कवचाय हुम् । अग्रे - क्षिप्रप्रसादाय नेत्राभ्यां वौषट् । आग्नेयादिविदिक्षु - नमः अस्त्राय फट् इत्यङ्गानि पूजयेत् ।

पूर्वाद्यष्टदलेषु क्रमेण - ॐ विघ्नाय नमः । विनायकाय । वीराय । शूराय । हस्तिमुखाय । एकदन्ताय । क्षिप्रप्रसादाय । गणेश्वराय नमः

पूर्वादिदिक्षु - विश्वरूपाय । विशालाक्षाय । अक्षयाय । मदविभ्रमाय । उन्मत्ताय । ललिताय । भीमाय । तीक्ष्णदंष्ट्राय नमः

**कुबेरे पद्ममण्डलपूजा -**

पद्ममध्ये बिन्दौ - ॐ भूं कुबेराय नमः

कुबेरस्य वामे - ॐ भद्रायै नमः

पूर्वादिदिक्षु क्रमेण - ॐ भूं हृदयाय नमः । कुबेराय शिरसे स्वाहा । नमः शिखायै वषट् । भूं कवचाय हुम् । अग्रे - कुबेराय नेत्राभ्यां वौषट्

आग्नेयादि विदिक्षु - नमः अस्त्राय फट् इत्यङ्गानि पूजयेत् ।

पूर्वाद्यष्टदलेषु क्रमेण - वैश्रवणाय । कुबेराय । धनदाय । महाबलाय । धनाधिपाय । पद्महस्ताय । दण्डधराय । यक्षाधिपाय नमः

पूर्वादिदलाग्रेषु क्रमेण - ॐ जम्भलाय नमः । मणिभद्रकाय । नलकूबराय । शिबिकुण्डलाय । आग्नेय्यां- शङ्खनिधये । ऐशान्ये - पद्मनिधये नमः ।

## ॥ प्रासादाधिवासः ॥

प्रासादस्य ईशकोणे पद्मोपरि धान्यादिभिः पीठं विरचय्य, तदुपरि कूर्चं निधाय, पीठपूजां विधाय, मूलमन्त्रमुक्त्वा, प्रासादाधिदेवतायै नमः आवाहयामि, इत्यावाह्य, मुद्राः सन्दर्श्य, मूलमन्त्रमष्टवारं सञ्जप्य, षोडशोपचारैः सम्पूज्य, अधिवास्य, रक्षेत् ।

## ॥ प्रासादाधिवासहोमः ॥

प्रासादस्य ईशान्यदिग्भागे स्थण्डिले अग्निं प्रतिष्ठाप्य, अन्वाधानम् - अत्रप्रधानं 'देवतां' गायत्रीमन्त्रेण (विष्णौ - पुरुषसूक्तस्थषोडशमन्त्रैः) पालाशसमित्-

पायस-आज्य-तिल-त्रिमधुरेति पञ्चद्रव्यैः प्रत्येकं (विष्णौ - एकैकवारम्) अष्टाविंशतिवारं...इत्यादि । होमं परिसमाप्य, सम्पाताज्यं, हुतभस्मं च सङ्गृह्य, रक्षेत् ।

## ॥ अष्टबन्धशुद्धिः ॥

अष्टबन्धं अस्त्रमन्त्रेण प्रोक्ष्य, शोषण-दहन-प्लावनानि विधाय, शय्यासमीपे संस्थाप्य, प्रणवमूलमन्त्राक्षरैः हुत सम्पाताज्यं समर्प्य, वस्त्रेणाच्छाद्य, तालत्रयादिना रक्षेत् ।

## ॥ प्रासादप्रतिष्ठा ॥

अथ आचार्यः आचम्य, प्राणानायम्य, सङ्कल्प्य, गुरुं गणपतिं च सम्पूज्य, सशिखरयुतं पुष्पमालादिभिरलङ्कृतप्रासादस्य द्वारदेशे स्थित्वा, भूमौ पीठपूजां विधाय, उपचारमन्त्रं उक्त्वा, मूलमन्त्रेण प्रासादे 'देवतां' आवाह्य, मुद्राः सन्दर्श्य, त्रिवारं व्याप्य, गोलकचिन्तनं कुर्यात् । मूलमन्त्रं उच्चार्य, प्रासादरूपिणे(ण्यै) नमः इति पुष्पाञ्जलिं समर्प्य, अधिवासितकूर्चस्थं चैतन्यं प्रासादे संयोज्य, प्रासादं स्पृष्ट्वा ॐ ॐ ॐ प्रासादं प्रतिष्ठापयामि इत्युक्त्वा, ध्रुवाद्यौरिति मन्त्रं पठेत् । विष्णौ पुरुषसूक्तेन अन्येषु गायत्रीमन्त्रेण च षोडशोपचारैः सम्पूज्य, नीराज्य, प्रार्थयेत् ।

## ॥ वेदपारायणम् ॥

वेदाँश्च चतुरः सम्यक् पारयेयुर्द्विजोत्तमाः ।
प्रतीच्यादिद्वारगौ द्वौ द्वावेकैकं तु दशावराः ।
यथालब्धं यथावित्तमथवा विष्णुतत्पराः ॥
ऋचं प्राच्यां यजुर्याम्ये सामनाम च वारुणे ।
आथर्वणं तथोदीच्यां पाठयेद्ब्राह्मणोत्तमः ॥

## ॥ ब्रह्मशिलाप्रतिष्ठा ॥

अथ गुरुः आचम्य, प्राणानायम्य, गर्भगृहं प्रविश्य, भूतोच्चटनादिकं विधाय, सङ्कल्प्य, शङ्खपूजां विधाय, गुरुं गणपतिं च सम्पूज्य, प्रतिष्ठाङ्ग पञ्चगव्यमेलनपुरस्सरं पुण्याहवाचनं वाचयेत् । मण्डपमागत्य शोधितपीठं ब्रह्मशिलां च पञ्चगव्य-पञ्चामृत-पुण्याहकलशजलैश्च अभिषिच्य, गन्धाक्षत पुष्पमालाधिभिः अलङ्कृत्य, मङ्गलसूक्तानि पठन् वाद्यादिघोषैः सह पीठं ब्रह्मशिलां च प्रासादप्रदक्षिणापूर्वकगर्भगृहमानीय, तत्र भद्रासने निधाय, ब्रह्मशिलां योगनाल तन्मध्ये सम्पर्कं भवति तत्र प्रणवेन संस्थापयेत् ।

ब्रह्मशिलायां 'स्योना पृथिवीति' मन्त्रेण पृथिवीं आवाह्य,

धरणीं पीतवसनां सर्वाभरभूषिताम् ।
वराभयोद्यतकरां समासीनां शुचिस्मिताम् ॥

इति पृथिवीं ध्यात्वा, गन्धादिभिः सम्पूज्य, नीराज्य,

त्वमेवपरमाशक्तिः त्वमेवाऽसनधारिकाः ।
देवाज्ञया त्वया देवि स्थातव्यमिह सर्वदा ॥
स्थिरं चराचरं यस्यां रत्नानां निधिरव्ययः ।
सा त्वं ब्रह्मशिलारूपा तिष्ठात्र धरणी स्थिरा ॥

इति सम्प्रार्थ्य, पुष्पाञ्जलिं समर्पयेत् ।

**रत्नन्यासविधिः** - प्रथमावरणे बीजं द्वितीये रत्नमेव च ।
धातुसज्ञं तृतीये तु चतुर्थे लोहमेव हि ॥

ब्रह्मशिलास्थितान् गर्तान् प्रणवेन पञ्चगव्येन, मूलमन्त्रेण गन्धोदकेन च संक्षालयेत् । रत्नन्यासद्रव्याणि अस्त्रमन्त्रेण प्रोक्ष्य, शोषण-दहन-प्लावनानि कृत्वा, प्रणवेन सम्पूज्य, रत्नन्यासं कुर्यात् ।

**विष्णौ** - यवो व्रीहिश्च निष्पावः प्रियङ्गुतिलमाषकाः ॥
नीवाराः शालयश्चाष्टौ गर्ते प्रागादि विन्यसेत् ।
सिद्धार्थं विन्यसेत् मध्ये पूर्वोक्तेन क्रमेण वै ॥
वज्रं तु पूर्वतो दध्यात् आग्नेय्यां मौक्तिकं न्यसेत् ।

वैडूर्यं दक्षिणे दध्यात् शङ्खं निर्ऋतिगोचरे ॥
स्फटिकं वारुणे दध्यात् पद्मरागं तु वायवे ।
उत्तरे चन्द्रकान्तं च एशान्यामिन्द्रनीलकम् ॥
पद्मरागं न्यसेत् मध्ये यथावद् द्विजसत्तम ।
हरितालं न्यसेत् पूर्वे आग्नेय्यां तु मनःशिलाम् ॥
अञ्जनं दक्षिणे दध्यात् मौक्षिकं निर्ऋतिगोचरे ।
सौराष्ट्री वारुणेद्या वायव्यां गैरिकं तथा ॥
कांस्यं चैवोत्तरे दध्यादैशान्यां गन्धकं तथा ।
पारदं तु न्यसेत् मध्ये यथा वा त्रिदशेश्वर ॥
हिरण्यं पूर्वतो दध्यादाग्नेय्यां तारमुत्तमम् ।
ताम्रं च दक्षिणे न्यस्य नैर्ऋत्ये आयसं तथा ॥
पश्चिमे त्रपुकं न्यस्य कूर्मं तु स्वर्णनिर्मितम् ।
वायव्ये विन्यसेत् पश्चात् सौम्ये शङ्खं सुवर्णकम् ।
एशान्यां विन्यसेत् चक्रं मध्ये तु पङ्कजं न्यसेत् ॥

ततः सर्वबाह्ये प्रथमावरणे अष्टसु गर्तेषु प्राचीमाराभ्य प्रादक्षिण्येन क्रमेण बीजादीन् क्रमात् तत्तन्मन्त्रैः विन्यसेत् । ॐ ॐ विश्वाय नमः ॐ इति यवम् । ॐ नं तैजसाय नमः ॐ इति व्रीहीन् । ॐ मों प्राज्ञाय नमः ॐ इति निष्पावान् । ॐ नां तुरीयाय नमः ॐ इति प्रियङ्गून् । ॐ रां आत्मने नमः ॐ इति तिलान् । ॐ यं अन्तरात्मने नमः ॐ इति माषान् । ॐ णां परमात्मने नमः ॐ इति नीवारान् । ॐ यं ज्ञानात्मने नमः ॐ इति शालीन् । ॐ ॐ नमो नारायणाय ॐ इति सिद्धार्थान् मध्ये विन्यसेत् । तदन्तः वज्र-मौक्तिक-वैडूर्य-जलज-स्फटिक-पुष्यराग-चन्द्रकान्त-इन्द्रनीलाख्यानि अष्टौ रत्नानि पूर्वोक्तेनैवमन्त्रैः प्राच्यादि क्रमेण विन्यसेत् । मध्यगर्ते तु अष्टाक्षरमन्त्रेण पद्मरागं न्यसेत् । तदन्तः हरिताल- मनःशिला - अञ्जन - माक्षिक -सौराष्ट्री-गैरिक-कांस्य-गन्धकाख्यान् धातून् पूर्वोक्तेनैव क्रमेण मध्ये पादरसं च न्यसेत् । तदन्तः सुवर्ण - रजत - ताम्र - आयः - त्रपुः - सौवर्णकूर्म - सौवर्णशङ्ख-सौवर्णचक्राख्यानि लोहानि मध्ये तु सौवर्णपद्मं च क्रमेण न्यसेत् ।

**लक्ष्म्यां -** बाह्यावरणे प्रागादिक्रमेण ॐ श्रीं ह्रीं क्लीं ऐं अणिमायै नमः इति यवम् । ॐ श्रीं ह्रीं क्लीं ऐं महिमायै नमः इति व्रीहीन् । ॐ श्रीं ह्रीं क्लीं ऐं लघिमायै नमः इति निष्पावान् । ॐ श्रीं ह्रीं क्लीं ऐं गरिमायै नमः इति प्रियङ्गून् । ॐ श्रीं ह्रीं क्लीं ऐं प्राप्त्यै नमः इति तिलान्। ॐ श्रीं ह्रीं क्लीं ऐं प्रकाशायै नमः इति माषान् । ॐ श्रीं ह्रीं क्लीं ऐं ईशायै नमः इति नीवारान् । ॐ श्रीं ह्रीं क्लीं ऐं वशिन्यै नमः इति शालीन् मध्ये ॐ श्रीं श्रियै नमः इति सिद्धार्थान् मध्ये विन्यसेत् । तदन्तः द्वितीयावरणे वज्र-मौक्तिक-वैडूर्य-जलज-स्फटिक-पुष्यराग-चन्द्रकान्त-इन्द्रनीलाख्यानि अष्टौ रत्नानि पूर्वोक्तेनैव मन्त्रैः प्राच्यादि क्रमेण विन्यसेत् । मध्यगर्ते तु मूलमन्त्रेण पद्मरागं न्यसेत् । तदन्तः मनःशिला- हरिताल-अञ्जन-श्याम-सीस-सौराष्ट्र-रोचन-गैरिकाख्यान् धातून् पूर्वोक्तेनैव क्रमेण मध्ये पादरसं च न्यसेत् । तदन्तः सुवर्ण-रजत-ताम्र-आयः-त्रपुः-सौवर्णकूर्म-सौवर्णशङ्ख-सौवर्णचक्राख्यानि लोहानि मध्ये तु सुवर्ण पद्मं च क्रमेण न्यसेत् ।

**दुर्गायां -** बाह्यावरणे प्रागादिक्रमेण ॐ तामग्निवर्णां...तरसे नमः इति यवम् । ॐ कात्यायनाय..प्रचोदयात् इति व्रीहीन् । ॐ अग्ने त्वं...शं योः इति निष्पावान् । ॐ कात्यायनाय...प्रचोदयात् इति प्रियङ्गून् । ॐ विश्वानि नो...तनूनाम् इति तिलान् । ॐ कात्यायनाय...प्रचोदयात् इति माषान् । ॐ पृतनाजितगं...दुरितात्यग्निः इति नीवारान् । ॐ कात्यायनाय...प्रचोदयात् इति शालीन् । ॐ जातवेदसे...दुरितात्यग्निः ॐ दुः दुर्गायै नमः इति सिद्धार्थान् मध्ये विन्यसेत् । तदन्तः द्वितीयावरणे वज्र-मौक्तिक-वैडूर्य-जलज-स्फटिक-पुष्यराग-चन्द्रकान्त-इन्द्रनीलाख्यानि अष्टौ रत्नानि पूर्वोक्तेनैवमन्त्रैः प्राच्यादि क्रमेण विन्यसेत् । मध्यगर्तौ तु वेदोक्तमूलमन्त्रैः पद्मरागं न्यसेत् । तदन्तःपुलक-विद्रुम-अञ्जन-श्याम-सीस-मनःशिला-हरिताल-गैरिखाख्यानि धातून् पूर्वोक्तेनैव क्रमेण मध्ये पादरसं च न्यसेत् । तदन्तः सुवर्ण-रजत-ताम्र-

अयः - सौवर्णसिंहं - सौवर्णचक्र-सौवर्णशङ्ख-सौवर्णशूलाख्यानि लोहानि मध्ये तु सौवर्णपद्मं च क्रमेण न्यसेत् ।

अजे - के यवव्रीहिनिष्पावप्रियङ्गुतिलमाषकान् ।

नीवारांश्च तथा शालीन् सिद्धार्थं च यथाविधि ॥

वज्रं मौक्तिकवैडूर्यं शङ्खं स्फटिकपुष्यकम् ।

चन्द्रकान्तं चेन्द्रनीलं पद्मरागं च मध्यतः ॥

मनःशिलां हरितालमञ्जनं श्यामसीसके ।

सौराष्ट्रीं रोचनां चैव गैरिकं पारतं तथा ॥

सुवर्णं रजतं ताम्रमायासं त्रपुसीसकम् ।

सौवर्णकच्छपं शङ्खं ब्रह्मस्थाने हिरण्यकम् ॥

प्रागादिक्रमेण ॐ हिं नमः इति यवम् । ॐ रं नमः इति व्रीहीन् । ॐ ण्यं नमः इति निष्पावान् । ॐ गं नमः इति प्रियङ्गून् । ॐ र्भा नमः इति तिलान् । ॐ यं नमः इति माषान् । ॐ नं नमः इति नीवारान् नीवारान् । ॐ मः नमः इति शालीन् । ॐ हिरण्यगर्भाय नमः इति सिद्धार्थान् मध्ये विन्यसेत् । तदन्तः द्वितीयावरणे वज्र - मौक्तिक - वैडूर्य - जलज - स्फटिक -पुष्यराग-चन्द्रकान्त-इन्द्रनीलाख्यानि अष्टौ रत्नानि पूर्वोक्तेनैव मन्त्रैः प्राच्यादि क्रमेण विन्यसेत् । मध्यगर्ते तु मूलमन्त्रेण पद्मरागं न्यसेत् । तदन्तः मनःशिला-हरिताल-अञ्जन-श्याम-सीस-सौराष्ट्र-रोचन-गैरिकाख्यान् धातून् पूर्वोक्तेनैव क्रमेण मध्ये पादरसं च न्यसेत् । तदन्तः सुवर्ण-रजत-ताम्र-आयः-त्रपुः- सीस-सौवर्णकूर्म-सौवर्णशङ्खाख्यानि लोहानि मध्ये तु सौवर्णपद्मं च क्रमेण न्यसेत् ।

सरस्वत्यां - यवव्रीहिनिवाराश्च प्रियङ्गुतिलवैणवः ।

गोधूमं सर्षपं चैव सिद्धार्थं नवमे न्यसेत् ॥

कुलिशं मौक्तिकं चैव वैडूर्यं शङ्खमेव च ॥

स्फटिकं पुष्यरागं च चन्द्रकान्तं सुनीलकम् ।

पूर्वादिदिक्षु विन्यस्य पद्मरागं तु मध्यमे ॥

सीसं मनःशिलां चैव हरितालमञ्जनामपि ।

सौराष्ट्रीं रोचनां चैव गैरिकं गन्धकं तथा ॥
पादरसं चैव धातून्विन्यसेत् मूलविद्यया ।
सुवर्णं रजतं ताम्रं सीसं पूर्वादिषु क्रमात् ॥
सुवर्णकलशं मालां वीणां रजतनिर्मितम् ।
हंसं वह्न्यादिषु न्यस्य मध्ये सौवर्णपङ्कजम् ॥

बाह्यावरणे प्रागादिक्रमेण ॐ योगायै नमः इति यवम् । ॐ सत्यायै नमः इति व्रीहीन् । ॐ विमलायै नमः इति नीवारान् । ॐ ज्ञानायै नमः इति प्रियङ्गून् । ॐ बुद्ध्यै नमः इति तिलान् । ॐ स्मृत्यै नमः इति वैणवान् । ॐ मेधायै नमः इति गोधूमान् । ॐ प्रज्ञायै नमः इति सर्षपम् चेति धान्यानि मध्ये ॐ ब्रह्माण्यै नमः इति सिद्धार्थं च न्यसेत् । तदन्तः द्वितीयावरणे वज्र - मौक्तिक - वैडूर्य - जलज - स्फटिक -पुष्यराग-चन्द्रकान्त-नीलाख्यानि अष्टौ रत्नानि पूर्वोक्तनैव मन्त्रैः प्राच्यादि क्रमेण मध्ये मूलमन्त्रेण पद्मरागं च न्यसेत् । तदन्तः सीस-मनःशिला - हरिताल - अञ्जन - सौराष्ट्र-रोचन-गैरिका गन्धकख्यान् धातून् पूर्वोक्तनैव क्रमेण मध्ये पादरसं च न्यसेत् । तदन्तः सुवर्ण- रजत - ताम्र - सीस-सौवर्णकलश - मौक्तिकामाला - रजतवीणा - सौवर्ण हंसाख्यानि लोहानि मध्ये तु सुवर्णपद्मं च क्रमेण न्यसेत् ।

## हनुमति (सामान्यक्रमः) -

तिलनीवारमुद्गाश्च माषाश्चैव च सर्षपा ।
शामाकाशलिकुलित्थाः प्रियङ्गुर्नवबीजकाः ॥
कुलिशं मौक्तिकं चैव विद्रुमं गारुडं पुनः ।
वैडूर्यं पुष्यरागं च नीलं गोमेदिकं शुभम् ॥
पद्मरागं न्यसेत् मध्ये धातुन्यासं समाचरेत् ।
अञ्जनं हरितालं च श्यामं चैव मणिःशिला ॥
पारदं चैव सौराष्ट्रं सीसकं गैरिकं तथा ।
माक्षिकं मूलमन्त्रेण पीठोर्ध्वपदमध्यमे ॥
काञ्चनं रजतं ताम्रमयासं कांस्यसीसके ।

पित्तालं देवलोहं च सुवर्णपङ्कजं न्यसेत् ॥

बाह्यावरणे प्रागादिक्रमेण ॐ रां नमः इति तिलान् । ॐ रां नमः इति नीवारान् । ॐ मं नमः इति मुद्गाः । ॐ दूं नमः इति माषान् । ॐ तां नमः इति सर्षपान् । ॐ यं नमः इति श्यामाकान् । ॐ स्वां नमः इति शालीन् । ॐ हां नमः इति कुळित्थाः । ॐ रां रामदूताय स्वाहा इति प्रियङ्गून् मध्ये विन्यसेत् । तदन्तः द्वितीयावरणे वज्र-मौक्तिक-विद्रुम-गारुड-वैडूर्य-पुष्यराग-नील-गोमेदिकाख्यानि अष्टौ रत्नानि पूर्वोक्तेनैव मन्त्रैः प्राच्यादि क्रमेण विन्यसेत् । मध्यगर्तौ तु मूलमन्त्रेण पद्मरागं न्यसेत् । तदन्तः अञ्जन-हरिताल-श्याम-मणिःशिला-पारद-सौराष्ट्र-सीस-गैरिकख्यान् धातून् पूर्वोक्तेनैव क्रमेण मध्ये माक्षिकं च न्यसेत् । तदन्तः काञ्चन-रजत-ताम्र-अयासः-कांस्य-सीस-पित्ताल-देवलोहाख्यानि लोहानि मध्ये तु सुवर्णपद्मं च क्रमेण न्यसेत् । शेषगरुडकामेषु रत्नान्यासद्रव्याणि हनुमति कथितान्येव । विद्येशमूलमन्त्रैः न्यासः ।

शिवे – बीजानि व्रीहिगोधूम तिलमाषान् प्रदक्षिणम् ।
मुद्गं च यवनीवारशामाकानन्तरेऽखिलान् ॥
वज्रप्रवालनीलेन्द्र नीलमौक्तिकपुष्यकम् ।
प्रोक्ताब्जरागवैडूर्य दीप्तशक्तिं स्मरन्न्यसेत् ॥
हरिताल शिलाकाङ्क्षि तालसूतानि गैरिकान् ।
धातून् सुगन्धशृङ्गाख्यान् धतिवीर्यात्मकान् न्यसेत् ॥
शङ्खं च शूलखट्वाङ्गौ परशुं वृषभं तथा ।
पिनाकं हरिणं पाशं हैमं शैवे तु विन्यसेत् ॥

बाह्यावरणे प्रागादिक्रमेण ॐ तत्पुरुषाय...प्रचोदयात् इति व्रीहीन् । ॐ कद्रुद्राय...हृदे इति गोधूमः । ॐ अघोरेभ्यो...रुद्ररूपेभ्यः इति तिलान् । ॐ कद्रुद्राय...हृदे इति माषान् । ॐ सद्योजातं...भवोद्भवाय नमः इति मुद्गान् । ॐ कद्रुद्राय...हृदे इति यवम् । ॐ वामदेवाय नमो...मनोन्मनाय नमः इति नीवारान् । ॐ कद्रुद्राय...हृदे इति शामाकाान् । ॐ ईशानः सर्वविद्यानां...

शिवोम् ॐ नमः शिवाय इति व्रीह्याद्यष्ट- बीजानि मध्ये विन्यसेत् । तदन्तः द्वितीयावरणे वज्र - प्रवाल - इन्द्रनील - नील - मौक्तिक - पुष्यराग -पद्मराग-वैडूर्याख्यानि अष्टौ रत्नानि पूर्वोक्तेनैवमन्त्रैः प्राच्यादि क्रमेण मध्ये ईशानमूलमन्त्रैः माणिक्यं विन्यसेत् । तदन्तः हरिताल-मनःशिला-काङ्क्षि-ताल-सूत-गैरिका-सुगन्ध-शृङ्गाख्यानि धातून् पूर्वोक्तेनैव क्रमेण मध्ये पादरसं च न्यसेत् । तदन्तः शङ्ख-शूल-खट्वाङ्ग-परशु-वृषभ-पिनाक-हरिण-पाशाख्यानि लोहानि मध्ये सुवर्ण पद्मं च क्रमेण न्यसेत् ।

**पार्वत्यां** - अष्टमं वैणवं गौर्यां महानीलं मणीष्वपि ।
मध्येऽब्जरागमेवास्यबीजेषुत्वष्ट बीजकम् ॥
पुलकं विद्रुमं चापि साञ्जनं श्यामसीसकम् ।
मनःशिलां हरितालं गैरिकं पारतं तथा ॥
हिरण्यं रजतं ताम्रमयासं त्रपुसीसकम् ।
सुवर्णं तप्तहेमाढ्यमारकूटं त्विहाष्टमम् ॥

बाह्यावरणे प्रगादिक्रमेण ॐ उमायै नमः इति यवम् । ॐ गौर्यै नमः इति व्रीहीन् । ॐ शिवायै नमः इति निष्पावान् । ॐ रुद्राण्यै नमः इति प्रियङ्गून् । ॐ भवानै नमः इति तिलान् । ॐ गिरिजायै नमः इति माषान् । ॐ शर्वाण्यै नमः इति नीवारान् । ॐ मात्रे नमः इति वैणवं चेति बीजानि मध्ये ॐ नमः शिवायै इति व्रीह्याद्यष्टबीजानि च विन्यसेत्। तदन्तः द्वितीयावरणे वज्र - मौक्तिक - वैडूर्य - शङ्ख - स्फटिक - पुष्यराग - चन्द्रकान्त-महानीलाख्यानि रत्नानि पूर्वोक्तेनैवमन्त्रैः प्राच्यादि क्रमेण मध्ये मूलमन्त्रेण पद्मरागं च विन्यसेत् । तदन्तः पुलक-विद्रुम-अञ्जन-श्याम-सीस-मनःशिला-हरिताल-गैरिकाख्यानि धातून् मध्ये पादरसं च क्रमेण न्यसेत् । तदन्तः क्रमेण हिरण्य-रजत-ताम्र-आयः-त्रपुः-सीस-कांस्य-आरकूटाख्यानि लोहान्, मध्ये सुवर्णपद्मं च न्यसेत् ।

**स्कन्दे** - यवगोधूमनीवारं शालिवैणवकानि च ।

प्रियङ्गुतिलमुद्गानि निष्पावश्च क्रमान्न्यसेत् ॥
वज्रं मरकतं नीलं पुष्यरागं प्रवालकम् ।
मौक्तिकं चैव वैडूर्यं स्फटिकश्च महामणिम् ॥
हरितालक्रमञ्चैव गन्धश्चागरुचन्दनम् ।
सौराष्ट्रं गैरिकञ्चैव माक्षिकं प्राग्विदिक्षु च ॥
सुवर्णं रजतं ताम्रमायसं त्रपुसीसकम् ।
आरकूटश्च विदुषा देवलोहं क्रमान्न्यसेत् ॥
कृत्वा मयूरं ताम्रेण तोमरं चामरं गजम् ।
श्रीवत्सं कलशं भेरीं दर्पणं पद्मपुष्पकम् ॥
महामेरुसुवर्णेन कृत्वा रन्ध्रवटे न्यसेत् ।

बाह्यावरणे प्रागादिक्रमेण ॐ कार्तिकेयाय नमः इति यवम् । ॐ विशाखाय नमः इति गोधूमम् । ॐ गुहाय नमः इति नीवारान् । ॐ असुरान्तकाय नमः इति शालीन् । ॐ सेनान्ये नमः इति वैणवान् । ॐ षणमुखाय नमः इति प्रियङ्गून् । ॐ मयूरवाहनाय नमः इति तिलान् । ॐ शक्तिपाणये नमः इति मुद्गान्, मध्ये ॐ रं स्कन्दाय नमः इति निष्पावं च विन्यसेत् । तदन्तः द्वितीयावरणे वज्र - मरकत - नील - पुष्यराग -प्रवाल-मौक्तिक-वैडूर्य-स्फटिकाख्यानि रत्नानि मध्ये महामणिं च पूर्वोक्तनैवमन्त्रैः प्राच्यादि क्रमेण विन्यसेत् । तदन्तः क्रमेण हरिताल-अञ्जन-गन्धक-अगरु-चन्दन-सौराष्ट्रि-गैरिका-माक्षिकाख्यानि धातून् न्यसेत् । तदन्तः सुवर्ण-रजत-ताम्र-आयस-त्रपु-सीस - आरकूट - देवलोहाख्यानि च क्रमेण न्यसेत् । मध्यगर्ते मूलमन्त्रेण ताम्रेणकृत मयूर - तोमर - चामर - गज - श्रीवत्स - कलश - भेरि - दर्पण-पद्म-सौवर्णमहामेरुं च विनिक्षिपेत् ।

सूर्ये - व्रीहिगोधूमकतिलमाषमुद्गयवानपि ।
श्यामाकान् शालिसिद्धार्थान्दिक्षुमध्ये च विन्यसेत् ॥
वज्रं चार्कमणिं नीलं महानीलं च मौक्तिकम् ।
पुष्यगारुडवैडूर्य पद्मरागश्च भास्वति ॥

तालं शिलां तोलिकां च माक्षिकं हेममाक्षिकम् ।
गैरिकं गन्धकं चाभ्रं पारतं नवमं स्मृतम् ॥
ताम्रायासत्रपुरूप्याणि पित्ताळं कांस्यसीसके ।
देवलोहं सुवर्णं च मध्यान्तं पूर्ववन्न्यसेत् ॥

बाह्यावरणे प्रागादिक्रमेण ॐ ॐ नमः इति व्रीहीन् । ॐ घृं नमः इति गोधूमम् । ॐ णिः नमः इति तिलान् । ॐ सूं नमः इति माषान् । ॐ र्यं नमः इति मुद्गान् । ॐ आं नमः इति यवान् । ॐ दिं नमः इति श्यामाकान् । ॐ त्यः नमः इति शालीन् चेति बीजानि मध्ये ॐ ॐ घृणिः सूर्य आदित्यः इति सिद्धार्थं च न्यसेत् । तदन्तः पूर्वोक्तमन्त्रैः क्रमेण वज्र-अर्कमणि-नील-महानील-मौक्तिक-पुष्यराग-गारुड-वैडूर्याख्यानि रत्नानि मध्ये मूलमन्त्रेण पद्मरागं च न्यसेत् । तदन्तः क्रमेण हरिताल-मनःशिला-तोलिका-माक्षिक-हेममाक्षिक-गैरिक-गन्धक-अभ्राख्यानि धातून् मध्ये पादरसं च न्यसेत् । तदन्तः क्रमेण ताम्र-अयास-त्रपु-रूप्य-पित्ताळ-कांस्य-सीस-देवलोहाख्यानि लोहान्, मध्ये सुवर्णपद्मं च न्यसेत् ।

**गणपतौ** - यवं च व्रीहिनिष्पावं पियङ्गुं शामाकं तथा ।
माषनीवारशालींश्च च सर्षपं नवमं स्मृतम् ॥
वज्रं च मौक्तिकं चैव वैडूर्यं जलजं तथा ।
स्फटिकं पुष्यरागं च चन्द्रकान्तं तथैव च ॥
महानीलं पद्मरागं मध्यान्तं विन्यसेत् क्रमात् ।
मनःशिलां हरितालं अञ्जनं श्यामसीसके ॥
सौराष्ट्रीं रोचनं चैव गैरिकं पारतं न्यस्येत् ।
सुवर्णं रजतं ताम्रं अयश्च त्रपुकं तथा ॥
आरकूटं च पित्तालं कास्यं दिक्षुविदिक्षु च ।
मूषिकं दन्तकूर्मौ च पङ्कजं हेमनिर्मितम् ।
मध्यगर्ते तु विन्यस्य मूलमन्त्रेण देशिक ॥

बाह्यावरणे प्रागादिक्रमेण ॐ क्षिं नमः इति यवम् । ॐ प्रं नमः इति व्रीहीन् । ॐ प्रं नमः इति निष्पावान् । ॐ सां नमः इति प्रियङ्गून् । ॐ दां नमः इति श्यामाकान् । ॐ यं नमः इति माषान् । ॐ नं नमः इति नीवारान् । ॐ मः नमः इति शालीं चेति बीजानि मध्ये ॐ क्षिप्रप्रसादाय नमः इति सर्षपं च न्यसेत् । तदन्तः द्वितीयावरणे वज्र-मौक्तिक-वैडूर्य-शङ्ख-स्फटिक-पुष्यराग-चन्द्रकान्त-महानीलाख्यानि रत्नानि पूर्वोक्तैनैवमन्त्रैः प्राच्यादि क्रमेण मध्ये मूलमन्त्रेण पद्मरागं च विन्यसेत् । तदन्तः क्रमेण मनःशिला-हरिताल-अञ्जन-श्याम-सीस-सौराष्ट्री-रोचन-गैरिकाख्यान् धातून् मध्ये पादरसं च न्यसेत् । तदन्तः सुवर्ण - रजत - ताम्र - आयः - त्रपुः - आरकूट - पित्ताल - कास्याख्यानि लोहान् मध्ये सौवर्णमूषिक-दन्त-कूर्म-पङ्कजं च क्रमेण न्यसेत् ।

कुबेरे – शालिनीवारशामाकाः कङ्कुर्माषास्तथैव च ।
कुलित्थां निष्पावकं च तिलां मुद्गां च विन्यसेत् ॥
वज्रं मरकतं यक्षे पद्मरागं प्रवालकम् ।
मुक्ता पुष्यमहानीलेन्द्रनीलं सूर्यकान्तकम् ॥
गन्धकं च रसं चैव हरितालं मनःशिलाम् ।
सौराष्ट्रीं माक्षिकरसौ गैरिकं च रसेन्द्रकम् ॥
सुवर्णं रजतं ताम्रमयासं त्रपुसीसके ।
आरकूटं च विदलं कास्यं मध्यादितः क्रमात् ॥

बाह्यावरणे प्रगादिक्रमेण मध्ये च मूलमन्त्रेण शालि - नीवार - शामाक - कङ्कुः - माष- कुलित्थ - निष्पाव - तिल - मुद्गां चेति बीजानि, तदन्तावरणे वज्र - मरकत - पद्मराग - प्रवाल - मौक्तिक - पुष्यराग - महानील - सूर्यकान्ताख्यानि रत्नानि, तदन्तावरणे गन्धक - पादररस - हरिताल - मनःशिला - सौराष्ट्री - माक्षिक - रस – गैरिक - रसेन्द्रकं चेति धातून्, रजत-ताम्र-आयः-त्रपु-सीस-आरकूट-विदलं-कांस्याख्यानि मध्ये सौवर्णगजदण्ड पद्मानि च विन्यसेत् ।

गायत्रीमन्त्रेण हुत सम्पाताज्यं द्रव्येषु समर्प्य, स्पृष्ट्वा अभिमन्त्रणं कुर्यात्।

## ॥ पीठप्रतिष्ठा ॥

पीठे भगवतो वामे श्रीगुरून् गुरुपादुकाम्।
नारदादीन् पूर्वसिद्धान् यजेदन्याँश्च वैष्णवान् ॥
दक्षिणे चार्चयेद्दुर्गां गणेशं च सरस्वतीम्।
तत्र प्राग्लिखितन्यासस्यानुसारेण पूजयेत् ॥
मध्ये आधारशक्त्यादीन् धर्मादीँश्च विदिक्ष्वथ।
अधर्मादीँश्चतुर्दिक्ष्वनन्तादीन्मध्यतः पुनः ॥
शक्तीर्नवाष्टपत्रेषु कर्णिकायां च पूजयेत्।
तथा तदुपरिष्ठाच्च पीठमन्त्रं यथोदितम् ॥
तत्पीठे मूलमन्त्रेण श्रीमूर्तिं स्थापयेदथ।
स्त्रीशिलापद्ममध्येतु प्रणवन्यासमाचरेत् ॥
कर्णिकायां स्वराण्येव व्यञ्जनानि दळेषु च।
विमलादीनितेष्वेव न्यासं कुर्याद् यथाविधि ॥
ततश्च पिण्डिकां गन्धैःपुष्पैरभ्यर्चयेत्क्रमात्।

ॐ भूर्भुवःस्वः ॐ, ॐ ॐ ॐ इति ब्रह्मशिलोपरि पीठं प्रतिष्ठाप्य, दृढीकृत्वा, पीठं स्पृष्ट्वा ध्रुवाद्यौरिति मन्त्रं पठेत्। ॐ प्रतिमाधारभूताय महापीठाय नमः इति जलगन्धपुष्पाक्षतैः पीठं अभ्यर्च्य, पीठमन्त्रन्यासं कुर्यात्।

**विष्णौ पीठमन्त्रन्यासः** - पीठाधोभागे आग्नेयादिविदिक्षु क्रमेण ॐ गरुडाय नमः। वेदव्यासाय। दुर्गायै। सरस्वत्यै नमः, पीठोर्ध्वभागे आग्नेयादिविदिक्षु क्रमेण - ॐ धर्माय नमः। ज्ञानाय। वैराग्याय। ऐश्वर्याय नमः, पूर्वादिपीठ गात्रेषु - ॐ अधर्माय नमः। अज्ञानाय। अवैराग्याय। अनैश्वर्याय नमः। पीठपद्मे - ॐ पं पद्माय नमः। कर्णिकायां पूर्वे- हं अर्कमण्डलाय। नैरऋत्ये - सं सोममण्डलाय। वायव्ये - रं वह्निमण्डलाय। ईशान्ये - सं सत्वाभिमानिन्यै श्रियै। आग्नेय्यां - रं रजोऽभिमानिन्यै भूम्यै।

पश्चिमे-तं तमोऽभिमानिन्यै दुर्गायै । पद्मे पूर्वे - अं आत्मने । दक्षिणे - उं अन्तरात्मने । पश्चिमे - मं परमात्मने । उत्तरे - श्रीं ज्ञानात्मने नमः ।

कर्णिकायां प्रणवं न्यस्त्वा, पूर्वाद्यष्टदलाग्रेषु क्रमेण- ॐ अकारात्मने विश्वाय नमः ॐ । उकारात्मने तेजसाय । मकारात्मने प्राज्ञाय । नादात्मने तुरीयाय । बिन्द्वात्मने आत्मने । कलात्मने अन्तरात्मने । शान्तात्मने परमात्मने । ॐ अतिशान्तात्मने ज्ञानात्मने नमः ॐ इत्यष्टमन्त्रान् न्यसेत् । पुनः पूर्वदले- ॐ अं अजाय नमः ॐ इत्यादि ॐ अः अर्धगर्भाय नमः ॐ इत्यन्तं, आग्नेयदले- ॐ कं कपिलाय नमः ॐ इत्यादि ॐ ङं ङसाराय नमः ॐ इत्यन्तं, याम्यदले- ॐ चं चार्वङ्गाय नमः ॐ इत्यादि ॐ ञं ञमाय नमः ॐ इत्यन्तं, नैर्ऋत्यदले- ॐ टं टंकिने नमः ॐ इत्यादि ॐ णं णात्मने नमः ॐ इत्यन्तं, वारुणदले- ॐ तं ताराय नमः ॐ इत्यादि ॐ नं नम्याय नमः ॐ इत्यन्तं , वायव्यदले- ॐ पं पराय नमः ॐ इत्यादि ॐ मं मनवे नमः ॐ इत्यन्तं, सौम्यदले- ॐ यं यज्ञाय नमः ॐ इत्यादि ॐ वं वराय नमः ॐ इत्यन्तं, ऐशदले - ॐ शं शान्तसंविदे नमः ॐ इत्यादि ॐ ळं ळाळुकाय नमः ॐ इत्यन्तं च न्यसेत् । क्रमेण पूर्वाद्यष्टदलेषु कर्णिकायां च विमलाऽदि नवशक्तीः आवाह्य, अभ्यर्च्य, पुनः पद्ममध्ये ॐ योगपीठस्वरूपाय अनन्ताय नमः इत्यनन्तं आवाह्य सम्पूज्य, भद्रदीपद्वयेन नीराज्य, पीठं वस्त्रेणाच्छाद्य, कूर्चपुष्पाक्षतानि विन्यस्य, तालत्रयादिना रक्षेत् ।

अन्येषु - पीठोर्ध्वभागे आग्नेयादिविदिक्षु क्रमेण - ॐ धर्माय नमः । ज्ञानाय । वैराग्याय । ऐश्वर्याय नमः, पूर्वादिपीठ गात्रेषु - ॐ अधर्माय नमः । अज्ञानाय । अवैराग्याय । अनैश्वर्याय नमः, पीठपद्मे- ॐ पं पद्माय नमः । कर्णिकायां पूर्वे - ॐ हं अर्कमण्डलाय नमः । नैर्ऋत्ये - सं सोममण्डलाय । वायव्ये - रं वह्निमण्डलाय । कर्णिकायां प्रणवं न्यस्य, पूर्वाद्यष्टदलाग्रेषु क्रमेण- ॐ अकाराय नमः ॐ । उकाराय । मकाराय । नादाय । बिन्दवे । कलाय ।

शान्ताय । ॐ अतिशान्ताय नमः ॐ इत्यष्टमन्त्रान् न्यसेत् । पुनः पूर्वदले - ॐ अं ॐ इत्यादि ॐ अः ॐ इत्यन्तं, आग्नेयदले - ॐ कं ॐ इत्यादि ॐ ङं ॐ इत्यन्तं, याम्यदले - ॐ चं ॐ इत्यादि ॐ ञं ॐ इत्यन्तं, नैर्ऋत्यदले- ॐ टं ॐ इत्यादि ॐ णं ॐ इत्यन्तं, वारुणदले - ॐ तं ॐ इत्यादि ॐ नं ॐ इत्यन्तं, वायव्यदले - ॐ पं ॐ इत्यादि ॐ मं ॐ इत्यन्तं, सौम्यदले- ॐ यं ॐ इत्यादि ॐ वं ॐ इत्यन्तं, ऐशदले - ॐ शं ॐ इत्यादि ॐ ळं ॐ इत्यन्तं च न्यसेत् । क्रमेण पूर्वाद्यष्टदलेषु कर्णिकायां च तत्तद्देवता नवशक्तीः आवाह्य, अभ्यर्च्य, भद्रदीपद्वयेन नीराज्य, पीठं वस्त्रेणाच्छाद्य, कूर्चपुष्पाक्षतानि विन्यस्य, तालत्रयादिना रक्षेत् ।

## ॥ विष्णौ मण्डपार्चनविधिः ॥

प्रासादशुद्ध्युक्तक्रमेण शोधितमण्डपे तत्तदङ्गाभिमानिदेवताः अर्चयेत् । सोपानदेवता - ॐ प्रकृत्यै नमः, मण्डपभूमौ - ॐ वसुधायै नमः, वक्त्रे - ॐ क्रियायै नमः , कन्दे - ॐ मोहिन्यै नमः, कुमुदे - ॐ इष्टशक्त्यै नमः, पट्टिकायाम् - ॐ क्षमाशक्त्यै नमः, स्तम्भपादशिलायाम् - ॐ ब्राह्म्यै नमः, सन्धिषु - ॐ वैष्णव्यै नमः, उमोते - ॐ कमलायै नमः, उत्तरे - ॐ शान्त्यै नमः, चतुर्षु मण्डपद्वारेषु - ॐ प्राच्यै नमः । प्रवाच्यै । प्रतीच्यै । उदीच्यै । दक्षिणशाखायां - ॐ शक्त्यै नमः, उत्तरशाखायां - ॐ वाग्देव्यै नमः, उपरि- ॐ श्रियै नमः । मण्डपाभिमानिदेवताभ्यो नमः इति षोडशोपचारैः सम्पूज्य, सुसंस्कृतानले प्रणवमूलमन्त्रैः, मण्डपाभिमानिदेवतामन्त्रैश्च आज्यं हुत्वा, तत् सम्पाताज्यं मण्डपाङ्गेषु संस्पृशेत् ।

# ॥ प्रतिष्ठा ॥

**पूर्वाङ्गम् -** अथ आचार्यः मण्डपमागत्य, देवतां सम्प्रार्थ्य, बिम्बं 'उत्तिष्ठ ब्रह्मणस्पते' इति मन्त्रेण शय्याधिवासात् उत्थाप्य, भद्रपीठे संस्थाप्य, बिम्बे 'देवतां' आवाह्य, मुद्राः सन्दर्श्य, मूलमन्त्रेण त्रिवारं व्याप्य, मूलमन्त्रस्य ऋष्यादिन्यासं, अङ्गन्यासं, मन्त्राक्षरन्यासं च विधाय, ध्यात्वा, मूलमन्त्रं अष्टोत्तरशतवारं सञ्जपेत् । गोलकचिन्तनं विधाय, मूलमन्त्रेण पाद्याद्युपचारैः पूजयेत् । स्नानकाले पूर्वाद्यष्टदिक्षु स्थितैः विद्येशकलशैः अभिषिञ्चेत् । वस्त्राभरणगन्धपुष्पमालादिभिः अलङ्कृत्य, नेवेद्यकाले पायसादिकं निवेद्य, नीराज्य, कृच्छ्राचरणं कुर्यात् ।

मम सर्वपापपरिहारद्वार 'देवता' प्रतिष्ठाकर्मकर्तुं अधिकारसिद्ध्यर्थं कृच्छ्राचरणं करिष्ये इति सङ्कल्प्य, "अशेषे हे परिषत् 'देवता' पादमूले मया समर्पितां सौवर्णीयं अल्पीयसीमपि परिषद्दक्षिणां प्रजापत्यकृच्छ्र प्रत्याम्नायभूतां यथोक्त दक्षिणामिव स्वीकृत्य, ममसर्वपाप परिहारद्वारा 'देवता' प्रतिष्ठा कर्माङ्ग योग्यतासिद्धिमनुगृहाण" इति देवता पुरतः दक्षिणां विन्यस्य प्रार्थयेत् । ब्राह्मणैः प्रोक्तं तथास्तु इति प्रतिवाचनं स्वीकुर्यात् । मूलमन्त्रं उक्त्वा 'प्रतिष्ठार्थं अनुज्ञां देहि' इति पादमूले पुष्पाञ्जलिं समर्प्य नमस्कृत्वा, प्रणवमूलमन्त्रैः अग्निस्थं मण्डलस्थं च चैतन्यं बिम्बे उद्वास्य, कुम्भेशकर्करी निद्राप्रतिष्ठाकलशेषु स्थिताः देवताः पुष्पाञ्जलिं समर्प्य, नीराज्य, मूर्तिपैः तान् कलशान् सन्धार्य, अष्टमङ्गलद्रव्याणि एकस्मिन् पात्रे निधाय, एकेनद्विजवरेण धारयित्वा, द्वारतोरणादिषु स्थितदेवताः उद्वासयेत् । बिम्बे गायत्रीमन्त्रेण प्रसन्नार्घ्यं दत्त्वा, ॐ भूर्भुवःस्वः ॐ इति बिम्बं उत्थाप्य, ब्राह्मणैः सन्धार्य, मङ्गलसूक्तानि पठन् वाद्यादिघोषैः सह तस्मिन् मण्डपात् निर्गत्य, प्रदक्षिणागतिर्भूत्वा प्रतिमां गर्भगृहे नयेत् ।

गमनक्रमः - अग्रतो नीराजनं, तत्समीपे अष्टमङ्गलधारकः, ततः कर्करीधाराप्रसरः, अर्घ्यं वहन् बिम्बं स्पृशन् देशिकः, ततो बिम्बः, तस्य पृष्ठतो कुम्भेशप्रतिष्ठा निद्राकलशानि, ततो यजमानः इत्येवरीत्या मण्डपात् निर्गत्य, द्वारि उपचारमन्त्रेण अर्घ्यं दत्त्वा, दक्षिणपादपुरस्सर अन्तर्गत्वा, बिम्बं पीठस्य पृष्ठभागे भद्रासने निधाय, कर्करीकलशजलेन त्रिः परिषिञ्चेत् ।

अथ गुरुः सङ्कल्प्य, पीठे आच्छादितवस्त्रं त्यक्त्वा, कूर्चं विसृज्य, पूर्वाद्यष्टदलेषु कर्णिकायां च तत्तत्देवता नवशक्तीः अभ्यर्च्य, पुनः विष्णौ पद्ममध्ये योगपीठस्वरूपिणं अनन्तं सम्पूज्य नीराज्य, बिम्बं स्पृष्ट्वा, मूलमन्त्रं जपेत् । यजमानः सङ्कल्प्य, फलताम्बूलनवग्रहधान्यदानैश्च विप्रान् तोषयित्वा, नमस्कुर्यात् ।

**प्रतिष्ठापनम्** - प्रणवमूलमन्त्राणि त्रिवारं जपित्वा, ज्योतिर्विद्यादिष्टे मुहूर्ते प्रतिष्ठास्थानस्य उपरिभागे त्रिः परिभ्रमणं कृत्वा, पद्मस्यकर्णिकायां गतगर्ते बिम्बशङ्कुं निवेशयेत् । ऊर्ध्वलम्बितसूत्रेण बिम्बस्थितेः समतां पशयेत् । बिम्बपीठयोर्मध्ये, पीठब्रह्मशिलायोर्मध्ये, ब्रह्मशिलाभूमियोर्मध्ये अपि च अष्टबन्धं प्रपूर्य, प्रणवमूलमन्त्रैः निद्राकलशेन बिम्बमभिषिच्य, बिम्बं पीठं च स्पृष्ट्वा आत्वाहार्षसूक्तं पठेत् । आत्वाहार्षसूक्तम् - अस्य आत्वाहार्षमिति सूक्तस्य ध्रुव आङ्गीरस ऋषिः । अनुष्टुप् छन्दः । राजराजेश्वरो नारायणो(राज्ञः स्तुतिः) देवता । देवताप्रतिष्ठापने विनियोगः

ॐ आ त्वाहार्षमन्तरेधि ध्रुवस्तिष्ठाविचाचलिः ।

विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशत् ॥

इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलिः ।

इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय ॥

इममिन्द्रो अदीधरद्ध्रुवं ध्रुवेण हविषा ।

तस्मै सोमो अधि ब्रवत्तस्मा उ ब्रह्मणस्पतिः ॥

ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे ।

ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामयम् ॥

ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः ।

ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ॥

ध्रुवं ध्रुवेण हविषाभि सोमं मृशामसि ।

अथो त इन्द्रः केवलीर्विशो बलिहृतस्करत् ॥

मूलमन्त्रं उक्त्वा, सुस्थिरो भव इति पुष्पाञ्जलिं समर्प्य, मूलमन्त्रेण कुम्भेशकलशं अभिषिञ्चेत् । पीठपूजां विधाय, उपचारमन्त्रं उक्त्वा, बिम्बे 'देवतां' आवाह्य, मुद्राः सन्दर्श्य, मूलमन्त्रेण त्रिवारं व्याप्य, मूलमन्त्रस्य ऋष्यादिन्यासं, अङ्गन्यासं, मन्त्राक्षरन्यासं च विधाय, सन्ध्यात्वा, मूलमन्त्रं अष्टोत्तरशतवारं सञ्जपेत् । गोलकचिन्तनं प्राणप्रतिष्ठापनं, प्राणादिन्यासादि सप्तव्याहृतिन्यासान्तं विधाय, तदनन्तरं तत्तत् न्यासस्थानेषु शक्त्यादि षट्त्रिंशत् तत्वानि न्यसेत् । ॐ पराय शक्त्यात्मने नमः, शक्तितत्वं न्यसामि इत्यादि क्रमेण बिम्बे तत्वावाहनं विधाय, तत्वन्यासं, मातृकान्यासं, केशवादिमूर्तिन्यासं च कुर्यात् । प्रणवमूलमन्त्रैः (विष्णौ - अष्टमहामन्त्रैः), तत्वमातृकामन्त्रैश्च प्रतिष्ठाकलशमभिषिच्य, पुनः प्राणादिन्यासादि केशवादिमूर्तिन्यासान्तं न्यासान् विधाय, वस्त्रविभूषणोपवीताभरणासन गन्धपुष्पाणि मूलमन्त्रेण समर्प्य, आवरणपूजां विधाय, धूपदीपौ सन्दर्श्य, पायसादिकं निवेद्य, नीराज्य, गुरुः अञ्जलौ पुष्पं गृहित्वा, ब्राह्मणैः सह प्रार्थयेत् ।

विष्णौ स्तोत्रावाहनम् -

आवाहयाम्यमरवृन्दनताङ्घ्रियुग्मम् ।

लक्ष्मीपतिं भुवनकारणमप्रमेयम् ॥
आद्यं सनातनतनुं प्रणवासनस्थम् ।
पूर्णेन्दुभास्करहुताशसहस्रभासम् ॥
ध्येयं परं सकलतत्त्वविदां च वेद्यम् ।
वराहकापिलनृकेसरिसौम्यमूर्तिम् ॥
श्रीवत्सकौस्तुभमहामणिभूषिताङ्गम् ।
कौमोदकीकमलशङ्खरथाङ्गहस्तम् ॥
सर्वत्रगोऽसि भगवन् किल यद्यपि त्वां ।
आवाहयामि हि यथा व्यजनेन वायुम् ॥
गूढो यथैव दहनो मथनादुपैति ।
ह्यावाहितोऽपि हि तथा त्वमुपैषि चार्चम् ॥
मालाधराच्युत विभो परमार्थमूर्ते ।
सर्वज्ञनाथ परमेश्वर सर्वशक्ते ॥
आगच्छ मे कुरु दयां प्रतिमां भजस्व ।
पूजां गृहाण मदनुग्रहकाम्ययाऽद्य ॥
लोकानुग्रहहेत्वर्थं स्थिरो भव सुखाय नः ।
सानिध्यं कुरु देवेश प्रत्यहं परिवर्धय ॥
मा भूत् प्रजाविरोधोऽस्मिन् यजमानः समृध्यतु ।
सभूपालं तथा राष्ट्रं सर्वोपद्रववर्जितम् ॥
क्षेमेण वृद्धिमतुलां सुखमक्षय्यमश्नुताम् ।
पूजां गृहाण सततं मामुद्धर नमोऽस्तुते ॥
सर्वमन्त्रादिसंयुक्तो लोकानुग्रहकाम्यया ।
अत्र बिम्बे सुराध्यक्ष सान्निध्यं कुरु सर्वदा ॥

लक्ष्म्यां स्तोत्रावाहनम् -

तामाह्वयामि सुभगां लक्ष्मीं त्रैलोक्यपूजिताम् ।
एह्येहि देवि पद्माक्षि पद्माकरकृतालये ॥
त्वां पद्मिनी पद्मवक्त्रा पद्माक्षी पद्मविष्टरा ।

पद्मद्वयकरा पद्मकोशाभस्तनशोभना ॥
पद्महस्ता पद्मपादा पद्मनाभमनःप्रिया ।
पद्मोद्भवस्य जननी पद्मा च वरवर्णिनी ॥
सुवर्णमण्डपे रत्नचित्रसिंहासनोत्तमे ।
नमामि हरिणा साकमिन्दिरां कृतमन्दिराम् ॥
वाक् श्रीदुर्गादिरूपेण विश्वमावृत्य तिष्ठती ।
आवाहयामि त्वां शक्तिं बिम्बे सन्निहिता भव ॥
भूतानामीश्वरी नित्यं सत्या सर्वगता शिवा ।
विष्णुपत्नी महादेवी क्षीरोदतनया रमा ॥
चतुर्भुजां सुवर्णाभां सपद्मोर्ध्वकरद्वयाम् ।
दक्षिणाभयहस्तां तां वामहस्तवरप्रदाम् ॥
शची सरस्वती गौरी शान्तिः स्वाहा सदा रतिः ।
नारायणी वरारोहा विष्णोर्नित्यानपायिनी ॥
सान्निध्यं कुरु देवेशि सर्वसम्पत्प्रदायनीम् ।
भक्तस्य मम पूजां च गृहित्वा परमेश्वरीम् ॥
लोकानुग्रहहेत्वर्थं स्थिरो भव सुखाय नः ।
सानिध्यं कुरु देवेशि प्रत्यहं परिवर्धय ॥
मा भूत् प्रजाविरोधोऽस्मिन् यजमानः समृध्यतु ।
सभूपालं तथा राष्ट्रं सर्वोपद्रववर्जितम् ॥
क्षेमेण वृद्धिमतुलां सुखमक्षय्यमश्नुताम् ।
पूजां गृहाण सततं शुभङ्करि नमोऽस्तुते ॥

दुर्गायां स्तोत्रावाहनम् -

वाक् श्रीदुर्गादिरूपेण विश्वमावृत्य तिष्ठती ।
आवाहयामि त्वां शक्तिं बिम्बे सन्निहिता भव ॥
ज्ञानानन्दमयी देवी स्वर्णमाल्यादिशोभिता ।
चतुर्भुजा दिव्यरूपा सर्वारिष्टविनाशिनी ॥
महालक्ष्मी महामाया महाविद्या स्वरूपिणी ।

दुर्गा भगवती देवि नारायणि नमोऽस्तुते ॥
सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।
महाकालि नमस्तेऽस्तु भक्तानामीप्सितार्थदे ॥
चक्रं त्रिशूलं शङ्खं च दधतीं तर्जनीं तथा ।
तेजोमयीं महालक्ष्मीं वाञ्छितार्थप्रदायिनीम् ॥
प्रणतानां प्रसीद त्वं देवि विश्वार्तिहारिणि ।
त्रैलोक्यवासिनामीड्ये लोकानां वरदा भव ॥
सान्निध्यं कुरु देवेशि सर्वसम्पत्प्रदायनि ।
भक्तस्य मम पूजां च गृहित्वा परमेश्वरि ॥
लोकानुग्रहहेत्वर्थं स्थिरो भव सुखाय नः ।
सानिध्यं कुरु देवेशि प्रत्यहं परिवर्धय ॥
मा भूत् प्रजाविरोधोऽस्मिन् यजमानः समृध्यतु ।
सभूपालं तथा राष्ट्रं सर्वोपद्रववर्जितम् ॥
क्षेमेण वृद्धिमतुलां सुखमक्षय्यमश्नुताम् ।
पूजां गृहाण सततं शुभङ्करि नमोऽस्तुते ॥

अजे स्तोत्रावाहनम् -

आवाहयामि वाणीशं चतुरास्यं चतुर्भुजम् ।
विष्णुसुतं लोकगुरुं रक्ताङ्गं हंसवाहनम् ॥
वागीशं सत्यलोकेशं भक्ताभीष्टफलप्रदम् ।
ज़ानप्रदं स्वर्णगर्भं पद्मद्वयविधारिणम् ॥
देवदेव जगत्पाल भक्ताभीष्टफलप्रद ।
भक्तस्य मम पूजां च गृहाण परमेष्ठिने ॥
सर्वमन्त्रादिसंयुक्तो लोकानुग्रहकाम्यया ।
अत्र बिम्बे वेदगर्भ सान्निध्यं कुरु सर्वदा ॥
लोकानुग्रहहेत्वर्थं स्थिरो भव सुखाय नः ।
सानिध्यं कुरु देवेश प्रत्यहं परिवर्धय ॥
मा भूत् प्रजाविरोधोऽस्मिन् यजमानः समृध्यतु ।

सभूपालं तथा राष्ट्रं सर्वोपद्रववर्जितम् ॥
क्षेमेण वृद्धिमतुलां सुखमक्षय्यमश्नुताम् ।
पूजां गृहाण सततं मामुद्धर नमोऽस्तुते ॥

सरस्वत्यां स्तोत्रावाहनम् -

आवाहयामि तां वाणीं ब्रह्माणीं हंसवाहिनीम् ।
ज्ञानप्रदां महादेवीं नानालङ्कारभूषिताम् ॥
वाग्वाणी भारती ब्राह्मी भाषा गीः शारदा स्वरा ।
सरस्वती कामधेनुर्वेदगर्भाऽक्षरात्मिका ॥
अजप्रियां विशालाक्षीं शारदां सर्वतोमुखीम् ।
ज्ञानमुद्रां पुस्तकं च धारिणीं विश्ववन्दिताम् ॥
सान्निध्यं कुरु विद्येशि सर्वसुज्ञानदायिनीम् ।
भक्तस्य मम पूजां च तां गृहाण विद्येश्वरीम् ॥
लोकानुग्रहहेत्वर्थं स्थिरा भव सुखाय नः ।
सानिध्यं कुरु विद्येशि प्रत्यहं परिवर्धय ॥
मा भूत् प्रजाविरोधोऽस्मिन् यजमानः समृध्यतु ।
सभूपालं तथा राष्ट्रं सर्वोपद्रववर्जितम् ॥
क्षेमेण वृद्धिमतुलां सुखमक्षय्यमश्नुताम् ।
पूजां गृहाण सततं शुभङ्करि नमोऽस्तुते ॥

हनुमति स्तोत्रावाहनम् -

श्रीरामचरणाम्भोजयुगलस्थिरमानसम् ।
आवाहयामि वरदं हनुमन्तमभीष्टदम् ॥
सर्वलक्षणसम्पन्नं कल्याणगुणवारिधिम् ।
अञ्जनानन्दनं श्रीमान् पिङ्गाक्षं अमितविक्रमम् ॥
ज्ञानपूर्णं रामदूतं सुग्रीवाभीष्टदायकम् ।
महाबलयुतं वीरं दैत्यकुलविमर्दनम् ॥
अतुलितबलधामं हेमशैलाभदेहं
दनुजवनकृशानुं ज्ञानिनामग्रगण्यम् ।

सकलगुणनिधानं वानराणामधीशं
रघुपतिप्रियभक्तं वातजातं नमामि ॥
सर्वमन्त्रादिसंयुक्तो लोकानुग्रहकाम्यया ।
अत्र बिम्बे आञ्जनेय सान्निध्यं कुरु सर्वदा ॥
देवदेव जगत्पाल भक्ताभीष्टफलप्रद ।
भक्तस्य मम पूजां च त्वं गृहाण कपीश्वर ॥
लोकानुग्रहहेत्वर्थं स्थिरो भव सुखाय नः ।
सानिध्यं कुरु कपीश  प्रत्यहं परिवर्धय ॥
मा भूत् प्रजाविरोधोऽस्मिन् यजमानः समृध्यतु ।
सभूपालं तथा राष्ट्रं सर्वोपद्रववर्जितम् ॥
क्षेमेण वृद्धिमतुलां सुखमक्षय्यमश्नुताम् ।
पूजां गृहाण सततं महाबल नमोऽस्तुते ॥

शिवे स्तोत्रावाहनम्   -

यस्यसिंहारथेयुक्ता व्याघ्रभूतास्तदानुगाः ।
ऋषयो लोकपालश्च देवस्कन्दस्तथा वृषः ॥
प्रिया गणो मातरश्च सोमो विष्णुः पितामहः ।
नागा यक्षाः सगन्धर्वा ये च दिव्यानभश्चराः ॥
तमहं त्र्यक्षमीशानां देवं स्थाणुमुमापतिम् ।
आवाहयामि सगणं सपत्नीकं वृषध्वजम् ॥
आगच्छागच्छ भगवं स्थिरोभव शिवो भव ।
सर्वमन्त्रादिसंयुक्तो लोकानुग्रहकाम्यया ।
अत्र (लिङ्गे) बिम्बे महादेव सान्निध्यं कुरु सर्वदा ॥
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठतिमेदिनी ।
तावत्त्वयात्र भूतेश स्थातव्यं सर्वदा विभो ॥
लोकानुग्रहहेत्वर्थं स्थिरो भव सुखाय नः ॥
सानिध्यं कुरु देवेश प्रत्यहं परिवर्धय ।
मा भूत् प्रजाविरोधोऽस्मिन् यजमानः समृध्यतु  ।

सभूपालं तथा राष्ट्रं सर्वोपद्रववर्जितम् ॥
क्षेमेण वृद्धिमतुलां सुखमक्षय्यमश्नुताम् ।
पूजां गृहाण सततं सदाशिव नमोऽस्तुते ॥

पार्वत्यां स्तोत्रावाहनम् -

आवाहयामि तां देवीं पार्वतीं वृषवाहिनीम् ।
गणेशस्कन्दजननीं रुद्राणीं लोकपालिनीम् ॥
पीताम्बरधरां गौरीं वरदाभयधारिणीम् ।
सदाशिवप्रियां देवीं सर्वारिष्टविनाशिनीम् ॥
मनोन्मयीं शुभकरीं शर्वाणीं सुमनोहराम् ।
कल्याणीं पद्मनयनां सर्वालङ्कारभूषिताम् ॥
सान्निध्यं कुरु शर्वाणि सर्वाभीष्टप्रदायिनि ।
भक्तस्य मम पूजां च तां गृहाण भक्तवत्सले ॥
लोकानुग्रहहेत्वर्थं स्थिरा भव सुखाय नः ।
सानिध्यं कुरु रुद्राणि प्रत्यहं परिवर्धय ॥
मा भूत् प्रजाविरोधोऽस्मिन् यजमानः समृध्यतु ।
सभूपालं तथा राष्ट्रं सर्वोपद्रववर्जितम् ॥
क्षेमेण वृद्धिमतुलां सुखमक्षय्यमश्नुताम् ।
पूजां गृहाण सततं शुभङ्करि नमोऽस्तुते ॥

शेषे स्तोत्रावाहनम् -

आवाहयामि त्वं देवं उदयरविसप्रभम् ।
विष्णुतल्पं श्वेतवर्णं हलसौनन्दधारिणम् ॥
नमस्ते शेषदेवाय नमस्ते धरणीधर ।
विष्णुप्रिय नमस्तेऽस्तु नमः पन्नगाऽधीश्वर ॥
विषजिह्वं रक्तनेत्रं सहस्रफणसंयुतम् ।
सङ्कर्षणं वासुदेवं पाताळतळवासिनम् ॥
सर्पेश्वरं शर्वसखं पर्वपूज्यशुभाकृतिम् ।
सर्वैश्वर्यसमायुक्तं सर्वाभीष्टफलप्रदम् ॥

सर्वमन्त्रादिसंयुक्तो लोकानुग्रहकाम्यया ।
अत्र बिम्बे शेषदेव सान्निध्यं कुरु सर्वदा ॥
लोकानुग्रहहेत्वर्थं स्थिरो भव सुखाय नः ।
सानिध्यं कुरु नागेश प्रत्यहं परिवर्धय ॥
मा भूत् प्रजाविरोधोऽस्मिन् यजमानः समृध्यतु ।
सभूपालं तथा राष्ट्रं सर्वोपद्रववर्जितम् ॥
क्षेमेण वृद्धिमतुलां सुखमक्षय्यमश्नुताम् ।
पूजां गृहाण सततं शेषदेव नमोऽस्तुते ॥

गरुडे स्तोत्रावाहनम् -

आवाहयामि तं देवं उदयरविसुप्रभम् ।
विष्णुवाहं नागभूषं सर्वालङ्कारभूषितम् ॥
पातालस्पर्शिपादाग्रं ब्रह्माण्डगतमौलिनम् ।
नीलोग्रनासिकावक्त्रं त्रयाक्षं चारुकुण्डलम् ॥
सर्वाभरणसंयुक्तं सर्वावयवसुन्दरम् ।
कपिलाक्षं गरुत्मन्तं नागाभरणभूषितम् ॥
महापक्षं महासत्त्वं मन्दस्मितमुखाम्बुजम् ।
वैनतेयं विषहरं सर्वभयनिवारकम् ॥
सर्वमन्त्रादिसंयुक्तो लोकानुग्रहकाम्यया ।
अत्र बिम्बे वैनतेय सान्निध्यं कुरु सर्वदा ॥
लोकानुग्रहहेत्वर्थं स्थिरो भव सुखाय नः ।
सानिध्यं कुरु पक्षीश प्रत्यहं परिवर्धय ॥
मा भूत् प्रजाविरोधोऽस्मिन् यजमानः समृध्यतु ।
सभूपालं तथा राष्ट्रं सर्वोपद्रववर्जितम् ॥
क्षेमेण वृद्धिमतुलां सुखमक्षय्यमश्नुताम् ।
पूजां गृहाण सततं खगेश्वर नमोऽस्तुते ॥

कामे स्तोत्रावाहनम् -

आवाहयामि मदनं उदयरविसुप्रभम् ।

पुष्फबाणमिक्षुचापं धारिणं लोकपूजितम् ॥
मनसिजं विष्णुपुत्रं कामदेवं रतिप्रियम् ।
सनत्कुमारं वरदं शुकवाहं शुभाकृतिम् ॥
मीनध्वजं अरुणागं वेदवेद्यं मनात्मकम् ।
करुणापूर्णं देवेशं लोकशोकविनाशकम् ॥
सान्निध्यं कुरु त्वं देव भक्तानुग्रहदायक ।
भक्तस्य मम पूजां च त्वं गृहाण रतिप्रिय ॥
सर्वमन्त्रादिसंयुक्तो लोकानुग्रहकाम्यया ।
अत्र बिम्बे कामदेव सान्निध्यं कुरु सर्वदा ॥
लोकानुग्रहहेत्वर्थं स्थिरो भव सुखाय नः ।
सानिध्यं कुरु मदन प्रत्यहं परिवर्धय ॥
मा भूत् प्रजाविरोधोऽस्मिन् यजमानः समृध्यतु ।
सभूपालं तथा राष्ट्रं सर्वोपद्रववर्जितम् ॥
क्षेमेण वृद्धिमतुलां सुखमक्षय्यमश्नुताम् ।
पूजां गृहाण सततं विष्णुपुत्र नमोऽस्तुते ॥

स्कन्दे स्तोत्रावाहनम् -

शीघ्रमायातु भद्रं ते सुकुमार सुपद्मज ।
मयूररथसंयुक्तश्च वारणानुचरो गुहः ॥
अन्नाद्यप्रियशीलस्तु शक्तितोमरवज्रधक् ।
कार्तिकेय सुरश्रेष्ठ असुरेन्द्रप्रमर्दन ॥
सर्वमन्त्रादिसंयुक्तो लोकानुग्रहकाम्यया ।
अत्र बिम्बे सुब्रह्मण्य सान्निध्यं कुरु सर्वदा ॥
लोकानुग्रहहेत्वर्थं स्थिरो भव सुखाय नः ।
सानिध्यं कुरु कुमार प्रत्यहं परिवर्धय ॥
मा भूत् प्रजाविरोधोऽस्मिन् यजमानः समृध्यतु ।
सभूपालं तथा राष्ट्रं सर्वोपद्रववर्जितम् ॥
क्षेमेण वृद्धिमतुलां सुखमक्षय्यमश्नुताम् ।

पूजां गृहाण सततं कार्तिकेय नमोऽस्तुते ॥

**सूर्ये स्तोत्रावाहनम् -**

आवाहयामि त्वं सूर्यं आदित्यं लोकपालकम् ।
सप्ताश्ववाहनं देवं काश्यपेयं महाद्युतिम् ॥
मार्ताण्डं भक्तपालञ्च सर्वरोगविनाशकम् ।
पद्मद्वयधरं वीरं दिवाकरं नमाम्यहम् ॥
सहस्रकिरणं सौम्यं रक्ताङ्गं दिव्यभूषणम् ।
भक्ताभीष्टप्रदं वन्दे त्रैलोक्यदीपकं विभुम् ॥
सर्वमन्त्रादिसंयुक्तो लोकानुग्रहकाम्यया ।
अत्र बिम्बे सूर्यदेव सान्निध्यं कुरु सर्वदा ॥
लोकानुग्रहहेत्वर्थं स्थिरो भव सुखाय नः ।
सानिध्यं कुरु आदित्य प्रत्यहं परिवर्धय ॥
मा भूत् प्रजाविरोधोऽस्मिन् यजमानः समृध्यतु ।
सभूपालं तथा राष्ट्रं सर्वोपद्रववर्जितम् ॥
क्षेमेण वृद्धिमतुलां सुखमक्षय्यमश्नुताम् ।
पूजां गृहाण सततं भक्तपाल नमोऽस्तुते ॥

**गणपतौ स्तोत्रावाहनम् -**

आवाहयामि गणपं पद्मस्थं गजवक्त्रकम् ।
रक्ताम्बरानुलेपादि रक्तमाल्यादिभूषितम् ॥
एकदन्तं महाकायं पाशाङ्कुशधरं विभुम् ।
लम्बोदरं विशालाक्षं वरदं विघ्ननायकम् ॥
चतुर्भुजं गणाधीशं दुष्टानां विघ्नकारिणम् ।
विघ्ननाशकं शिष्टानां भक्ताभीष्टफलप्रदम् ॥
सर्वमन्त्रादिसंयुक्तो लोकानुग्रहकाम्यया ।
अत्र बिम्बे त्वं गणेश सान्निध्यं कुरु सर्वदा ॥
लोकानुग्रहहेत्वर्थं स्थिरो भव सुखाय नः ।
सानिध्यं कुरु गणेश प्रत्यहं परिवर्धय ॥

मा भूत् प्रजाविरोधोऽस्मिन् यजमानः समृध्यतु।
सभूपालं तथा राष्ट्रं सर्वोपद्रववर्जितम् ॥
क्षेमेण वृद्धिमतुलां सुखमक्षय्यमश्नुताम्।
पूजां गृहाण सततं भक्तपाल नमोऽस्तुते ॥

कुबेरे स्तोत्रावाहनम् -

आवाहयामि कुबेरं धनदं यक्षपूजितम्।
लम्बोदरं रक्तवर्णं उदयभास्करप्रभम् ॥
वैश्रवणं महाकायं दण्डहस्तं महाबलम्।
कारुण्यपूर्णं यक्षेशं लोकनन्दनकारणम् ॥
दारिद्र्यनाशकं देवं भक्ताभीष्टफलप्रदम्।
जम्भलादिसमायुक्तं यक्षराजं दयानिधिम् ॥
सर्वमन्त्रादिसंयुक्तो लोकानुग्रहकाम्यया।
अत्र बिम्बे यक्षराज सान्निध्यं कुरु सर्वदा ॥
सान्निध्यं कुरु कुबेर प्रत्यहं परिवर्धय।
मा भूत् प्रजाविरोधोऽस्मिन् यजमानः समृध्यतु ॥
सभूपालं तथा राष्ट्रं सर्वोपद्रववर्जितम्।
क्षेमेण वृद्धिमतुलां सुखमक्षय्यमश्नुताम् ॥
पूजां गृहाण सततं भक्तपाल नमोऽस्तुते।

इति संप्रार्थ्य, अञ्जलिस्थकुसुमान् देवता पादमूले समर्प्य, सम्पूज्य, शान्तिहोमादिकं कुर्यात्।

## ॥ शान्तिप्रायश्चित्तहोमः ॥

भूराद्यैः जुहुयादाज्यं दधिं पयश्च माक्षिकम्।
दूर्वाभिर्मधुयुक्ताभिः जुहुयान्मूलविद्यया ॥
पुनस्समिदाज्यतिलान् शालीन् व्रीहीन् क्रमेण च।
अष्टोत्तरसहस्रं वा प्रत्येकं शतसङ्ख्यया ॥
गायत्र्या होमयेदाज्यं लक्षं वाऽपि सहस्रकम्।

देवतापुरतः चतुरश्रकुण्डं निर्माय, 'देवता' प्रतिष्ठाकाले सम्भावित समस्तज्ञाताज्ञातदोषपरिहारार्थं बिम्बे सम्पूर्णसान्निध्यसिद्ध्यर्थं च शान्तिहोम पुरस्सर प्रायश्चित्तहोमं करिष्ये इति सङ्कल्प्य, कुण्डे अग्निं प्रतिष्ठाप्य, तद्दक्षिणे कलशद्वयं संस्थाप्य, सम्पूज्य, अन्वाधानम् - 'देवतां' मूलोपचारगायत्री वेदोक्तमन्त्रैः अष्टाष्टवारं आज्येन, पीठावरणदेवतामन्त्रैः सकृद् सकृदाज्येन, समस्तव्याहृत्या पुर्णाहुत्या आज्येन, पुनः व्यस्तसमस्तव्याहतिभिः क्रमेण आज्य-दधि-पयः-मधुभिः प्रत्येकं अष्टोत्तरशतवारं (अष्टाविंशतिवारं वा), 'देवतां' मूलमन्त्रेण मधुसिक्तदूर्वाभिः अष्टोत्तरशतवारं, पुनः मूलमन्त्रेण पलाश समित्-आज्य-तिल-शालि-व्रीहि एभिः पञ्चद्रव्यैः प्रत्येकं अष्टोत्तरसहस्रवारं (शतवारं वा), पुनः गायत्रीमन्त्रेण लक्षवारं (अयुतं, सहस्रं अष्टोत्तरशतवारं वा)आज्येन...इत्यादि ।

होमं परिसमाप्य, गर्भगृहं गत्वा, सङ्कल्प्य, पीठपूजापूर्वकं देवतां आवाह्य, गोलकचिन्तनं, न्यासादिकं च विधाय, मूलमन्त्रेण पाद्याद्युपचारैः पूजयेत् । स्नानकाले सम्पाताज्यं बिम्बे समर्प्य, कलशेनाभिषिच्य, नैवेद्यकाले पायसाऽदिकं निवेद्य, पूजयेत् ।

## ॥ प्रासादस्नपनम् ॥

बृहत्कुम्भकलशं विधिवत् संस्थाप्य, सम्पूज्य, परितः पूर्वाद्यष्टदिक्षु पीठे क्रमेण विधिवत् अष्टकलशान् संस्थाप्य, तेषु विद्येशमूर्तीः आवाह्य, मूलमत्रेण पूजयेत् । मूलमन्त्रेण सहस्रवारं वेदादिभिश्च अभिमन्त्रणं कत्वा, कलशस्य पूर्वदिग्भागे कुम्भेशकर्करीकलशानि संस्थाप्य, पूजयेत् ।

दानदक्षिणादिभिः ब्राह्मणान् तोषयित्वा, कलशस्थदेवताः सम्पूज्य, भद्रदीपद्वयेन नीराज्य, विद्येशकुम्भेशकर्करीबृहत्कुम्भकलशानि च द्विजैः सन्धार्य, वेदवाद्यादिघोषैः सह प्रासाद प्रदक्षिणापूर्वक प्रासादाग्रे नयेत् । अग्रतो

नीराञ्जनं, ततः कर्करीधाराप्रसरः, अर्घ्यं वहन् देशिकः, पृष्ठतो कुम्भेशः, विद्येशकलशानि, ततो बृहत्कुम्भकलशः, ततो यजमानः इत्येवरीत्या निर्गच्छेत् । प्रासादे देवतां आवाह्य, प्रासादाधिवासहोमस्य सम्पाताज्यं, हुतभस्मं च समर्प्य, कुम्भेशकलशेन अभिषिञ्चेत् । गोलकचिन्तनं न्यासादिकं च विधाय, विष्णौ पुरुषसूक्तेन अन्येषु गायत्री मन्त्रेण च षोडशोपचारैः पूजयेत् । स्नानकाले प्रासादं विद्येशकलशजलैः बृहत्कुम्भकलशजलेन च अभिषिच्य, नैवेद्यकाले पायसादिकं निवेद्य, नीराज्य, प्रासादस्य परितः इन्द्रादिलोक-पालेभ्यः भूतेभ्यः बलिं दत्त्वा, प्रासादाभिमुखतया स्थित्वा, प्रासादरूपी देवतां ध्यायेत् । ततः -

विष्णौ - सहस्रशीर्षं पुरुषं सहस्राक्षं सहस्रपम् ।
सहस्रदैवतोपेतं सहस्रमुकुटान्वितम् ॥
सहस्रादित्यसङ्काशं सहस्रेन्दुनिभाननम् ।
सहस्रवदनैर्युक्तं सर्वदिङ्नासिकान्वितम् ॥
चक्रशङ्खगदापाणिं सर्वप्रहरणान्वितम् ।
प्रासादरूपिणं देवं सुराऽसुर नमस्कृतम् ॥
शुकनासाश्रिता नासा बाहू तद्रथकौ स्मृतौ ।
शिरस्त्वण्डं निगदितं कलशं मूर्द्धजं स्मृतम् ॥
कण्ठं कण्ठमिति ज्ञेयं स्कन्धं वेदी निगद्येते ।
पायूपस्थे प्रणाले तु त्वक् सुधा परिकीर्त्तिता ॥
मुखं द्वारं भवेदस्य प्रतिमा जीव उच्यते ।
तच्छक्तिं पिण्डिकां विद्धि प्रकृतिं च तदाकृतिम् ॥
निश्चलत्वञ्च गर्भोस्या अधिष्ठाता तु केशवः ।
एवमेष हरिः साक्षात्प्रासादत्वेन संस्थितः ॥
जङ्घा त्वस्य शिवो ज्ञेयः स्कन्धे धाता व्यवस्थितः ।
ऊर्द्ध्वभागे स्थितो विष्णुरेवं तस्य स्थितस्य हि ॥
स्थूलरूपेण त्वं देव विश्वमावृत्यतिष्ठसि ।

कृपयाऽत्र जगत्पाल सान्निध्यं कुरु सर्वदा ॥

अन्येषु - पादौ पादशिला प्रोक्ता जङ्घा पादोर्ध्वमुच्यते ॥
गर्भश्चैवोदरं ज्ञेयं कटिश्च कटिमेखला ।
स्तम्भाश्च बाहवो बोध्या घण्टा जिह्वा प्रकीर्तिता ॥
दीपः प्राणोऽस्य विज्ञेयो ह्यपानो जलनिर्गमः ।
ब्रह्मस्थानं नाभिरस्य हृत्पद्मं पिण्डिका मता ॥
प्रतिमा पुरुषः प्रोक्तः पादस्त्वहंकरस्तथा ।
ज्योतिश्चक्षुस्तदूर्ध्वं च प्रकृतिस्तस्य कीर्तिता ॥
प्रतिमाऽऽत्मा नलकुम्भादधोद्वारं तु शिश्नकम् ।
शुकनासा नासिकाऽस्य गवाक्षः कर्ण उच्यते ॥
कपोतपालिः स्कन्धोऽस्य ग्रीवा चामलसारकः ।
कलशस्तु शिरो ज्ञेयं मज्जाक्षिप्तरसं हितम् ॥
मेदं तु वसुधां विद्यात् प्रलेपो मांसम् उच्यते ।
अस्थीनि च शिलास्तस्य स्नायुः कीलादयः स्मृताः ॥
चक्षुषी शिखरास्तस्य ध्वजाः केशाः प्रकीर्तिताः ।
एवं नरस्वरूपं सन्ध्यायेत्प्रासादकं मखी ॥
पादौ पाद शिला जङ्घे गर्भगेहं तथोदरम्।
स्तम्भान् बाहून् कटिं चापि तथैव कटिमेखलाम्।
देव त्वं स्थूलरूपेण विश्वमावृत्यतिष्ठसि ।
अत्र गेहे जगत्पाल सान्निध्यं कुरु सर्वदा ॥

देवीषु - जिह्वां वर्णां तथा नेत्रं प्रतीपद्वाश्च मेहनम् ।
अपानं जलनिर्याणं नासिकां नासिकां तथा ॥
गवाक्षमक्षि ग्रीवां च ग्रीवं स्कन्धं कपोलकौ ।
शिरश्च कलशं मांसं प्रलेपं स्पर्शनं सुधाम् ॥
अस्थीनि च शिलास्तस्थाः स्नायुं दारु केशः ध्वजान् ।
देवि त्वां स्थूलरूपेण विश्वमावृत्यतिष्ठसि ॥
अत्र गेहे जगत्पाले सान्निध्यं कुरु सर्वदा ।

इति ध्यात्वा, उत्तरपूजां विधाय, समापयेत् ।

## ॥ तत्वहोमः॥

देवस्य अग्रभागे चतुरश्रकुण्डं निर्माय, स्थापितबिम्बे सम्पूर्णस्थिरसानिध्य सिद्ध्यर्थं तत्वहोमं करिष्ये इति सङ्कल्प्य, कुण्डे अग्निं प्रतिष्ठाप्य, तत् वामे कलशमेकं संस्थाप्य, विधिवत् सम्पूज्य, अन्वाधानम् - 'देवतां' मूलमन्त्रेण अष्टोत्तरशतवारं आज्येन, (विष्णौ प्रणव - व्याहृति - अष्टाक्षर - विष्णुषडक्षर- द्वादशाक्षर - सवितागायत्रीमन्त्रैश्च अष्टाष्टवारं आज्येन इत्यधिकम्) पुनः अमुक सूक्तस्थमन्त्रैः (विष्णौ पुरुषसूक्त, अन्येषु वेदोक्तसूक्तन्यासे उक्त सूक्तानि) एकैकवारं, पीठदेवतामन्त्रैः अष्टाष्टवारमाज्येन (एकैकवारं वा), आवरणदेवता मन्त्रैः अष्टाष्टवारमाज्येन (एकैकवारं वा), 'देवतां' गायत्रीमन्त्रेण अष्टवारं आज्येन, समस्तव्याहृत्या पूर्णाहुत्या आज्येन, पञ्चप्राणमन्त्रैः अष्टाष्ट वारमाज्येन, सप्तव्याहृतिभिः एकैकवारमाज्येन, समस्तव्याहृत्या पूर्णाहुत्या आज्येन, शक्त्यादि तत्वमन्त्रैः प्रत्येकं शतवारमाज्येन (अष्टाविंशतिवारं वा), मातृकामन्त्रैः अष्टाष्टवारमाज्येन (एकैकवारं वा), केशवादिमूर्तिभ्यः एकैक वारमाज्येन,...इत्यादि ।

होमं समाप्य, होमाग्निगतचैतन्यं प्रणवेन कलशे उद्वास्य, गर्भगृहं गत्वा, सङ्कल्प्य, पीठपूजापूर्वकं 'देवतां' आवाह्य, गोलकचिन्तनं, न्यासादिकं च विधाय, मूलमन्त्रेण पाद्याद्युपचारैः पूजयेत् । स्नानकाले सम्पाताज्यं बिम्बे समर्प्य, प्रणवमूलतत्वमातृकामन्त्रैः कलशमभिषिच्य, पुष्पोपचारानन्तरं आवरणपूजां विधाय, नैवेद्यकाले पायसादिकं निवेद्य, नीराज्य, प्रार्थयेत् ।

# ॥ बलिपीठप्रतिष्ठा ॥

बलिपीठानि सर्वाणि साक्षात्तोयेऽधिवासयेत् ।
स्थापयेच्च यथान्यायं स्थापयेद्धान्यराशिषु ॥
समिद्भिराज्यैश्चरुभिस्तिलैर्हुत्वा यथाक्रमम् ।
ॐ भूतेभ्य नम इति महापीठमनुर्भवेत् ॥
अन्येषामेवमेवाह्यं पीठानां परिकल्पने ।

सङ्कल्प्य, जलाधिवासकृतबलिपीठानि जलाधिवासात् उद्धृत्य, पञ्चगव्य शुद्धोदकलशजलेन अभिषिच्य, पुष्पादिभिः अलङ्कृत्वा, जलगन्धादिभिः सम्पूज्य अधिवासयेत् । दिशाहोमः - ततः पूर्वाद्यष्टदिक्षु स्थण्डिलानि विरचय्य, स्वगृह्योक्तविधानेन अग्निं प्रतिष्ठाप्य, तत्तद्दक्षिणे जलपूर्णकलशे पद्मपीठं सम्पूज्य, तत्तन्मन्त्रेण तत्तत् दिगेशं आवाह्य, सम्पूजयेत् ।

मन्त्राः - इन्द्र क्रतुमिति प्राच्यामग्निदूतं हुताशने ।
नाके सुपर्णं याम्यायां नैर्ऋत्ये मोषणःपरा ॥
परं रक्षन्तीति वारुण्यां वायवायाहु वायवे ।
सोमं राजानामित्येवं सौम्ये शार्वे त्रियम्बकम् ॥

इन्द्र क्रतुमिति शक्तिर्वसिष्ठ ऋषिः । निचृद्बृहती छन्दः । इन्द्रो देवता
ॐ इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥

अग्निं दूतं काण्वो मेधातिथिर्ऋषिः । गायत्री छन्दः । अग्न्यावाहने विनियोगः
ॐ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥

नाके सुपर्णमिति भार्गवो वेन ऋषिः । त्रिष्टुप् छन्दः । यमो देवता
ॐ नाके सुपर्णमुप यत्पतन्तं हृदा वेनं तो अभ्यचक्षत त्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥

मोषणःपरा इति घौरःकाण्व ऋषिः। गायत्री छन्दः । निर्ऋतिर्देवता
ॐ मो षु णः परापरा निर्ऋतिर्दुर्हणा वधीत् । पदीष्ट तृष्णया सह ॥

यं रक्षन्तीति घौरः कण्व ऋषिः । गायत्री छन्दः । वरुणो देवता
ॐ यं रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा । नू चित्स दभ्यते जनः ॥

वायवायेति वैश्वामित्रो मधुच्छन्दा ऋषिः । गायत्री छन्दः । वायुर्देवता

ॐ वायुवा याहि दर्शतेमे सोमा अरङ्कृताः। तेषां पाहि श्रुधी हवम्॥

सोमं राजानमिति तापस ऋषिः। अनुष्टुप् छन्दः। सोमो देवता

ॐ सोमं राजानमवसेऽग्निं गीर्भिर्हवामहे।

आदित्यान्विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम्॥

त्र्यम्बकमिति मैत्रावरुणिर्वसिष्ठ ऋषिः। अनुष्टुप् छन्दः। ईशानो देवता

ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्।

उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात्॥

अन्वाधानम् - पलाशखदिराश्वत्थप्लक्षन्यग्रोधबिल्वजाः।

औदुम्बराश्च काश्मर्यः समिधोऽष्टशतं पृथक्॥

तावदाज्यन्नलाजादीन् हुत्वा शेषं समापयेत्॥

प्राक्कुण्डे - इन्द्रं इन्द्र क्रतुमिति मन्त्रेण पालाशसमिदाज्य-चरु-लाज-सर्षप-यव-तिल-व्रीहि-घृतद्रव्यैः प्रत्येकं अष्टोत्तरशतवारं (अष्टाविंशतिवारं अष्टवारं वा)...इत्यादि। आग्नेय्याम् - अग्निं, अग्निं दूतमिति मन्त्रेण खदिर समिदाज्य-चरु - लाज - सर्षप - यव - तिल - व्रीहि - घृतद्रव्यै प्रत्येकमष्टोत्तरशतवारं (अष्टाविंशतिवारं अष्टवारं वा)...इत्यादि । याम्ये - यमं, नाके सुपर्णमिति मन्त्रेण अश्वत्थसमिदाज्य-चरु-लाज-सर्षप-यव-तिल-व्रीहि-घृतद्रव्यै प्रत्येकं अष्टोत्तरशतवारं (अष्टाविंशतिवारं अष्टवारं वा)...इत्यादि। नैर्ऋत्ये - निर्ऋतिं, मोषणःपरा इति मन्त्रेण प्लक्षसमिदाज्य-चरु-लाज-सर्षप-यव-तिल-व्रीहि-घृतद्रव्यैः प्रत्येकं अष्टोत्तरशतवारं (अष्टाविंशतिवारं अष्टवारं वा)..इत्यादि । वारुणे - वरुणं, यं रक्षन्तीति मन्त्रेण न्यग्रोधसमिदाज्य-चरु-लाज-सर्षप-यव-तिल-व्रीहि-घृतद्रव्यैः प्रत्येकं अष्टोत्तर शतवारं (अष्टाविंशतिवारं अष्टवारं वा)...इत्यादि। वायव्ये - वायुं, वायवायेति मन्त्रेण बिल्वसमिदाज्य - चरु - लाज - सर्षप - यव - तिल - व्रीहि - घृतद्रव्यैः प्रत्येकं अष्टोत्तरशतवारं (अष्टाविंशतिवारं अष्टवारं वा)...इत्यादि । सौम्ये - सोमं, सोमं राजानमिति मन्त्रेण औदुम्बरसमिदाज्य - चरु - लाज - सर्षप - यव - तिल - व्रीहि -

घृतद्रव्यैः प्रत्येकं अष्टोत्तर शतवारं (अष्टाविंशतिवारं अष्टवारं वा)...इत्यादि ।
ईशान्ये - ईशानं, त्र्यम्बकमिति मन्त्रेण काश्मरिसमिदाज्य-चरु-लाज - सर्षप - यव - तिल - व्रीहि - घृतद्रव्यैः प्रत्येकं अष्टोत्तर शतवारं (अष्टाविंशतिवारं अष्टवारं वा)...इत्यादि ।

पुनः आग्नेयदिशि चतुरश्रकुण्डं निर्माय, स्वगृह्योक्तविधानेन अग्निं प्रतिष्ठाप्य, तद्दक्षिणे जलपूर्णनवकलशानि संस्थाप्य, सम्पूज्य, बलिदेवताहोमं कुर्यात् ।
अन्वाधानम् - 'देवतां' मूलोपचारगायत्रीमन्त्रैः अष्टाष्टवारं आज्येन, पीठदेवतामन्त्रैः आवरणदेवतामन्त्रैश्च सकृद्सकृदाज्येन, समस्तव्याहृत्या पूर्णाहुत्या चाज्येन, द्वारपालादिबलिदेवताः तत्तन्नाममन्त्रेण समिदाज्यचरु तिलेति चतुर्भिर्द्रव्यैः प्रत्येकं अष्टोत्तरशतवारं (अष्टाविंशति वारं वा)...इत्यादि।
होमं परिसमाप्य, बलिपीठस्थापनास्थलं संशोध्य, पद्ममन्त्रेण सम्पूज्य, बलिपीठिकां तत्तत् बलिदेवता नाममन्त्रेण तत्तत् स्थाने संस्थाप्य, नाममन्त्रेण आवाह्य, ध्रुवाद्यौरितिमन्त्रं सञ्जप्य, सम्पाताज्यं समर्प्य, कलशजलेन सेचयित्वा, गन्धादिभिः सम्पूज्य, शेषहविषां बलिं दत्त्वा,

यावदत्र जगन्नाथो बिम्बमाश्रित्यतिष्ठति ।
तावदत्रैव रक्षार्थं यूयं तिष्ठथ सर्वदा ॥

इति सम्प्रार्थयेत् । (इन्द्रादिपीठेषु सूर्ये आप्यायेत्यादिमन्त्रैः सोमादिग्रहाधिपाः पूज्याः । होमे क्रमेण पलाशखदिरादिसमिधः ग्राह्याः । गणेशे विश्वरूपादि दूताः स्वस्वनाममन्त्रैः पूज्याः। होमे सर्वत्र पलाशः ।)

निर्माल्यधारिबिम्बप्रतिष्ठा - निर्माल्यधारिबिम्बं जलादिभिः संशोध्य, पञ्चगव्येन, शुद्धोदकलशजलेन च अभिषिच्य, निर्माल्यधारि बिम्बे आवाह्य, सम्पूज्य, गोमयादिभिः स्थलं संशोध्य, भद्रपीठं संस्थाप्य, ॐ पं पद्माय नमः इति सम्पूज्य, तत् पीठे निर्माल्यधारिबिम्बं संस्थाप्य, ध्रुवाद्यौरिति मन्त्रेण

प्रतिष्ठापनं प्रकल्प्य, प्रतिष्ठाकलशतीर्थेन अभिषिच्य, देवताऽर्पितं गन्धपुष्पनैवेद्यानि समर्प्य, नीराज्य,

यावदत्र जगन्नाथो बिम्बमाश्रित्यतिष्ठति ।
तावदत्रैव रक्षार्थं त्वं तिष्ठस्व प्रतर्दन ॥ इति विष्णौ ।

अन्येषु - यावदत्र जगत्पालो बिम्बमाश्रित्यतिष्ठति ।
तावदत्रैव रक्षार्थं त्वं तिष्ठस्व दयानिधे ॥

देवीषु - यावदत्र जगन्माता बिम्बमाश्रित्यतिष्ठति ।
तावदत्रैव रक्षार्थं त्वां तिष्ठस्व दयामये ॥ इति प्रार्थयेत् ।

**महाबलिपीठप्रतिष्ठा** - महाबलिपीठप्रतिष्ठाङ्ग अङ्कुरार्पणादिकं कृत्वा, ताम्रमयगर्भपात्रे पञ्चगव्यं प्रपूर्य, स्थण्डिले अग्निं प्रतिष्ठाप्य, अन्वाधानम् - 'देवतां' मूलमन्त्रेण अष्टोत्तरशतवारं आज्येन, पीठदेवतामन्त्रैः आवरण-देवतामन्त्रैश्च सकृद्सकृदाज्येन, भूरादिसप्तव्याहृतिभिः आज्येन, भूतनाथं गायत्रीमन्त्रेण अष्टोत्तरशतवारमाज्येन....इत्यादि । होमं समाप्य, सम्पाताज्यं गर्भपात्रे संयोज्य, महाबलिपीठस्य गर्भस्थाने भूमौ पद्मपीठं सम्पूज्य, तत्र गर्भपात्रं विन्यस्य, तस्मिन् भूतनाथमावाह्य सम्पूज्य, संरक्ष्य, तक्ष्णा पीठं कारयेत् । तत् बलिपीठं परिगह्य, जल-कुश-मृद्-त्वग्भिः संशोध्य, शुद्धिकलशजलेनाभिषिच्य, पूर्वादिषु कुमुदादीन् तत्तन्नाममन्त्रेण मध्ये भूतनाथं च तद्गायत्र्या आवाह्य, गन्धपुष्पफलभक्ष्यभोज्यादिभिः सुपूजयेत् ।

ॐ भूतनाथाय विद्महे हरिसेनाय धीमहि । तन्नो शान्तः प्रचोदयात् ॥

द्वारपालमारभ्य भूतनाथान्तः बलिर्दत्त्वा, शुभभद्रकमण्डले नवकलशानि संस्थाप्य, पूर्वाद्यष्टकलशेषु कुमुदाद्याः मध्यकलशे भूतनाथं च आवाह्य, गन्धाद्यैः सुपूजयेत् । तद्वामे कुण्डे अग्निं प्रतिष्ठाप्य, महाबलिपीठप्रतिष्ठाङ्ग होममाचरेत् ।

सर्वेषां मूर्तिपानां तु होमयेन्मूलविद्यया ।
यथा स्वनाममन्त्रेण समिदाज्यहवींषि च ॥
लाजाँश्च सर्षपाँश्चैव तथा सक्तून् यवाँस्तिलान् ।

दधिक्षीरं तथा क्षौद्रं पुष्पाणि तु फलानि च ॥
सर्वं साज्यं तु होतव्यं सर्वशान्तिकरं शुभम् ।

अन्वाधानम् - 'देवतां' मूलमन्त्रेण अष्टोत्तरशतवारं आज्येन, पीठदेवतामन्त्रैः आवरण देवतामन्त्रैश्च सकृद्सकृदाज्येन, समस्तव्याहृत्या पूर्णाहुत्या आज्येन, भूतनाथं नाममन्त्रेण पलाशसमित् - आज्य - चरु - लाज - सर्षप - सक्तु - यव- तिल - दधि - क्षीर - मधु - श्वेतपद्म -कदळीफल एभिः त्रयोदशद्रव्यैः प्रत्येकं अष्टाविंशतिवारं (अष्टवारं वा), कुमुदादिदेवताः अष्टाष्टवारमाज्येन (त्रयोदश द्रव्यैः वा)...इत्यादि । होमं परिसमाप्य, अग्निचैतन्यं कलशे उद्वास्य, सम्पाताज्यं सङ्गृह्य संरक्ष्य, पीठगतं निर्माल्यं त्यक्त्वा, विशोध्य, वस्त्रेणाच्छाद्य संरक्षेत् । प्रातःकालपूजान्ते अनुज्ञार्थं देवतां सम्प्रार्थ्य, पुनः बलिपीठं जलाधिभिः संशोध्य, बलिपीठमध्ये पद्मपीठं सम्पूज्य, प्रागदिक्रमेण कुमुदादीन्, मध्ये भूतनाथं च आवाह्य, ध्रुवाद्यौरिति मन्त्रेण प्रतिष्ठापनं प्रकल्प्य, सम्पाताज्यं समर्प्य, प्रगादिक्रमेण कलशमुद्धार्य परिवारान् अभिषिच्य, मध्यकलशेन पीठं अभिषिञ्चेत् । जलगन्धादिभिः सम्पूज्य, नैवेद्यकाले विष्णोर्निवेदितान्नेन प्रगादिक्रमेण मध्ये च कुमुदादिभ्यः बलिहरणं कुर्यात् । पुनः बलिपीठस्य पूर्वदिग्भागे -

आगच्छतामरगणाः प्रागाशां येऽधीशेरते ।
विरूपाश्च सुरूपाश्च सपर्यामुद्यतामिमाम् ॥
गृहीत्वा पान्तुनस्तृप्ताः कुमुदस्यानुयायिनः ।
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमो नमः ॥

आग्नेय्याम् - आगच्छतामरगणाः येऽग्न्याशामधिशेरते ।
भीमभीममुखा रौद्राः सपर्यामुद्यतामिमाम् ॥
गृहीत्वा पान्तुनस्तृप्ताः कुमुदाक्षानुयायिनः ।
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमो नमः ॥

दक्षिणे - आगच्छतां पितृगणाः याम्याशां येऽधिशेरते ।
दारुणा दारुणाचाराः सपर्यामुद्यतामिमाम् ॥
गृहीत्वा पान्तुनस्तृप्ताः पुण्डरीकानुयायिनः ।
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमो नमः ॥
नैर्ऋत्ये - आगच्छतां यातुधानाः कोणाशां येऽधिशेरते ।
क्रव्याशिनः क्रूरधियः सपर्यामुद्यतामिमाम् ॥
गृहीत्वा पान्तुनस्तृप्ताः वामनस्यानुयायिनः ।
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमो नमः ॥
वारुणे - आगच्छताहि प्रथमाः प्रतीच्यां येऽधिशेरते ।
महाविषा दन्तशूकाः सपर्यामुद्यतामिमाम् ॥
गृहीत्वा पान्तुनस्तृप्ताः शङ्कुकर्णानुयायिनः ।
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमो नमः ॥
वायव्ये - आयान्तु गन्धर्वगणाः वाव्याशां येऽधिशेरते ।
सन्दर्शना भीमवेगाः सपर्यामुद्यतामिमाम् ॥
गृहीत्वा पान्तुनस्तृप्ताः सर्पनेत्रानुयायिनः ।
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमो नमः ॥
सौम्ये - आगच्छतां यक्षगणः उदीचीं येऽधिशेरते ।
विरूपाः दण्डहस्ताश्च सपर्यामुद्यतामिमाम् ॥
गृहीत्वा पान्तुनस्तृप्ताः सुमुखस्यानुयायिनः ।
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमो नमः ॥
ईशान्ये - आयान्तु पैशाचकगणाः रौद्राशां येऽधिशेरते ।
सशूलायुधहस्ताश्च सपर्यामुद्यतामिमाम् ॥
गृहीत्वा पान्तुनस्तृप्ताः सुप्रतिष्ठानुयायिनः ।
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमो नमः ॥
इति मन्त्रैः बलिहरणं कुर्यात् । पुनः पीठस्योपरि मध्ये -
आगच्छतां सिद्धगणाः गगनं येऽधिशेरते ।
शुचयः सत्यहृदयाः सपर्यामुद्यतामिमाम् ॥

गृहीत्वा पान्तुनस्तृप्ताः पृश्निगर्भानुयायिनः ।
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमो नमः ॥

पीठमूले भूमौ - आगच्चताधरगणाः पृथिवीं येऽधिशेरते ।
बहुरूपाः बहुज्ञानाः सपर्यामुद्यतामिमाम् ॥
गृहीत्वा पान्तुनस्तृप्ताः मानवस्यानुयायिनः ।
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमो नमः ॥

पीठमध्ये अवशिष्ट हविशेषेन -

ये समस्तं जगद्व्याप्य तिष्ठन्ति बलिकाङ्क्षिणः ।
विष्णुपरिषदास्त्वस्मिन् गृह्णन्तुबलिमुत्तमम् ॥ इति विष्णौ बलिमन्त्राः ।

अन्येषु - ये भूताः पुरःसदो निशाचरेन्द्राः सन्तोऽसन्तः विहगाननाः पुष्टिकृतोऽपुष्टिकृतः कामदश्च बलिमिच्छन्ति तेषां सर्वेषां बलिं हरामि महद्भ्यः क्षुद्रकेभ्यश्च तेभ्यस्तेभ्यो नमो नमः स्वाहा । ये भूताः अग्निसदो निशाचरेन्द्राः सन्तोऽसन्तः विहगाननाः पुष्टिकृतोऽपुष्टिकृतः कामदश्च बलिमिच्छन्ति तेषां सर्वेषां बलिं हरामि महद्भ्यः क्षुद्रकेभ्यश्च तेभ्यस्तेभ्यो नमो नमः स्वाहा । ये भूताः दक्षिणसदो निशाचरेन्द्राः सन्तोऽसन्तः विहगाननाः पुष्टिकृतोऽपुष्टिकतः कामदश्च बलिमिच्छन्ति तेषां सर्वेषां बलिं हरामि महद्भ्यः क्षुद्रकेभ्यश्च तेभ्यस्तेभ्यो नमो नमः स्वाहा । ये भूताः निर्ऋतिसदो निशाचरेन्द्राः सन्तोऽसन्तः विहगाननाः पुष्टिकृतोऽपुष्टिकतः कामदश्च बलिमिच्छन्ति तेषां सर्वेषां बलिं हरामि महद्भ्यः क्षुद्रकेभ्यश्च तेभ्यस्तेभ्यो नमो नमः स्वाहा । ये भूताः पश्चिमसदो निशाचरेन्द्राः सन्तोऽसन्तः विहगाननाः पुष्टिकृतोऽपुष्टिकृतः कामदश्च बलिमिच्छन्ति तेषां सर्वेषां बलिं हरामि महद्भ्यः क्षुद्रकेभ्यश्च तेभ्यस्तेभ्यो नमो नमः स्वाहा । ये भूताः वायुसदो निशाचरेन्द्राः सन्तोऽसन्तः विहगाननाः पुष्टिकृतोऽपुष्टिकृतः कामदश्च बलिमिच्छन्ति तेषां सर्वेषां बलिं हरामि महद्भ्यः क्षुद्रकेभ्यश्च तेभ्यस्तेभ्यो नमो नमः स्वाहा । ये भूताः उत्तरसदो निशाचरेन्द्राः सन्तोऽसन्तः विहगाननाः पुष्टिकृतोऽपुष्टिकृतः कामदश्च बलिमिच्छन्ति तेषां सर्वेषां बलिं हरामि महद्भ्यः क्षुद्रकेभ्यश्च तेभ्यस्तेभ्यो नमो नमः स्वाहा । ये भूताः ईशसदो निशाचरेन्द्राः सन्तोऽसन्तः विहगाननाः पुष्टिकृतोऽपुष्टिकृतः कामदश्च

बलिमिच्छन्ति तेषां सर्वेषां बलिं हरामि महद्भ्यः क्षुद्रकेभ्यश्च तेभ्यस्तेभ्यो नमो नमः स्वाहा । ये भूताः उपरिषदो निशाचरेन्द्राः सन्तोऽसन्तः विहगाननाः पुष्टिकृतोऽपुष्टिकृतः कामदश्च बलिमिच्छन्ति तेषां सर्वेषां बलिं हरामि महद्भ्यः क्षुद्रकेभ्यश्च तेभ्यस्तेभ्यो नमो नमः स्वाहा । ये भूताः भूमिसदो निशाचरेन्द्राः सन्तोऽसन्तः विहगाननाः पुष्टिकृतोऽपुष्टिकृतः कामदश्च बलिमिच्छन्ति तेषां सर्वेषां बलिं हरामि महद्भ्यः क्षुद्रकेभ्यश्च तेभ्यस्तेभ्यो नमो नमः स्वाहा । इति मन्त्रेण बलिं दत्त्वा, कर्मसमर्पणं कुर्यात् । एवमेव तत्तद्देवोक्त बलिदेवान् स्वीकुर्यात् । ॐ भूतेभ्यो नमः इति मन्त्रेण महाबलिपीठमर्चयेत् ।

## ॥ ध्वजप्रतिष्ठा ॥

यातुधाना गुह्यकाश्च कूश्माण्डाः खेचरस्तथा ।
छिन्दयन्त्यमरश्रेष्ठ ध्वजहीनं सुरालयम् ॥
ध्वजेन रहितो विप्र प्रसादे तु वृथा भवेत् ।
पूजाहोमादिकं सर्वं जपाद्यं यत् कृतं बुधैः ॥

प्रतिष्ठाङ्ग अङ्कुरार्पणादिकं कृत्वा, लोहमयं वाहनबिम्बं परिगृह्य, जलाधिवासादिकं कृत्वा, बिम्बं जलादिभिः संशोध्य, पञ्चगव्येन, शुद्धोदकलशेन च अभिषिच्य, वाहनं तन्मन्त्रेण आवाह्य, नेत्रोन्मिलनं कुर्यत् । देवस्य पुरतः धान्यादिभिः शय्यां प्रकल्प्य, पद्ममन्त्रेण सम्पूज्य, शिरोभागे कुम्भेशकर्करीनिद्राकलशान् संस्थाप्य, सम्पूज्य, वाहनबिम्बं विधिवत् अधिवासयेत् । ध्वजस्तम्भं मुष्ट्यादिभिः संशोध्य, नपुंसकशिलां, पीठं, ध्वजदण्डं च जलादिभिः संशोध्य संरक्षेत् ।

नवकलशानि संस्थाप्य, क्रमेण पूर्वाद्यष्टकलशेषु इन्द्रादिदिक्पालकान् मध्यकलशे वाहनं च आवाह्य सम्पूजयेत् । तत् दक्षिणे कुण्डे अग्निं प्रतिष्ठाप्य, ध्वजाधिवासहोमं कुर्यात् ।

अन्वाधानम् - 'देवतां' मूलमन्त्रेण अष्टोत्तरशतवारं आज्येन, (विष्णौ-कमलालयां अष्टाविंशतिवारं आज्येन, शेषं अष्टाविंशतिवारं च आज्येन,

अन्येषु - वासुकीं अष्टाविंशतिवारमाज्येन इत्यधिकम्) वायुं 'आ वातेति' मन्त्रेण अष्टाविंशतिवारं आज्येन, समस्तव्याहृत्या पूर्णाहुत्या आज्येन, वाहनं तन्मन्त्रेण समित्-चरु-आज्य-यव-तिल-त्रिमधुराप्लुतदूर्वा-घृतेति सप्तद्रव्यैः अष्टाष्टवारं, समस्तव्याहृत्या पूर्णाहुत्या आज्येन, इन्द्राद्यष्टदिक्पालेभ्यः समित्-चरु-आज्यद्रव्यैः प्रत्येकं अष्टाष्टवारं, शेषेण...इत्यादि। पुण्याहवाचनं विधाय, ध्वजस्तम्भोपरि ब्रह्मशिलां संस्थाप्य, वाहनमन्त्रेण रत्नन्यासं कृत्वा, तदुपरि पीठं संस्थाप्य, पद्ममन्त्रेण सम्पूज्य, रक्षेत्। पूर्वोक्तक्रमेण प्रासाद प्रदक्षिणापूर्वकं मङ्गलवाद्यवेदघोषपुरस्सरं वाहनं समानीय, फलताम्बूल दक्षिणादिभिः विप्रान् तोषयित्वा, सुमुहूर्ते ध्वजस्तम्भाग्रे प्रणवेन देवाभिमुखतया वाहनं संस्थाप्य, निद्राकलश, कुम्भेशकलशेन च अभिषिञ्चेत्। स्तम्भाग्रे ध्वजदण्डं देवस्य सम्मुखं यथा भवति तथा स्थापयेत्। विष्णौ ध्वजदण्डे मुख्यप्राणं शेषं च, घण्टायां कमलालयां च आवाह्य पूजयेत्। अन्येषु ध्वजदण्डे वायुं वासुकिं च, घण्टेंसुघोषां च पूजयेत्। ध्वजस्तम्भे पूर्वाद्यष्टदिक्षु क्रमेण इन्द्रादिदिक्पालकान् आवाह्य, पूर्वाद्यष्ट कलशैरभिषिच्य, मध्यकलशेन वाहनबिम्बमभिषिच्य, षोडशोपचारैः सम्पूज्य, नीराज्य, ध्वजस्तम्भस्य परितः वाहनाय, वाय्वादीनां इन्द्रादिदिक्पालेभ्यश्च बलिं दत्वा, गर्भगृहं गत्वा, महापूजां विधाय प्रार्थयेत्।

## ॥ रथसंस्कारविधिः ॥

रथं प्रासादशुद्ध्युक्तक्रमेण संशोध्य, रथाधिवासहोमं कुर्यात्। अन्वाधानं - अत्रप्रधानं 'देवतां' मूलमन्त्रेण अष्टोत्तरशतवारं आज्येन, समस्तव्याहृत्या पूर्णाहुत्या आज्येन, रथाङ्गदेवताः एकैकवारमाज्येन...इत्यादि।

रथाङ्गदेवताः - रथमध्यस्तम्भे - ॐ विष्णवे नमः। पूर्वाद्यष्टस्तम्भेषु क्रमेण- ॐ ब्रह्मणे नमः। रुद्राय। आदित्याय। गणपतये। अनन्ताय। स्कन्दाय।

वसुभ्यो । बृहस्पतये । विश्वकर्मणे नमः । रथपूर्वे - ऋग्वेदाय । दक्षिणे - यजुर्वेदाय । पश्चिमे - सामवेदाय । उत्तरे - अथर्ववेदाय नमः। रथचक्रेषु - रविसोमाभ्यां । कीलेषु - ऋतुभ्यो । रन्ध्रेषु - आकाशाय । महादण्डद्वये - परमपुरुषाय । आधारशक्त्यै । कूर्मे - कूर्माय । तदुपरि - अनन्ताय । तदुपरि - पृथिव्यै । तन्मध्ये - ॐ योगपद्मासनाय नमः

पट्टिकासु - रुद्रेभ्यो । गात्रबन्धेषु - धर्माय । ज्ञानाय । वैराग्याय । ऐश्वर्याय । अधर्माय । अज्ञानाय । अवैराग्याय । अनैश्वर्याय नमः

रथेपूर्वाद्यष्टदिक्षु - इन्द्राय । अग्नये । यमाय । निर्ऋतये । वरुणाय । वायवे । सोमाय । ईशानाय नमः । अन्ते - द्वादशादित्येभ्यो । दलेषु - केशवाय । नारायाणाय । माधवाय । गोविन्दाय । विष्णवे । मधुसूदनाय । त्रिविक्रमाय । वामनाय । श्रीधराय । हृषीकेशाय । पद्मनाभाय । दामोदराय नमः । रथद्वजे वाहनं, द्वारपार्श्वयोः द्वारपालान् ।

**रथपूजा** - आचम्य, प्राणानायम्य, सङ्कल्प्य, स्वस्तिके पीठं सम्पूज्य, देवतां आवाह्य, रथाङ्गेषु तत्तद्देवताः आवाह्य, ॐ महारथाय नमः इति गन्धादिभिः अभ्यर्च्य, ध्यायेत् ।

ध्यानम् - वन्दे रथं सकलमङ्गलसन्निधानम्
कृष्णाजशम्भुनिलयं जनसौम्यवाहम् ।
नानाविचित्रपटरत्नसुवर्णधातु -
रूपं मनोरथमुखं सफलं च चित्रम् ॥

इति ध्यात्वा, आवाहितदेवताः षोडशोपचारैः सम्पूज्य, स्नानकाले सम्पाताज्यं रथाङ्गेषु समर्प्य कलशेन सम्प्रोक्ष्य, नैवेद्यकाले पायसादिकं निवेद्य नीराज्य,

नमस्ते कुड्मलाकार नमः षट्चक्रधारिणे ।
जनमोहनमस्तुभ्यं नमस्ते स्यन्दनाभिध ॥
ममापि यजमानस्य जन्तूनां देशकोशयोः ।
शुभमारोग्यमैश्वर्यं प्रदत्त्वा रक्ष शाश्वता ॥ इति प्रार्थयेत् ।

**रथलक्षणम्** - विमानोच्छ्रायमानं वा गोपुरोच्छ्रायमेव वा ।

ध्वजस्तम्भसमुच्छ्रायं मण्डपोच्छ्रायमेव वा ॥
लोहेन दारुणा वापि कारयेद्रथमुत्तमम् ।
अन्तस्सारं दारुजं चेल्लोहश्चेत्स्वर्णराजितम् ॥
कांस्येन वा धनाकुर्यात् यथावित्तानुसारतः ।
नवरत्नैश्चखचितं द्वारस्तम्भशतावृतम् ॥
षोडशद्वादशाष्टौ वा यथा विभवविस्तरम् ।
भूरादिसप्त वा कुर्यादतलादि चतुर्दश ॥
भूर्भुवस्सुवरित्यादिलोकत्रयतलं यथा ।
उच्छ्राय स्यानुगुण्येन आयामं परिकल्पयेत् ॥
भूमिकायाश्च प्रथमे भागे चक्राणि कल्पयेत् ।
पार्श्वयोरुभयोः कुर्याद्रथस्यानुगुणं यथा ॥
तदग्रे च शिखाकुम्भं चक्रेणोज्वलितं महत् ।
घण्टाशतसमायुक्तं पताक ध्वजशोभितम् ॥
हयान्वाद्विरदान्वापि प्राग्भागे परिकल्पयेत् ।
तन्मध्ये सारथिं स्थाप्येत्वेत्रं वांकुशधारिणम् ॥
तन्मध्ये वेदिकायां तु कूर्मपीठं प्रकल्पयेत् ।
तस्योपरिह्यनन्तं च सहस्रफणिमण्डितम् ॥
कल्पयित्वाथ तन्मध्ये डूलिकां स्वर्णनिर्मिताम् ।
तन्मध्येष्टदळं पद्मं कर्णिकाकेसरान्वितम् ॥
आसीनार्थं तु देवस्य स्वर्णपीठं प्रकल्पयेत् ।

## ॥ ब्रह्मकलशविधिः ॥

अथ गुरुः कलशमण्डपे उपविश्य, आचम्य, प्राणानायम्य, भूतोच्चाटनादिकं विधाय, देशौ कालं सङ्कीर्त्य, बिम्बस्थसमस्तदोषपरिहारार्थं सम्पूर्णकला-सानिध्यसिद्ध्यर्थं, भक्तानां परमानुग्रहप्राप्त्यर्थं, लोककल्याणार्थं च स्नपनाङ्ग द्रव्ययुक्तपरिकलशैः सह ब्रह्मकलशपूजां करिष्ये इति सङ्कल्पं कुर्यात् ।

पूजाङ्ग मूलमन्त्रं सञ्जप्य, घण्टां निनाद्य, शङ्खपूजां विधाय, गुरुं गणपतिं च सम्पूज्य, मण्डलपूजां कुर्यात्।

मण्डलपूजा - मण्डलवर्णेषु तत्तत् वर्णमूर्तीः आवाहयेत्।

शुक्लवर्णे ॐ शुक्लवर्णाय वासुदेवाय नमः, वासुदेवमावाहयामि,

रक्तवर्णे ॐ रक्तवर्णाय सङ्कर्षणाय नमः, सङ्कर्षणमावाहयामि,

पीतवर्णे ॐ पीतवर्णाय प्रद्युम्नाय नमः, प्रद्युम्नमावाहयामि,

असितवर्णे ॐ असितवर्णाय अनिरुद्धाय नमः, अनिरुद्धमावाहयामि,

श्यामवर्णे ॐ श्यामवर्णाय नारायणाय नमः नारायणं आवाहयामि, इत्यावाह्य, गन्धादिपञ्चोपचारैः सम्पूजयेत्। पुनः मण्डले मण्डलाभिमानि- देवता भूवराहं आवाह्य, षोडशोपचारैः सम्पूज्य, नीराज्य, मण्डलं ध्यायेत्।

देवाराधनमण्डलं सुरगणावासं सदामन्दिरम्।
कर्तुः दर्शमात्रतश्च शुभदं स्यात्पञ्चभूतात्मकम्॥
वर्णाद्यक्षरसंयुतं शुभफलं तद्यागपुण्यार्जितम्।
नानामन्त्रमयं समस्तफलदं ध्यायेन्महामण्डलम्॥

इति ध्यात्वा, उत्तरपूजां विधाय, समापयेत्। मण्डले धान्यादिभिः पीठं विरचय्य, मध्ये ब्रह्मकलशं तत् परितः परिकलशानि च उक्तक्रमेण संस्थापयेत्। ब्रह्मकलशपरिकलशयोः मध्ये पूर्वाद्यष्टदिक्षु द्वादश अङ्कुरपात्राणि संस्थापयेत्।

१. तन्त्रसारोक्तकलशविधिः -

२५ कलशक्रमः : चक्राब्जमण्डलमध्ये पद्मे शुद्धोदकपूर्णं ब्रह्मकलशं संस्थाप्य, परितः चतुर्दिक्षु कलशचतुष्टये गन्धोदकं पूरयेत्। तथा चक्राब्जमण्डल वीथिकायां सितरङ्गवल्यादीना पूर्वादिदिक्षु चतुर्दलपद्मचतुष्टयं विलिख्य, तेषु पञ्च पञ्च क्रमेण २० कलशानि स्थापयेत्। पूर्वदिशि पञ्चकलशेषु पञ्चामृताः, दक्षिणस्य पञ्चकलशेषु कषायोदकम्, पश्चिमस्य पञ्चकलशेषु शुद्धोदकं, सौम्ये पञ्चकलशेषु गन्धोदकं च पूरयेत्। वायव्ये रक्तवर्णेन चतुर्दलपद्मं विलिख्य,

ध्वजस्तम्भसमुच्छ्रायं मण्डपोच्छ्रायमेव वा ॥
लोहेन दारुणा वापि कारयेद्रथमुत्तमम् ।
अन्तस्सारं दारुजं चेल्लोहश्चेत्स्वर्णराजितम् ॥
कांस्येन वा धनाकुर्यात् यथावित्तानुसारतः ।
नवरत्नैश्चखचितं द्वारस्तम्भशतावृतम् ॥
षोडशद्वादशाष्टौ वा यथा विभवविस्तरम् ।
भूरादिसप्त वा कुर्यादतलादि चतुर्दश ॥
भूर्भुवस्सुवरित्यादिलोकत्रयतलं यथा ।
उच्छ्राय स्यानुगुण्येन आयामं परिकल्पयेत् ॥
भूमिकायाश्च प्रथमे भागे चक्राणि कल्पयेत् ।
पार्श्वयोरुभयोः कुर्याद्रथस्यानुगुणं यथा ॥
तदग्रे च शिखाकुम्भं चक्रेणोज्वलितं महत् ।
घण्टाशतसमायुक्तं पताक ध्वजशोभितम् ॥
हयान्वाद्विरदान्वापि प्राग्भागे परिकल्पयेत् ।
तन्मध्ये सारथिं स्थाप्येत्वेत्रं वांकुशधारिणम् ॥
तन्मध्ये वेदिकायां तु कूर्मपीठं प्रकल्पयेत् ।
तस्योपरिह्यनन्तं च सहस्रफणिमण्डितम् ॥
कल्पयित्वाथ तन्मध्ये डूलिकां स्वर्णनिर्मिताम् ।
तन्मध्येष्टदळं पद्मं कर्णिकाकेसरान्वितम् ॥
आसीनार्थं तु देवस्य स्वर्णपीठं प्रकल्पयेत् ।

## ॥ ब्रह्मकलशविधिः ॥

अथ गुरुः कलशमण्डपे उपविश्य, आचम्य, प्राणानायम्य, भूतोच्चाटनादिकं विधाय, देशौ कालं सङ्कीर्त्य, बिम्बस्थसमस्तदोषपरिहारार्थं सम्पूर्णकला-सानिध्यसिद्ध्यर्थं, भक्तानां परमानुग्रहप्राप्त्यर्थं, लोककल्याणार्थं च स्नपनाङ्ग द्रव्ययुक्तपरिकलशैः सह ब्रह्मकलशपूजां करिष्ये इति सङ्कल्पं कुर्यात् ।

पूजाङ्ग मूलमन्त्रं सञ्जप्य, घण्टां निनाद्य, शङ्खपूजां विधाय, गुरुं गणपतिं च सम्पूज्य, मण्डलपूजां कुर्यात्।

मण्डलपूजा - मण्डलवर्णेषु तत्तत् वर्णमूर्तीः आवाहयेत्।

शुक्लवर्णे ॐ शुक्लवर्णाय वासुदेवाय नमः, वासुदेवमावाहयामि,

रक्तवर्णे ॐ रक्तवर्णाय सङ्कर्षणाय नमः, सङ्कर्षणमावाहयामि,

पीतवर्णे ॐ पीतवर्णाय प्रद्युम्नाय नमः, प्रद्युम्नमावाहयामि,

असितवर्णे ॐ असितवर्णाय अनिरुद्धाय नमः, अनिरुद्धमावाहयामि,

श्यामवर्णे ॐ श्यामवर्णाय नारायणाय नमः नारायणं आवाहयामि, इत्यावाह्य, गन्धादिपञ्चोपचारैः सम्पूजयेत्। पुनः मण्डले मण्डलाभिमानि- देवता भूवराहं आवाह्य, षोडशोपचारैः सम्पूज्य, नीराज्य, मण्डलं ध्यायेत्।

देवाराधनमण्डलं सुरगणावासं सदामन्दिरम्।
कर्तुः दर्शमात्रतश्च शुभदं स्यात्पञ्चभूतात्मकम्॥
वर्णाद्यक्षरसंयुतं शुभफलं तद्यागपुण्यार्जितम्।
नानामन्त्रमयं समस्तफलदं ध्यायेन्महामण्डलम्॥

इति ध्यात्वा, उत्तरपूजां विधाय, समापयेत्। मण्डले धान्यादिभिः पीठं विरचय्य, मध्ये ब्रह्मकलशं तत् परितः परिकलशानि च उक्तक्रमेण संस्थापयेत्। ब्रह्मकलशपरिकलशयोः मध्ये पूर्वाद्यष्टदिक्षु द्वादश अङ्कुरपात्राणि संस्थापयेत्।

१. तन्त्रसारोक्तकलशविधिः -

२५ कलशक्रमः : चक्राब्जमण्डलमध्ये पद्मे शुद्धोदकपूर्णं ब्रह्मकलशं संस्थाप्य, परितः चतुर्दिक्षु कलशचतुष्टये गन्धोदकं पूरयेत्। तथा चक्राब्जमण्डल वीथिकायां सितरङ्गवल्यादीना पूर्वादिदिक्षु चतुर्दलपद्मचतुष्टयं विलिख्य, तेषु पञ्च पञ्च क्रमेण २० कलशानि स्थापयेत्। पूर्वदिशि पञ्चकलशेषु पञ्चामृताः, दक्षिणस्य पञ्चकलशेषु कषायोदकम्, पश्चिमस्य पञ्चकलशेषु शुद्धोदकं, सौम्ये पञ्चकलशेषु गन्धोदकं च पूरयेत्। वायव्ये रक्तवर्णेन चतुर्दलपद्मं विलिख्य,

तदुपरि पञ्चगव्यकलशं स्थापयेत् । चक्राब्जस्य परितः कुशोदकादि १३ कलशाः पूर्वाद्यष्टदिक्षु स्थापयेत्। अयं च १३ कलशाः अतिरिक्त एव।

५० कलशपक्षे : चक्राब्जमध्ये शुद्धोदकपूर्णब्रह्मकलशः, परितः पूर्वाद्यष्टदिक्षु गन्धोदकपूर्णाः अष्टौ कलाशाः स्थाप्याः । चक्राब्जमण्डलवीथिकायां पूर्वाद्यष्टदिक्षु पञ्च पञ्च कलशाः स्थाप्याः । ब्राह्मावरण दैवीकावरणयोर्मध्ये सर्वगन्धोदक पूरितमेकं कलशं पञ्चगव्यकलशं च संस्थापयेत् । पूर्वदिशि पञ्चकलशेषु पञ्चामृताः, दक्षिणस्य पञ्चकलशेषु कषायोदकम्, पश्चिमस्य पञ्चकलशेषु शुद्धोदकं, सौम्ये पञ्चकलशेषु गन्धोदकं च पूरयेत् । एवमेव आग्नेयादिषु। चक्राब्जस्य परितः कुशोदकादि १३ कलशाः स्थाप्याः।

१०० कलशपक्षे : चक्राब्जमध्ये शुद्धोदकपूर्णब्रह्मकलशः, परितः गन्धोदककलशाः विंशतिः । चक्राब्जमण्डलवीथिकायां पूर्वादिक्रमयोगेन एकैकस्यां दिशि, एकैकस्मिन् कोणे च द्वे द्वे पद्मे। एवं षोडशेषु पद्मेषु तत्तत् दिशि पूर्वोक्तक्रमेण कलशेषु पञ्चामृतादि द्रव्याणि पूरयेत् । चक्राब्जस्य परितः कुशोदकादि १३ कलशाः स्थाप्याः।

२५० कलशपक्षे : चक्राब्जमध्ये शुद्धोदकपूर्णब्रह्मकलशः, परितः गन्धोदककलशाः पञ्चाशत् । चक्राब्जमण्डलवीथिकायां पुर्वाद्यष्टदिक्षु एकैकस्यां दिशि पञ्चामृतादितत्तद्द्रव्यपूर्णाः पञ्चविंशतिकलशाः स्थापनीयाः। चक्राब्जस्य परितः कुशोदकादि १३ कलशाः स्थाप्याः।

५०० कलशपक्षे : चक्राब्जमध्ये शुद्धोदकपूर्णब्रह्मकलशः, परितः गन्धोदककलशाः शत । चक्राब्जमण्डलवीथिकायां प्रतिदिक्षु पञ्चाशत् पञ्चामृतादितत्तद्द्रव्यपूर्णाः कलशाः । चक्राब्जस्य परितः कुशोदकादि १३ कलशाः स्थाप्याः।

१००० कलशपक्षे : चक्राब्जमध्ये शुद्धोदकपूर्णब्रह्मकलशः, परितः द्विशतगन्धोदक कलशाः । प्रतिदिक्षु द्विशतकलशाः पञ्चामृतादि तत्तद्द्रव्यपूर्णाः कलशाः । चक्राब्जस्य परितः कुशोदकादि १३ कलशाः स्थाप्याः।

१३ विशेषकलशाः : कुशोदकं, कर्पूरमिश्रितं उदकं, कुङ्कुमोदकं, चन्दनोदकं, तुहिनोदकं, सर्वगन्धयुक्तजलं, हीरबेरसहितजलं, उशीरोदकं, कोष्ठोदकं, नदीसङ्गमजलं, तडागोदकं, कूपोदकं, निर्झरोदकं च पूरयेत्।

१. पञ्चविंशतिद्रव्यकलशक्रमः –

कलशेषु पूरितानि २५ द्रव्याणि -

घृतमुष्णोदकं रत्नं फलं लोहं यथाक्रमम्।
स्नानगन्धाक्षतयवं ब्राह्मेष्टौ मध्यतः क्रमात्॥
दिव्ये पादाष्टके स्थाप्यं पाद्यं दधि ततः परम्।
अर्घ्यं पाद्यं च पानीयं ततो मधुघटं न्यसेत्॥
पञ्चगव्यं कषायं च क्रमेणाष्टौ यथाक्रमम्।
मानुषे विन्यसेत् प्राच्यां गन्धोदकघटं गुरुः॥
दक्षिणस्यामिक्षुरसं नारिकेलाम्बु वारुणे।
शान्तितोयमुदीचीने ज्वलने मङ्गलोदकम्॥
सर्वोषधिरसं कुम्भं यातुधाने निवेशयेत्।
सर्वगन्धोदकं वायौ रौद्रे मूलौषधिं न्यसेत्॥

ब्रह्मकलशे- ॐ शं नो॑ दे॒विर॒भिष्ट॑य॒ आपो॑ भवन्तु पी॒तये।
शंयोर॒भि स्र॑वन्तु नः॥ - शुभोदकम्

द्रव्याः - यवाश्च व्रीहयश्चैव वैणवश्च इमे त्रयः।

ब्राह्मावरणे -

पूर्वे- ॐ घृ॒तं मि॑मिक्षे घृ॒तम॑स्य॒ योनि॑र्घृ॒ते श्रि॒तो घृ॒तम्व॑स्य॒ धाम॑।
अ॒नु॒ष्व॒धमा व॑ह मा॒दय॑स्व॒ स्वाहा॑कृतं वृषभ वक्षि ह॒व्यम्॥ - घृतम्

दक्षिणे - ॐ दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॑ऽश्विनो॑र्बा॒हुभ्या॑म्।
पू॒ष्णो हस्ता॑भ्याम्॥ - उष्णोदकम्

पश्चिमे -ॐ सहि रत्ना॑नि दा॒शुषे॑ सु॒वाति॑ सवि॒ता भगः॑।

तं भागं चित्रमीमहे ॥ - रत्नजलम्

द्रव्याः - माणिक्यं पद्मरागं च नीलं वज्रं च पुष्यकम् ।
प्रवालं मौक्तिकं चैव तथा मरकतं क्षिपेत् ॥
वैडूर्यं नवरत्नानि न्यसेद्रत्नोदके घटे ।

उत्तरे - ॐ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥ - फलोदकम्

द्रव्याः - कदळीबीजापूराम्रधात्रीबिल्वफलैस्सह ।
नालिकेरं च पनसं मातुलुङ्गफलोदके ॥

आग्नेय्याम् - ॐ हिरण्यरूपः स हिरण्यसन्दृगपां नपात् सेदु हिरण्यवर्णः ।
हिरण्ययात् परियोनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै ॥

- लोहवारि

द्रव्याः - सुवर्णं रजतं ताम्रं सीसकं त्रपुकं तथा ।
कांस्यमायससारं च सप्तं लोहघटोदके ॥

नैऋत्ये - ॐ पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत् समाशत ॥

- स्नानवारि

द्रव्याः - स्नानकुम्भे न्यसेद्धीमान् रजनीसूर्यवर्तिनीम् ।
सहदेवीं शिरीषं च सदाभद्रं कुशाञ्चलम् ॥
मार्जनानि षडेतानि मुष्टिमात्राणि वै पृथक् ।

वायव्ये- ॐ ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥

- नवगन्धोदकम्

द्रव्याः - चन्दनागरुकुष्ठानि मुरामांसी च कुङ्कुमम् ।
ह्रीबेरमप्युशीरं च गिरिजं च तथा नव ॥

ईशान्ये - ॐ येन तोकाय तनयाय धान्यं बीजं वहध्वे अक्षितम्।
अस्मभ्यं तद्धत्तन यद्व ईमहे राधो विश्वायु सौभगम्॥
- अक्षतजलम्

द्रव्याणि - नीवाराः वैणवश्शाल्यः प्रियङ्गुष्षाष्टिकास्तथा।
गोधूमाः तण्डुलाश्चैते मुष्टिमात्राः षडक्षताः॥

दैवीकावरणे -

पूर्वे - ॐ आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्।
भवा वाजस्य सङ्गथे॥ -क्षीरम्

दक्षिणे- ॐ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः।
सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत्॥ - दधि

पश्चिमे - ॐ हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः।
अग्निं या गर्भं दधिरे विरूपास्तान आपः शग्स्याना भवन्तु॥ - अर्घ्यजलम्

द्रव्याः - कुशाग्राक्षतसिद्धार्थ तिलपुष्पफलानि च।
यवां पृथग् मुष्टिमात्राः पलमात्रं च चन्दनम्॥
अष्टौ द्रव्याण्यर्घ्यकुम्भे विन्यसेत् फलितं फलम्

देवताभेदेनार्घ्यद्रव्याः -सिद्धार्थाक्षतदर्भाग्रगन्धपुष्पयवाः फलम्।
तिलाश्चेत्यष्टभिर्युक्तमम्बोऽर्घ्यं वैष्णवं स्मृतम्॥
गन्धपुष्पाक्षतयवाः कुशदूर्वाग्रसर्षपाः।
आपश्चेत्यष्टभिर्द्रव्यैः शाक्तमर्घ्यमुदीरितम्॥
कुशाक्षततिलादूर्वा गन्धः पुष्पं यवास्तथा।
क्षीरं चाष्टाङ्गमर्घ्याम्भः शैवं स्याद् विजयोदितम्॥

उत्तरे - ॐ आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः।
देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे॥
-पाद्यजलम्

द्रव्याः - तुलसीपद्मदूर्वाश्च श्यामाकं चाक्षतं तथा।

विष्णुक्रातं बिल्वपत्रं मुष्टिमात्रं पृथक् पृथक् ॥
पलमेकं चन्दनं च पाद्येऽष्टौ विनिवेशयेत् ।
गणेशे - तिलं दूर्वाऽक्षतं बिल्वं सिद्धार्थं चम्पकं तथा ।
दन्तिदन्तजमृच्चैव पाद्यकुम्भे विनिक्षिपेत् ॥
सर्वेषु प्रशस्तपाद्यद्रव्याः - लक्ष्म्याम्भसा समापूर्य दूर्वाश्यामाकपङ्कजैः ।
विष्णुं विहाय अन्येषु पाद्यं तदनन्तरमर्घ्यम् इति पक्षवेधः ।

आग्नेय्याम् - ॐ सं ते पयाँसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवाँस्युत्तमानि धिष्व ॥ - आचमनम्

द्रव्याः - एलालवङ्गतक्कोलजातिकर्पूरचम्पकाः ।
चन्दनं कुसुमान्यैवमष्टावामनभाजने ॥
सर्वेषु - आचमन सजातीफलतक्कोललवङ्गं शीतलं जलम् ।
प्रपञ्चादीषु यत् प्रोक्तं सामान्याचमनीयकम् ॥

नैऋत्ये - ॐ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्नः संत्वोषधीः ॥ - मधु

वायव्ये - ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ॥ - पञ्चगव्यम्

ईशान्ये- ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।
गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ - कषायम्

द्रव्याः - शमीपालाशखदिरबिल्वाश्वत्थविकङ्कताः ।
औदुम्बराश्च न्यग्रोधस्तेषामष्टौ त्वचः स्मृताः ॥

मानुषावरणे -

पूर्वे - ॐ वायवा याहि दर्शतेमे सोमा अरंकृताः ।
तेषां पाहि श्रुधी हवम् ॥ - गन्धोदकम्

शिवे पक्षान्तरेण भस्मजलं वा । मूलेन पलाशं हुत्वा सितभस्मं तु सङ्ग्रहेत् ।

दक्षिणे - ॐ स्वादुः पवस्व दिव्याय जन्मने स्वादुरिन्द्राय सुहवीतुनाम्ने ।
स्वादुर्मित्राय वरुणाय वायवे बृहस्पतये मधुमाँ अदाभ्यः ॥

- इक्षुरसम्

पश्चिमे-ॐ या दिव्या आपः पृथिवी सम्बभूवुर्या अन्तरिक्ष्या उत पार्थिवीर्याः ।
हिरण्यवर्णा यज्ञियास्तान आपः शग्ग् स्योना भवन्तु ॥ - नलिकेरजलम्

उत्तरे - ॐ शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या ।
शमिन्द्रासोमा सुविताय शं योः शं न इन्द्रापूषणा वाजसातौ ॥ - शान्तिजलम्

द्रव्याणि - तुलसीवेणुनिवारयवाश्च श्वेतसर्षपाः ।
तिलाश्च षट् शान्तिकुम्भे द्रव्याणि परिकल्पयेत् ॥

गणेशे - अढकं बिल्वकर्पूरौ दूर्वाऽक्षतयवानि च ।
शान्तिकुम्भे क्षिपेद्विप्र सर्वशान्तिकरं शुभम् ॥

आग्नेय्याम् - ॐ मा त्वा श्येन उद्वधीन्मा सुपर्णो मा त्वा विददिषुमान्वीरो अस्ता । पित्र्यामनु प्रदिशं कनिक्रदत्सुमङ्गलो भद्रवादी वदेह ॥ - मङ्गलजलम्

द्रव्याः - एकपत्राम्बुजं कुष्ठं कुङ्कुमं रोहिणीद्रुमम् ।
पुण्यास्सुमनसश्चाष्टौ यूथिका मल्लिका अपि ॥
त्रीण्युत्पलानि जातिश्च चम्पकं केतकी तथा ।
द्रव्याणि पञ्चदशच न्यसेत् मङ्गलपायसि ॥

शिवे - चम्पकं सहदेवी च शतपत्री च रोचना ।
बिल्वं यवा शमी दूर्वा तक्कोलं करवीरकम् ॥
अश्वत्थं नागपुष्पं च मङ्गलद्रव्यमीरितम् ।

नैऋत्ये- ॐ या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।
तासां त्वमस्युत्तमारं कामाय शं हृदे ॥ - सर्वौषधीरसम्

द्रव्याः - मांसी कुष्ठं हरिद्रे द्वे मुरा शैलेयचम्पके ।
मुस्ता वचा च कर्पूरं प्रत्येकं पलमात्रकम् ॥

पिष्ट्वा सर्वौषधिजले दशैतानि विनिक्षिपेत् ।

वायव्ये- ॐ याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः ।
सर्वाः सङ्गत्य वीरुधोऽस्यै सं दत्त वीर्यम् ॥ - सार्वकम्

द्रव्याः - कर्पूरं कुङ्कुमं कुष्ठं मांसी मलयजं मुरा ।
प्रियङ्गुकेसरं मुस्ता तमालं नागकेसरम् ॥
मूलद्वयं च कच्चोरं सुरसर्पिककेसरम् ।
उशीरं तगरं लोध्रं तथैव हरिचन्दनम् ॥
अगरूद्वसितं कुष्ठं कालेयं ग्रन्थिपल्लवग् ।
मुकुलं चम्पकास्येति प्रत्येकं पलसम्मितम् ॥
चूर्णीकृत्य न्यसेत्तत्र सर्वगन्धोदके घटे ॥

ईशान्ये - ॐ एष वां देवावश्विना कुमारः सांहदेव्यः । दीर्घायुरस्तु सोमकः ॥
- मूलौषधिजलम्

द्रव्याः - व्याघ्री सिंही बलाकाग्नी शरपुङ्खा शतावरी ।
बिल्वमूलं वचा शुण्ठी कोरण्डं शतमूलिका ॥

अन्यकुम्भेषु नदीसङ्गमजलं, तटाकोदकं, कूपोदकं, निर्झरोदकं पूजितजलं च पूरयेत् । पञ्चविंशति, पञ्चाशात्, शत, सार्धद्विशत, पञ्चशत, सहस्रकलशानि वा विधिवत् संस्थाप्य सम्पूजयेत् ।

विष्णौ एकैककलशे एकैकमूर्तिक्रमेण पञ्चविंशतिकलशपक्षे परिकलशेषु केशवादिमूर्तीः आवाहयेत् । पञ्चाशत्कलशपक्षे अजादिळाळूकान्तमूर्तीः, शतकलशपक्षे अजादि शिंशुमारान्तमूर्तीः, सार्धद्विशतकलशपक्षे अजादि शिंशुमारान्तशतमूर्तीः क्रमव्युत्क्रमेण, अजादिळाळूकान्तमूर्तीः एकवारं च, पञ्चशतकलशपक्षे पूर्वोक्तक्रमेण द्विवारं सहस्रकलश पक्षे चतुर्वारं च आवाह्य, पूजयेत् । वेदादिभिः कलशाभिमन्त्रणं कृत्वा, परितः कुण्डानि निर्माय प्रतिष्ठाङ्ग उक्तक्रमेण अधिवासहोमान् कुर्यात् । परिकुण्डेषु स्थितं चैतन्यं प्रधानकुण्डे उद्वास्य, प्रधानकुण्डात् गुरुः प्रणवमूलमन्त्रैः ब्रह्मकलशे उद्वास्य,

सम्पूज्य, कलशस्य परितः पूर्वादिदिक्षु क्रमेण लोकपालेभ्यः भूतेभ्यश्च बलिं दद्यात् ।

क्रमेण पूर्वादिदिक्षु इन्द्रादिदशलोकपालेभ्यः बलिं दत्वा, तद्बहिः पूर्वादिदिक्षु -

आद्याश्च कर्मजाश्चैव ये भूताः प्राग्दिशि स्थिताः ।
प्रसन्नाः परितुष्टास्ते प्रतिगृह्णवन्त्विमं बलिम् ॥
आद्याश्च कर्मजाश्चैव ये भूताः दक्षिणे स्थिताः ।
प्रसन्नाः परितुष्टास्ते प्रतिगृह्णवन्त्विमं बलिम् ॥
आद्याश्च कर्मजाश्चैव ये भूताः पश्चिमे स्थिताः ।
प्रसन्नाः परितुष्टास्ते प्रतिगृह्णवन्त्विमं बलिम् ॥
आद्याश्च कर्मजाश्चैव ये भूताः उत्तरे स्थिताः ।
प्रसन्नाः परितुष्टास्ते प्रतिगृह्णवन्त्विमं बलिम् ॥

आग्नेयादिविदिक्षु - वृक्षेषु पर्वताग्रेषु ये वह्निदिशमाश्रिताः ।
भूमौ व्योम्नि स्थिता ये च तेऽपि गृह्णवन्त्विमं बलिम् ॥
वृक्षेषु पर्वताग्रेषु ये निर्ऋतिदिशमाश्रिताः ।
भूमौ व्योम्नि स्थिता ये च तेऽपि गृह्णवन्त्विमं बलिम् ॥
वृक्षेषु पर्वताग्रेषु ये वायुदिशमाश्रिताः ।
भूमौ व्योम्नि स्थिता ये च तेऽपि गृह्णवन्त्विमं बलिम् ॥
वृक्षेषु पर्वताग्रेषु ये रुद्रदिशमाश्रिताः ।
भूमौ व्योम्नि स्थिता ये च तेऽपि गृह्णवन्त्विमं बलिम् ॥

तद्बहिःअष्टदिक्षु - विनायकाः क्षेत्रपाला ये चान्ये बलिकाङ्क्षिणः ।
दिक्षु सर्वासु तिष्ठन्तः तेऽपि गृह्णवन्त्विमं बलिम् ॥

इति बलिं दद्यात् । कलशेषु उत्तरपूजां विधाय, मूलमन्त्रेण त्रिवारं व्याप्य, उपाचारमन्त्रेण पुष्पाञ्जलिं दत्त्वा, रक्षेत् ।

कलशस्नपनपूर्वाङ्गम् - अथ आचार्यः गर्भगृहं गत्वा, प्राणानायम्य, सङ्कल्प्य, निर्माल्यं त्यक्त्वा, शङ्खपूजां विधाय, तैलेन अभ्यञ्जनं कृत्वा, चणकपिष्टैः उद्वर्त्य, भूरिजलैः अभिषिच्य, पीठपूजां विधाय, 'देवतां' विधिवत्

आवाह्य, गोलकचिन्तनं न्यासादिकं विधाय, अधिवासहोम सम्पाताज्यं बिम्बे समर्प्य, पाद्यं, अर्घ्यं च समर्प्य, गायत्र्या कौतुकं विसृज्य, हस्तं प्रक्षाल्य, पुनराचमनं दत्त्वा, पुष्पेण बिम्बमाराधयेत् । ततः कलशमण्डपमागत्य, कलशस्थदेवताः पुष्पाञ्जलिं समर्प्य, प्रसन्नपूजां विधाय, भद्रदीपद्वयेन नीराज्य, सम्प्रार्थ्य, वेदादिभिः परिकलशं मूर्तिपेन उद्धार्य, मङ्गलसूक्तं पठन् प्रदक्षिणापूर्वक प्रासादस्य अन्तः प्रविश्य, अर्घ्यं दत्त्वा, नीराज्य, परिकलशेन अभिषिञ्चेत् । मानुषावरणात् प्रारम्भ्य पूर्वादिक्रमेण शुद्धोदककलशैः द्रव्यकलशैश्च अभिषिञ्चेत् । तत्र खण्डावसाने सम्पूज्य, निवेद्य, नीराज्य, निर्माल्यं त्यक्त्वा, अन्यकलशैः अभिषिञ्चेत् । पूर्वादि प्रदक्षिणक्रमेण अभिषेकः ।

तत्तद्द्रव्यकलशं तत्तद्द्रव्यपूरणमन्त्रेण अभिषिच्य, शुद्धोदककलशाभिषेचन काले विष्णौ आत्वाहार्षसूक्तं, घर्मसूक्तं, विष्णुसूक्तं, विश्वकर्मसूक्तं, पुरुषसूक्तं च, अन्येषु तत्तद्देवता सम्बन्धिसूक्तानि च पठेत् । मङ्गलाङ्कुरपुष्पाणि बिम्बस्यमूर्ध्नि समर्प्य, परिकलशाभिषेकानन्तरं अन्ते ब्रह्मकलशाभिषेकः कार्यः ।

**ब्रह्मकलशाभिषेकः** - आचार्यः कलशमण्डपमागत्य, ब्रह्मकलशस्थदेवतां सम्पूज्य, नीराज्य, कुम्भेशकर्करीकलशस्थदेवताः पुष्पाञ्जलिं समर्प्य, नीराज्य, 'उत्तिष्ठ ब्रह्मणस्पते' इति मन्त्रेण कलशान् उत्थाप्य, मूर्तिपैः सन्धार्य, द्वारतोरणादिषु स्थितदेवान् उद्वासयेत् । ब्रह्मकलशधारकमूर्तिपां आहूयः, तत् हस्तौ प्रक्षाल्य, वाय्वग्निबीजाभ्यां दर्भेण संशोध्य, मूलेन गन्धानुलिप्य, प्रणवेन दर्भाक्षतान् निक्षिप्य, प्रणवव्याहृतिभिः ब्रह्मकलशं उत्थाप्य, मूर्तिपेन सन्धार्य, मङ्गलसूक्तानि पठन् वाद्यादिघोषैः सह प्रधानद्वारात् निर्गच्छेत् ।

**गमनक्रमः** - अग्रतो नीराजनं, ततः कर्करीधाराप्रसरः, अर्घ्यं वहन् कलशं स्पृशन् देशिकः, ततो ब्रह्मकलशः, तस्य पृष्ठतो कुम्भेशः, ततो यजमानः इत्येवं

रीत्या मण्डपात् निर्गत्य, द्वारि उपचारमन्त्रेण अर्घ्यं दत्त्वा, दक्षिणपादपुरस्सरं अतर्गत्वा, ब्रह्मकलशं बिम्बस्य पुरतः भद्रासने निधाय, कर्करीकलशजलेन त्रिः परिषिच्य, कुम्भेशकलशेनाभिषिञ्चेत् ।

ब्रह्मकलशस्थवस्त्रफलादिभिः अस्त्रमन्त्रेण नीराज्य, प्रणवमूलमन्त्रैः ब्रह्मकलशं अभिषिच्य, मन्त्राक्षरन्यासं, प्राणादिन्यासादिकं विधाय, मूलमन्त्रेण वस्त्रोपवीताभरणगन्धाक्षतपुष्पाणि समर्प्य, आवरणपूजां विधाय, दूपदीपौ सन्दर्श्य, पायसं निवेद्य, पूजाहोमादिकं विधाय, मन्त्रपुष्पं, महानीराजनं प्रदक्षिणनमस्कारं च कृत्वा, छत्रचामरादिराजोपचारैः सम्पूज्य, प्रार्थयेत् ।

नमस्तेस्तु जगत्पाल(ले) सर्वलोकहितप्रद(दे) ।
तन्त्रशास्त्रोक्तमार्गेण कृतं कर्म मया प्रभो(शुभे)॥
त्वं (त्वां) च न्यूनाधिकं दृष्ट्वा कर्मपूरय शाश्वत ।
अस्मिन् बिम्बे सन्निधानं कुरु देव(वि) दयानिधे (दयामये) ।॥

ततः तत्तद्देवालयस्थपूजाविधिना देवतां सम्पूज्य, परिषदां बलिं दत्त्वा, अन्नाराधनं कुर्यात् ।

## ॥ अवभृतविधिः ॥

अवभृताङ्ग पुण्याहवाचनं वाचयित्वा, स्थण्डिले अग्निं प्रतिष्ठाप्य, यात्राहोमं कुर्यात् । अन्वाधानम् -'देवतां' मूलमन्त्रेण समित्-चरु-आज्यद्रव्यैः अष्टाष्टवारं, पुनः गायत्रीमन्त्रेण अष्टोत्तरशतवारं आज्येन, 'स्वस्तिनो मिमीता' इत्यादि पञ्चमन्त्रैः विश्वान् देवान् एकैकवारमाज्येन, शकुन्तं कनिक्रदादि षड्भिर्मन्त्रैराज्येन...इत्यादि ।

गर्भगृहं गत्वा, 'देवतां' विधिवत् सम्पूज्य, यात्राहोमसम्पाताज्यं हुतभस्मं च बिम्बे समर्प्य, मूलमन्त्रेण मूलबिम्बात् 'देवतां' उत्सवबिम्बे आवाह्य, ऋष्यादिन्यासं, अङ्गन्यासं मन्त्राक्षरन्यासं च विधाय, ध्यात्वा उत्सवबिम्बं स्पृष्ट्वा, मूलमन्त्रं जपित्वा गोलकचिन्तनं कुर्यात् । गर्भगृहस्य ईशकोणे

अस्त्रकलशं संस्थाप्य पूजयेत् । संप्रार्थ्य, उत्सवबिम्बं मूर्तिपेन सन्धार्य, बहिर्निर्गत्य, परिषदेभ्यः बलिं दत्त्वा, क्षेत्रपालपूजां कुर्यात् ।

**क्षेत्रपालपूजा** - सङ्कल्प्य, शङ्खपूजां विधाय, ॐ पं पद्माय नमः इति पीठं सम्पूज्य, क्षेत्रपालं आवाह्य, मुद्राः सन्दर्श्य, दूर्वास ऋषिः । गायत्री छन्दः । क्षेत्रपालो देवता । ॐ क्षां हृदयाय नमः । क्षीं शिरसे स्वाहा । क्षूं शिखायै वषट् । क्षैं कवचाय हुम् । क्षौं नेत्रत्रयाय । क्षः अस्त्राय फट्

ध्यानम् - क्षेत्रपालं चतुर्बाहुं करण्डिमुकुटोज्ज्वलम् ।
दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् ॥
वामे करे दण्डधरं मुख्ये वामेतरे करे ।
दधानं तर्जनीमुद्रां पाशाङ्कुशममुख्ययोः ॥

ॐ क्षं क्षेत्रपालाय नमः इति मूलमन्त्रमष्टवारं सञ्जप्य, जलगन्धपुष्पाक्षत धूपदीपान् समर्प्य, बलिं दत्त्वा, नीराज्य, क्षेत्रपालेन आलयं सुरक्षितं ध्यात्वा, बिम्बं हये, गजे, याने, रथे वा आरोप्य, मङ्गलसूक्तानि पठन्, वाद्यादिघोषैः सह नद्यादितीर्थं प्राप्नुयात् । तीर्थसमीपे भद्रपीठे संस्थाप्य, वरुणहोमं कुर्यात् । गोमयलेपनादि विशुद्धया भूमौ नवकशानि संस्थाप्य तद्दक्षिणे स्थण्डिले अग्निं प्रतिष्ठाप्य, अन्वाधानम् - 'देवतां' मूलमन्त्रेण अष्टोत्तर शतवारं आज्येन, समस्तव्याहृत्या पूर्णाहुत्या आज्येन, पञ्चवरुणमन्त्रैः अष्टाष्टावारं आज्येन , शेषेण...इत्यादि ।

**तीर्थस्नानविधिः** - अथ गुरुः आचम्य, प्राणानायम्य, भूतोच्चाटनादिकं विधाय, सङ्कल्प्य, पीठपूजां विधाय, मूलमन्त्रेण पुनराचमनान्तोपचाराणि समर्पयेत् । वरुणहोमसम्पाताज्यं जले संसिच्य, निर्विषीकरणादि मुद्राः प्रदर्श्य, ॐ पं पद्माय नमः इति पीठं सम्पूज्य, वरुणं गङ्गादि तीर्थाभिमानिदेवताश्च आवाह्य, पञ्चोपचारैः सम्पूज्य,

ॐ श्रीं गङ्गे त्रिपथगे पुण्ये पवित्रे परमे शुभे ।
अनेकजन्मकृत्पापात् मां व्यपोहय जाह्नवि ॥

इति प्रार्थ्य, अघमर्षणसूक्तं पठेत् । पुरुषसूक्तादि पठन्, बिम्बेन सह तीर्थमध्यप्रदेशं गत्वा, उत्सवमूर्तिं ऊर्ध्वमुखं कृत्वा, त्रिवारं मज्जयेत् । बिम्बं गायत्रीमन्त्रेण हरिद्राचूर्णैः मूर्धादि पादान्तं उद्वर्त्य, पुनः त्रिवारं मज्जयेत् ।

बिम्बं नवकलशैः अभिषिच्य, तीर्थाभिमुखतया भद्रपीठे बिम्बं संस्थाप्य, 'सकलपापपरिहारद्वार प्रतिष्ठामहोत्सवस्य सम्पूर्ण पुण्यफलप्राप्त्यर्थं तीर्थस्नानं करिष्ये' इति सङ्कल्प्य, हरिं स्मरन् त्रिवारं मज्जयेत् । नववस्त्रं ऊर्ध्वपुण्ड्रादिकं सन्धार्य, 'देवतां' वस्त्रादिसर्वोपचारैः सम्पूज्य, नीराज्य, उत्सवबिम्बं हये, गजे, याने, रथे वा आरोप्य, वेदवाद्यादिघोषैः सह प्रदक्षिणापूर्वकं आलयं गत्वा, बलिबिम्बगतदेवतां मूलबिम्बे उद्वास्य, सम्पूजयेत् ।

सम्प्रोक्षणाविधिः - सप्तदशद्रव्यकलशान् संस्थाप्य, सम्पूज्य, अधिवासहोमं कुर्यात् । गर्भगृहं गत्वा, सङ्कल्प्य, पीठपूजां विधाय, देवतां आवाह्य, गोलकचिन्तनं, न्यासादिकं च विधाय, मूलमन्त्रेण पाद्याद्युपचारैः पूजयेत् । स्नानकाले सम्पाताज्यं बिम्बे समर्प्य, कलशेनाभिषिच्य, नैवेद्यकाले पायसादिकं निवेद्य पूजयेत् । अथ यजमानः ऋत्विग्भ्यः यथाशक्ति दक्षिणां दद्यात् । गुरवे वस्त्रविभूषणाभरणदक्षिणादिकं दत्त्वा, सन्तोष्य, नमस्कृत्वा, आशीर्वचनं स्वीकृत्य, कर्मसमर्पणं कुर्यात् ।

## ॥ महोत्सवपटलः॥

**उत्सवस्य महत्वम्** - उदित्युत्कृष्टवचनं सवोयज्ञमितिस्मृतम्।
उत्कृष्टस्सवोयस्मादुत्सवः परिचक्ष्यते ॥
सवस्सांसारिकं दुःखमुत्तरन्ति तदम्बुधिम्।
महिम्ना सुमहत्वाच्च महोत्सव इति स्मृतः ॥

**कालनिर्णयः** - अयनञ्चोत्तरं शस्तं चारम्भे तु हरेस्सवः।
दर्शेतु पौर्णमास्यां च द्वादश्यां श्रवणेपि वा ॥
अयने विषुवे चैव रोहिण्यां तु पुनर्वसा।
अन्येषु पुण्यतिथिषु ग्रहणादिक पर्वसु ॥
यजमानस्य जन्मर्क्षे प्रतिष्ठा ऋक्षके तथा।
निश्चित्य तीर्थदिवसं यागकर्म समारभेत् ॥
द्वादशाहं नवाहं वा सप्ताहं वा चतुर्मुख।
पञ्चाहं त्र्यहं चापि चैकाहं वा महोत्सवम् ॥
एकाहे च त्रयाहे च ध्वजकर्म न कारयेत्।
एकाह उत्सवः शैवः त्रियाहः गौण उच्यते।
पञ्चाहः भूतिकः प्रोक्तः सप्ताहः भौवनः स्मृतः ॥
नवाहः दैविकः प्रोक्तः श्रीकरः द्वादशाहरः।
एकविंशद्दिनः रौद्रमेते सप्तविधा भवेत् ॥
एकाहः ग्रामरक्षार्थः त्रियाहः लोकपावनः।
पञ्चाहः भूतरक्षार्थः सप्ताहः जन्तुपालनः ॥
नवाहः देवताप्रीत्यै द्वादशाहः अभूत्ति यम्।
एकादशाहमेवोक्तः लोकपालप्रियः भवेत् ॥

**उत्सवभेदाः**- नित्यं नैमित्तिकं काम्यमुत्सवं त्रिविधं स्मृतम् ।
पापापनोदनैकान्तं कर्तुरायुर्विवर्धनम् ॥
प्रजानामपि राष्ट्रन्य सर्वाभ्युदयसाधकम्।

दुर्भिक्षदुर्निमित्तादि घोराणां शान्तिदं परम् ॥
धर्मार्थकाममोक्षाणां पुरुषार्थप्रदं शुभम् ।
त्रिविधश्चोत्सवारम्भः कथ्यते तन्त्रकोविदैः ॥
मङ्गलाङ्कुरपूर्वः स्याद् ध्वजारोहणपूर्वकः ।
भेरिताडनपूर्वः स्यादुत्तमो मध्यमोऽधमः ॥
ध्वजमारोपयित्वा हि भेरीं रात्रौ तु ताडयेत् ।
उत्सवस्य तु रात्रौ तु बीजनिर्वापमुच्यते ॥
ध्वजारोहणपूर्वं तु प्रोक्तं वेदविदां वर ।
भेरी तु ताडयेत् पूर्वं ध्वजमारोपयेत्ततः ॥
अङ्कुराण्यर्पयेत्पश्चाद्भेरीताडनपूर्वकम् ।
ध्वजमारोपयेत्पश्चादङ्कुरार्पणपूर्वकम् ॥
प्रातः काले त्ववभृथं सायं काले समाचरेत् ।

महोत्सवदिनात् प्राक् नव, सप्त, पञ्च वा दिवसे शुभरात्रौ अङ्कुरार्पणं कुर्यात् । देवताप्रार्थनं, तोरणमुहूर्तं, उग्राणमुहूर्तं, पुण्याहवाचनं, देवनान्दीं च कृत्वा, आचार्याणां ऋत्विजां परिचारिणां च गन्धपुष्पवस्त्र-विभूषणोपहारादिभिः सन्तोष्य, ध्वजारोहणं, वेदपारायणं, भेरिताडनं, कौतुकबन्धनं च कुर्यात् ।

ध्वजारोहणविधिः **: पटलक्षणम् -**

पटं वक्ष्ये विशेषेण चित्रकर्म विशेषतः ।
दशहस्ताष्टहस्तं वा सप्तहस्तमथापि वा ॥
आयामर्धेन विस्तीर्णं शिखरं पुच्छसंयुतम् ।
निर्णोजितं खलीयुक्तं शोषितं लक्षणान्वितम् ॥
शिल्पिशास्त्रानुसारेण चित्रयेच्चित्रवित्तिभः ।
अर्धमर्धेन विस्तीर्णं पादेन कृतशेखरम् ॥
मानोन्मानसमायुक्तं नवतालेन कल्पयेत् ।
पटमध्ये लिखेद्देवं पञ्चवर्णेन शिल्पवित् ॥
छत्रचामरकुम्भादि मङ्गळानि ययाक्रमम् ।

पटस्य पार्श्वे पतिमान् यथाविथि समालिखेत् ॥

विष्णौ तन्त्रसारोक्त गरुडलक्षणं परिग्रहेत् । गरुडस्य भूषणानि -

अनन्तो वामकटको यज्ञसूत्रं तु वासुकिः ।
तक्षकः कटिसूत्रं तु कार्कोटक उरः स्थितः ॥
बिभ्राणं दक्षिणे कर्णे पद्मं सर्पभयङ्करम् ।
महापद्मं तथाऽन्यत्र शङ्खं शिरसि भोगिनम् ॥
भुजान्तरे गुलिकं स्यात् महापक्षं विचित्रयेत् ।
वर्णं प्रत्येकसर्पस्य चित्रयेठेदभेदितम् ॥
अनन्तः शुक्लवर्णाभो वासुकिः शोणितारुणः ।
पीताभस्तक्षको ज्ञेयः कार्कोटकस्तु धूम्रकः ॥
शङ्खस्तुहिनवर्णाभो गुलिकः श्यामवर्णकः ।
पद्मः पद्मसमानाभः महापद्मस्तु पीतकः ॥
नैकवर्णैर्लिखेद्देवं पञ्चायुधं शुभावहम् ।
चक्रं शङ्खं गदां खड्गं शार्ङ्गं शरं च भूसुराः ॥
पटोर्ध्वे विलिखेत् पश्चादधः पावकमण्डलम् ।
दक्षिणे चित्रद्वयेद्वासे स्वस्तिकं लक्षणान्वितम् ॥
पटशेषं तु श्यामेन सितभिन्नेन वा द्विजाः ।
लेपयेदन्तभागेन पुष्पवल्लरिसंयुतम् ॥
शिल्पिना दीक्षितेनैतत् विधापयेत् सदा शुभम् ।

दुर्गायां - सम्पाद्यैवं ध्वजपटं पटं कार्पाससम्भवम् ॥
वर्णानि सङ्ग्रहत्पश्चात्पृथक् पात्रे विचक्षणः।
शाङ्खमञ्जनकं चवै गैरिकं जातिलिङ्गकम् ॥
श्यामं चैतानि वर्णानि पञ्चालोप्य जलेन च ।
कृत्वा तु वर्णसंस्कारं हेमतूलिकया गुरुः ॥
सुलग्ने लेपयेत्तत्र सिंहं कुशलशिल्पिना ।
सर्वावयवसंयुक्तं कमलासनसंस्थितम् ॥
विस्तारसमलाङ्गूलं शुभदंष्ट्राङ्किताननम् ।

आरक्तकृष्णनयनं पीतनासिकयान्वितम् ॥
शुभ्रैः क्रूरनखैर्युक्तं रक्तजिह्वालकान्वितम् ।
रक्तकर्णद्वयोपेतं पीतकेसरशोभितम् ॥
श्वेतपुच्छाङ्घ्रिसंयुक्तं सर्वाभरणशोभितम् ।
घण्टाचामरसंयुक्तं छत्रसंवृतमस्तकम् ॥
पूर्णकुम्भद्वयोपेतं वेत्रद्वयसमन्वितम् ।
एवं विलिख्य विधिना मनोज्ञालक्षणान्वितम् ॥

अजे पटमध्ये पद्मासनोपरि श्वेतहंसं, तदूर्ध्वभागात् आरभ्य परितः पद्मदर्पणादि मङ्गलानि विलिख्येत् । "पितामहध्वजे दण्डः स्मृतस्ताम्रमयो बुधैः । पद्मवर्णा पताका स्यात्पङ्कजस्य समीपगा" इति पक्षान्तरम् । 'प्राणस्य हरिणः प्रोक्तः स एव मरुतामपि' इति वचनानुसारेण हनुमति पटमध्ये पद्मासनोपरि सुवर्णमृगं पुष्पदन्तगजं वा, परितः गदादर्पणादि मङ्गलानि विलिख्येत् । 'पुष्पदन्तो बृहत्सास्नः षड्दन्तः पुष्पदन्तवान्' इति ।

शिवे - ध्वजमेवं समारोप्य तन्मध्ये वृषमालिखेत् ।
शङ्खवर्णनिभं देहं शृङ्गौ चापसमप्रभे ॥
दाडिमीकुसुमप्रख्यं श्रोत्रयोरुभयोरपि ।
सितकृष्णद्विनेत्रं स्याद्भ्रुवौ मञ्जरसन्निभे ।
आस्यमङ्घ्रितलं बीजं वृषणं खुरमेव च ॥
जपापुष्पनिभाकारमङ्गुलं पिङ्गसन्निभम् ।
अङ्गुलाङ्ग्रातिकृष्णं स्याद्देवमालिख्यबुद्धिमान् ॥
जानुनी नूपुरच्छन्नं ग्रीवा चामरलम्बिता ।
किङ्किणीमालमाभूष्य करे घण्टावलम्बितम् ॥
वृषोच्चद्वे वा भागैकं भागं कुर्याद्वृषासनम् ।
दले षोडशभिर्युक्ते कर्णिकाकेसरैर्युतम् ॥
द्विपार्श्वे चामरौ दीपौ पूर्णकुम्भं तु वामके ।
अधश्चोर्ध्वं लिखेद्विद्वान् लक्षणेन समन्वितम् ॥
नानावर्णसमायुक्तं पुन्नागकुसुमं लिखेत् ।

शिल्पिशास्त्रोक्तमार्गेण स्थितं वा शयितं तु वा ॥

कुमारे - अधमं सप्तहस्तन्तु मध्यमं नवहस्तकम् ।
उत्तमं दशहस्तं स्याद्दैर्घ्यं ध्वजपटस्य तु ॥
आयामं ध्वजवस्त्रस्य नवरुद्रकलाकरम् ।
दैर्घस्य पञ्चभागैकं पटविस्तारमुच्यते ॥
अथवान्यप्रकारेण भूतषट्सप्ततालकम् ।
विस्तारार्धन्तु शिखरं पुच्छं विस्तारमात्रकम् ॥
वेत्रद्वयसमायुक्तं पुच्छद्वयसमायुतम् ।
दुकूलपट्टदेवाङ्गैरथ कार्पासकेन वा ॥
वस्त्रेणैव नवेनैव कुर्यात् द्वजपटं बुधः ।
श्वेतं विप्रध्वजं प्रोक्तं रक्तं क्षत्रध्वजाम्बरम् ॥
पीतं वैश्यस्तु शूद्राणां सर्वेषां श्वेतवर्णकम् ।
श्वेतवर्णध्वजपटं राजराष्ट्राभिवर्धनम् ॥
शुभायादिसमायुक्तं मयूरं विलिखेद्बुधः ।
मयूरं वा गजं वापि कुक्कुटं वा महामुने ॥
पटाग्रे विलिखेत् सर्वलक्षणसंयुतम् ।
पद्मपीठमधो लिख्यं पार्श्वे दीपौ समालिखेत् ॥
तदूर्ध्वे शक्तिमालिख्य छत्रचामरमूर्ध्वके ।
अधोभागे द्विभागे तु मङ्गलाष्टकमालिखेत् ॥
मयूरं श्यामवर्णं तु गजं तु श्वेतवर्णकम् ।
कुक्कुटं रक्तवर्णं तु तथा युक्त्या लिखेत्बुधः ॥
सर्वालङ्कारसंयुक्तं सर्वाभरणभूषितम् ।
आलिखेत् प्रतिमां तत्तत् प्रतिमालक्षणोक्तितः ॥

सूर्ये - कर्णिकां सूत्रयेन्मध्ये कमलस्य खे शुभाम् ।
केसरं कर्णिकां तुल्यं तस्यापद्विगुणां दलम् ॥
मण्डलं वृत्तपत्राग्रं तच्छिष्टाब्जपुरस्थितम् ।
षड्विंशतिबीजपत्रं चतुर्विंशतिकेसरम् ॥

कर्षितं च सिताम्भोजं चतुःशृङ्गं शिखोज्वलम् ।
ततोऽपि बाह्यमपरं चतुरस्रं तु सूत्रयेत् ॥
चतुर्ग्रीवं विदिक्कोणं रथस्यावयवं शुभम् ।
पुरावरणमध्ये तु ह्यरुणं कुन्दरावृतम् ॥
तर्पयन्तं विनिष्क्रान्ते द्वे द्वे रेखेचद्विके ।
पुनस्तिर्यग्गतेग्रे तु स्वनिष्क्रान्त प्रमाणतः ॥
पुनस्तावद्यं निष्क्रम्य विलम्नमुखयेतु ते ।
पद्मगर्भा द्विनिष्क्रान्तां वारुण्यां मकराननम् ॥
यष्टिं पद्मायतां कुर्याद्रथस्य कर्णिकामिताम् ।
यष्ट्यग्रे सप्तसंलग्नान् वाजिनः पार्श्वयोर्द्वयोः ॥
तदधस्तावतीयष्टेर्मूलद्दर्थस्मतोऽरुणः ।
क्षोणी च पीठिमित्यक्तातथान्तः शेषपन्नगाः ॥

गणपतौ - द्वयांशन्तुत्त्यजेन्मूले एकांशे मूषिकं लिखेत् ।
पृष्ठे चाङ्कुशं विलिख्य तदूर्ध्वे रक्तछत्रकम् ॥
चामरं शशिसूर्यञ्च दक्षवामकपार्श्वयोः ।
अधः कुम्भं शङ्खमाल्यं दर्पणं धूपदीपकम् ॥
एवं ध्वजपटं गृह्येत् मण्डपं तत्तदग्रके ।

प्रशस्तवृक्षाः - अन्तःसारः चन्दनादिः प्रशस्तः स्तम्भकल्पने ।
क्रमुकादि बहिस्सारः सोपि शक्तो मुनीश्वराः ॥
किंशुकाद्यं तु निस्सारं वर्जयेत् स्तम्भकर्मणि ।
पलाश-खदिराश्वत्थ-वटचन्दनदारवः ॥
सालं-माधूक-तालं वा सारस्रकं अथापि वा ।
चम्पको वा द्विरष्टादि त्रिगुणावधिनाहयुक् ॥
स्वभाव-नाह-संयुक्तस्वक्सारद्रुमनिर्मितः ।
ध्वजदण्डस्समाख्यातो ध्वजयष्टिश्च कथ्यते ॥

कलशस्थापनं ध्वजाधिवासहोमं च विधाय, आचम्य गर्भगृहं प्रविश्य तत्र मूलबिम्बे 'देवतां' सम्पूज्य, मूलबिम्बात् उत्सवबिम्बे आवाह्य, पाद्यादिभिः पूजयेत्। अथ गुरुः पटं विस्तार्य देवाय प्रदर्श्य,

विष्णौ - भगवान् पुण्डरीकाक्ष सर्वेश्वरजगन्मय।
त्वया यथा तु कथितं तथा कर्तुं न शक्यते॥
अस्वतन्त्र्यादसामर्थ्यात् श्रद्धादीनामभावतः।
त्वदात्मनाद्य सर्वेषां न्यूनाधिक्योपशान्तये॥
समालोक्य नेत्राभ्यां शीतलाभ्यां पटस्थितम्।
सर्वदोषापहारिभ्यां वैनतेयं प्रसादय॥

अन्येषु - नमस्तेऽस्तु जगत्पाल(ले) भक्तानुग्रहकारक (रिणी)।
यथा शास्त्रेषु कथितं तथा कर्तुं न शक्यते॥
अस्वतन्त्रादसामर्थ्यात् श्राद्धादीनामभावतः।
त्वदात्मनाद्य सर्वेषां न्यूनाधिक्योपशान्तये॥
समालोक्य नेत्राभ्यां शीतलाभ्यां पटस्थितम्।
सर्वदोषापहारिभ्यां वाहनं तु प्रसादय।

इति सम्प्रार्थ्य पटे वाहनावाहनं कुर्यात्।
ॐ महाबल महाबाहो वैनतेय वयोधिप।
सन्निधत्स्व पटे तुभ्यं नमः प्रणवमूर्तये॥

इति विष्णौ पटे गरुडाऽवाहनमन्त्रः। अन्येषु तत्तत् वाहनमन्त्रेण पटे आवाहनं चरेत्। उत्सवबिम्बं चित्रपटं च यानादिभिः आरोह्य, वाद्यादिघोषैः सह प्रासादप्रदक्षिणापूर्वक ध्वजस्तम्भपर्यन्तमागत्य, ध्वजस्तम्भे सम्पाताज्यं समर्प्य, कलशजलैः सम्प्रोक्ष्य, मध्यकुम्भजलेन पटं ध्वजस्तभं च प्रोक्षयेत्। चित्रपटं गुणे संयोज्य पीठे संस्थाप्य वाहनं आवाह्य सम्पूज्य नीराज्य, विष्णौ - उत्सवान्तं महाविष्णोः सन्निधत्स्व पटोदरे।
भगवन् पक्षिभूपाल पालयास्मान् विलोकय॥

अन्येषु - उत्सवस्यावसानान्तं सन्निधत्स्व पटोदरे।
शुभं कुरु विघ्नं हर पालयास्मान् विलोकय॥ इति प्रार्थयेत्।

सङ्कल्प्य फलताम्बूलदानानि विधाय मङ्गळवेदवाद्यादिघोषैः सह ध्वजारोहणं विधाय, षोडशोपचारैः पूजयेत् । परितः इन्द्रादीन् अर्चयित्वा, पायसान्नं, अपूपं विविधफलानि च निवेद्य, बिलिं दत्त्वा सम्प्रार्थयेत् ।

विष्णौ - अस्माद्दिनात्समारभ्य यावत्तीर्थदिनान्तिकम् ।
सन्निधिं कुरु पक्षीन्द्र राज्ञो जनपदस्य च ॥
ग्रामस्य यजमानस्य वैष्णवानां महात्मनाम् ।
तुष्टये पुष्टये चैव सर्वशत्रुजयाय च ॥
अपमृत्युहरार्थाय वैनतेय प्रसीद ॐ ।

इति स्तोत्रेण पुष्पाञ्जलिं विकिरेत् । अन्येषु -

अस्माद्दिनात्समारभ्य यावत्तीर्थदिनान्तिकम् ।
सन्निधिं कुरु राष्ट्रस्य राज्ञो जनपदस्य च ॥
ग्रामस्य यजमानस्य वैष्णवानां महात्मनाम् ।
तुष्टये पुष्टये चैव सर्वशत्रुजयाय च ॥
अपमृत्युहरार्थाय प्रसीद त्वं दयानिधे । इति स्तोत्रः ।

**भेरी पूजा** - झल्लरी वल्लरीचैव वेणुवीणादिभिः सह ।
तालकाहलघण्टादिशङ्खमर्दलसंयुतम् ॥
भेरिमासाद्य विधिवत् ध्यान्यपीठे तु विन्यसेत् ।

ध्वजपीठसमीपे गोमयेन भूमिं विशोध्य, रङ्गवल्यादिभिः तद्भूमिं भूषयित्वा, पीठं तत्र निवेशयेत् । बलिबिम्बं तत्पीठे संस्थाप्य, यथान्यायं सुपूज्य, पुरतः स्थण्डिलं विरचय्य तत्रभेरीं संस्थाप्य, अस्त्रमन्त्रेण प्रोक्ष्य नववस्त्रेण संवेष्ट्य, पुण्याहजलेन प्रोक्ष्य, ॐ पं पद्माय नमः इति पीठं सम्पूज्य देवताः आवाहयेत् । भेरिमध्ये देवीं त्रिगुणां भारतीमयीं दक्षिणे विष्णुं उत्तरे महालक्ष्मीं कोणे वायुं च आवाह्य मूर्तित्रयान् सन्ध्यात्वा गन्धादिभिः सम्पूज्य, निवेद्य नीराज्य देवताकीर्तनापूर्वकं कोणेन त्रिवारं भेरिं ताडयेत् । [गन्धादिभिः सुशोभितं कुलोद्भवं सर्वताळज्ञवादकं समाहूय, वस्त्रादिकं दद्यात् । स च प्रक्षाळितहस्तयोः कुसुमाञ्जलिं

गृहित्वा, भेर्युपरि निक्षिप्य, आचार्यस्य आज्ञया भेरीं स्कन्दे समारोप्य, लक्ष्मीनारायणं स्मरन्, तान् सर्वान् परिवारान् उत्सवार्थं समाहूय, विशेषतः बलिताळान् वादयेत् ॥

वैकुण्ठवासिनो ये च सत्यलोकनिवासिनः ।
रुद्रलोकस्थिता ये च तथा स्वर्लोकवासिनः ॥
पातालादिषु लोकेषु ये वासन्ति महीतले ।
अन्येपि ये च लोकेषु सर्वत्राह्वानमाचरेत् ॥
ऋषीणां अग्निकल्पानां देवानां दितिजन्मनाम् ।
सर्वेषां च समाह्वानं परिवारपदान्वितम् ॥
आयुधैः सह देवीभिः वाहनैश्च महोत्सवे ।
आह्वानं कारयेद्धीमान् सेवार्थं मधुविद्विषः ॥
इन्द्रः सुरगणाधीशः श्यामलः कुलिशायुधः ।
शच्यान्वितो गजारूढः सर्वाभरणभूषितः ॥
उत्सवाय महाविष्णोः समागच्छतु पार्श्वगैः ।
अग्निः शक्तिकराङ्गोजो मेषवाहस्त्रिलोचनः ॥
स्वर्णालङ्कारसंयुक्तो रक्तः स्वाहासमन्वितः ।
उत्सवाय महाविष्णोः समागच्छतु पार्श्वगैः ॥
कालः कालपयोदाभो दण्डभृन्महिषस्तथा ।
भूषितश्चारुभूषाभिर्निजशक्तिसमन्वितः ॥
उत्सवाय महाविष्णोः समागच्छतु पार्श्वगैः ।
निरृतिर्मानुषारूढः शोणनेत्रः कृपाणधृक् ॥
दंष्ट्राकरालवदनो भूषणाढ्यः सशक्तितः ।
उत्सवाय महाविष्णोः समागच्छतु पार्श्वगैः ॥
वरुणः शरदाभाभः पाशभृत् वनितान्वितः ।
सरत्नमालहाराभिः शोभित मकराश्रितः ॥
उत्सवाय महाविष्णोः समागच्छतु पार्श्वगैः ।
वायुर्मृगवरारूढो विविधाभरणोज्वलः ॥

भारतीसहितो देवः गदाहस्तो रविप्रभः ।
उत्सवाय महाविष्णोः समागच्छतु पार्श्वगैः ॥
[शिवादिषु - वायुर्मृगवरारूढो विविधाभरणोज्वलः ।
साङ्कुशः सहितः शक्त्या धूमधूम्रनिभ प्रभुः ॥
उत्सवाय च देवस्य समागच्छतु पार्श्वगैः ।]
सोमश्चाश्वरथारूढः शुक्लवस्त्रः कुमुदवान् ।
दिव्यमाल्याम्बराद्यैश्च शोभितो रोहिणीयुतः ॥
उत्सवाय महाविष्णोः समागच्छतु पार्श्वगैः ।
ईशानो वृषभारूढः शूलहस्तोऽहिभूषणैः ॥
शुद्धस्फटिकसङ्काशो निजशक्तिसमन्वितः ।
उत्सवाय महाविष्णोः समागच्छतु पार्श्वगैः ॥
अनन्तो वनैतेयस्य हलहस्तः सितप्रभः ।
मकुटाद्यैरलङ्कारै शोभितः कमलान्वितः ॥
उत्सवाय महाविष्णोः समागच्छतु पार्श्वगैः ।
ब्रह्मा हंससमारूढः पद्महस्तः सुरार्चितः ॥
तप्तचामीकरप्राख्यः सरस्वत्या समन्वितः ।
उत्सवाय महाविष्णोः समागच्छतु पार्श्वगैः ॥
अन्ये च ये विबुधाः सर्वे स्वर्गलोकनिवासिनः ।
सगणाः सपरिवाराः सालङ्काराः सवाहनाः ॥
उत्सवाय महाविष्णोः समागच्छतु सायुधा ।
यक्षाश्च राक्षसाश्चैव गन्धर्वा किन्नरास्तथा ॥
सिद्धाश्च गुह्यकाश्चैव ये चान्येऽप्सरसां गणाः ।
उत्सवाय महाविष्णोः समागच्छन्तु ते मुदा ॥
समुद्राः पर्वताश्चैव लङ्का द्वीपा नदी नदाः ।
सशिष्याश्चैव योगीन्द्रः व्यासाद्या मुनयश्च ये ॥
उत्सवाय महाविष्णोः समागच्छन्तु ते मुदा ।
ब्रह्मलोकनिवासाश्च विष्णुलोकनिवासिनः ॥

शिवलोकनिवासाश्च ये चान्ये चास्य कर्मिणः ।
उत्सवाय महाविष्णोः समागच्छतु ते मुदा ॥
स्वर्गे च मानुषे लोक नागलोके तथवै च ।
वसन्ति प्राणिनो ये च पूर्णस्थिरचरात्मकाः ।
उत्सवाय महाविष्णोः समागच्छन्तु ते मुदा ॥

देविषु महाविष्णोः स्थाने महादेव्या इति योजयेत् । नृत्तं तालं स्वरं च सम्प्रकाश्य, तथा अलयप्रदक्षिणापूर्वकं बलिबिम्बं गर्भगृहे नीत्वा, महापूजां विधाय, ब्राह्मणान् भोजयेत् ।

**वाद्याः** - मृदङ्गभेरिपटह कहालाशङ्खनिःस्वनैः ।
दण्डहतकारहतनखाहतपरस्पराहतमुखभेदेन पञ्चविध्यैर्ध्वनिभिरित्यर्थः ।
मर्दळं काहळं शङ्खं मृदङ्गं वल्लकीं तया ।
पटहं झल्लरीं कांश्य ताळमिन्द्रादिषु क्रमात् ॥

**नित्यक्रियाविशेषः** - नित्यं अधिवासहोमं कलशस्नपनं कालत्रयेषु विशेषपूजा, परिवारबलिं भोजनं च कारयेत् । रथपूजादिकं विधाय, पूजितरथे उत्सवबिम्बं आरोप्य, सम्पूज्य, आलयप्रदक्षिणं ग्रामप्रदक्षिणादिकं कृत्वा, रात्रौ भूतबलिं कुर्यात् ।

**वाहनक्रमः विष्णौ** - प्रथमेहनि देवस्य हंसवाहनमिष्यते ।
द्वितीयदिवसे सिंहं तृतीये तु खगेश्वरः ॥
चतुर्थेहनि शेषश्च पञ्चमेचाञ्जनीसुतः ।
षष्टे तु सूर्यचन्द्रौ च रथारोहं तु सप्तमे ॥
अष्टमे तु तुरङ्गं स्यान्नवमे गजमेव च ।

दुर्गायाम् - प्रथमे शिबिकायानं द्वितीयेशिखियानकम् ।
डोलयानं तृतीये च चतुर्थे पुष्पमण्टपम् ॥
पञ्चमे वृषयानं स्याद्गजयानं तु षष्ठके ।
सप्तमे सिंहयानं स्यादष्टमे रथयानकम् ॥
नवमे दिवसे प्रोक्तामश्वयानं मनोरमम् ।

इत्युक्तानि च यानानि दिवसानां यथाक्रमम् ॥

शिवे - प्रथमं शिबिकायानं द्वितीयं तु मयूरकम् ।
डोलयानं तृतीयं स्यात् वाजियन्त्रं चतुर्थकम् ॥
पञ्चमे वृषयानं स्यात् सिंहयानं तु षष्ठकम् ।
सप्तमं गजयानं स्यात् यानक्रम इतीरितः ॥
महारथोत्सवं कुर्यात् तदंत्यदिवसे तथा ।

कुमारे - प्रथमेऽहनि मञ्चं स्यात् द्वितीये भूतवाहनम् ।
सिंहारूडं तृतीयेऽह्नि गजारूडं चतुर्थके ॥
पञ्चमे च मयूरं स्यात् षष्ठे वै कल्पतोरणम् ।
सप्तमेऽह्नि रथारूडं वाजी स्यादष्टमेऽहनि ॥
नवमेऽहनि मञ्चं स्यात् दिंनवाहनमीरितम् ।
दिवाकाले सदा मञ्चं रात्रिकाले तु वाहनम् ॥

गणेशे - प्रथमे शिबिका चवै द्वितीय कल्पवृक्षकः ।
तृतीये सिंहयानञ्च चतर्थे भूतवाहनम ॥
पञ्चमे मूषिकारूढं गजयानन्तु षष्टकम् ।
सप्तमं वाजियानञ्च अष्टमं यालियानकम् ॥
नवमन्तु रथारूढं दशमं चित्रमञ्चकम् ।
यानक्रममिति प्रोक्तं क्रमणे वै समाचरेत् ॥

गर्भगृहं गत्वा, 'देवतां' विधिवत् सम्पूज्य, मूलमन्त्रेण मूलबिम्बात् उत्सवबिम्बे आवाह्य, ऋष्यादिन्यासं अङ्गन्यासं मन्त्राक्षरन्यासं च विधाय, ध्यात्वा उत्सवबिम्बं स्पृष्ट्वा, मूलमन्त्रं जपित्वा, गोलकचिन्तनं कुर्यात् । सम्प्रार्थ्य, स्वस्तिवाचनं कृत्वा, उत्सवबिम्बं मूर्तिपेन सन्धार्य, बहिर्निर्गत्य परिषदेभ्यः बलिं दत्त्वा, क्षेत्रपालपूजां कुर्यात् ।

स्वस्तिमन्त्राः - स्वस्तयेऽस्तु सदा विष्णुः स्वस्तयेऽस्तु चतुर्मुखः ।
स्वस्तयेऽस्तु सदावह्निः स्वस्तयेऽस्तु यमः सदा ॥
स्वस्तयेऽस्तु निर्ऋत्याख्यः स्वस्तये वरुणोऽस्तु नः ।

शिवलोकनिवासाश्च ये चान्ये चास्य कर्मिणः ।
उत्सवाय महाविष्णोः समागच्छतु ते मुदा ॥
स्वर्गे च मानुषे लोक नागलोके तथवै च ।
वसन्ति प्राणिनो ये च पूर्णस्थिरचरात्मकाः ।
उत्सवाय महाविष्णोः समागच्छन्तु ते मुदा ॥

देविषु महाविष्णोः स्थाने महादेव्या इति योजयेत् । नृत्तं तालं स्वरं च सम्प्रकाश्य, तथा अलयप्रदक्षिणापूर्वकं बलिबिम्बं गर्भगृहे नीत्वा, महापूजां विधाय, ब्राह्मणान् भोजयेत् ।

वाद्याः - मृदङ्गभेरिपटह कहालाशङ्खनिःस्वनैः ।
दण्डहतकारहतनखाहतपरस्पराहतमुखभेदेन पञ्चविध्यैर्ध्वनिभिरित्यर्थः ।

मर्दळं काहळं शङ्खं मृदङ्गं वल्लकीं तया ।
पटहं झल्लरीं कांश्य ताळमिन्द्रादिषु क्रमात् ॥

नित्यक्रियाविशेषः - नित्यं अधिवासहोमं कलशस्नपनं कालत्रयेषु विशेषपूजा, परिवारबलिं भोजनं च कारयेत् । रथपूजादिकं विधाय, पूजितरथे उत्सवबिम्बं आरोप्य, सम्पूज्य, आलयप्रदक्षिणं ग्रामप्रदक्षिणादिकं कृत्वा, रात्रौ भूतबलिं कुर्यात् ।

वाहनक्रमः विष्णौ - प्रथमेहनि देवस्य हंसवाहनमिष्यते ।
द्वितीयदिवसे सिंहं तृतीये तु खगेश्वरः ॥
चतुर्थेहनि शेषश्च पञ्चमेचाञ्जनीसुतः ।
षष्टे तु सूर्यचन्द्रौ च रथारोहं तु सप्तमे ॥
अष्टमे तु तुरङ्गं स्यान्नवमे गजमेव च ।

दुर्गायाम् - प्रथमे शिबिकायानं द्वितीयेशिखियानकम् ।
डोलयानं तृतीये च चतुर्थे पुष्पमण्टपम् ॥
पञ्चमे वृषयानं स्याद्गजयानं तु षष्ठके ।
सप्तमे सिंहयानं स्यादष्टमे रथयानकम् ॥
नवमे दिवसे प्रोक्तामश्वयानं मनोरमम् ।

इत्युक्तानि च यानानि दिवसानां यथाक्रमम् ॥

शिवे - प्रथमं शिबिकायानं द्वितीयं तु मयूरकम् ।
डोलयानं तृतीयं स्यात् वाजियन्त्रं चतुर्थकम् ॥
पञ्चमे वृषयानं स्यात् सिंहयानं तु षष्ठकम् ।
सप्तमं गजयानं स्यात् यानक्रम इतीरितः ॥
महारथोत्सवं कुर्यात् तदंत्यदिवसे तथा ।

कुमारे - प्रथमेऽहनि मञ्चं स्यात् द्वितीये भूतवाहनम् ।
सिंहारूडं तृतीयेऽह्नि गजारूडं चतुर्थके ॥
पञ्चमे च मयूरं स्यात् षष्ठे वै कल्पतोरणम् ।
सप्तमेऽह्नि रथारूडं वाजी स्यादष्टमेऽहनि ॥
नवमेऽहनि मञ्चं स्यात् दिनवाहनमीरितम् ।
दिवाकाले सदा मञ्चं रात्रिकाले तु वाहनम् ॥

गणेशे - प्रथमे शिबिका चवै द्वितीय कल्पवृक्षकः ।
तृतीये सिंहयानञ्च चतर्थे भूतवाहनम ॥
पञ्चमे मूषिकारूढं गजयानन्तु षष्टकम् ।
सप्तमं वाजियानञ्च अष्टमं यालियानकम् ॥
नवमन्तु रथारूढं दशमं चित्रमञ्चकम् ।
यानक्रममिति प्रोक्तं क्रमणे वै समाचरेत् ॥

गर्भगृहं गत्वा, 'देवतां' विधिवत् सम्पूज्य, मूलमन्त्रेण मूलबिम्बात् उत्सवबिम्बे आवाह्य, ऋष्यादिन्यासं अङ्गन्यासं मन्त्राक्षरन्यासं च विधाय, ध्यात्वा उत्सवबिम्बं स्पृष्ट्वा, मूलमन्त्रं जपित्वा, गोलकचिन्तनं कुर्यात् । सम्प्रार्थ्य, स्वस्तिवाचनं कृत्वा, उत्सवबिम्बं मूर्तिपेन सन्धार्य, बहिर्निर्गत्य परिषदेभ्यः बलिं दत्त्वा, क्षेत्रपालपूजां कुर्यात् ।

स्वस्तिमन्त्राः - स्वस्तयेऽस्तु सदा विष्णुः स्वस्तयेऽस्तु चतुर्मुखः ।
स्वस्तयेऽस्तु सदावह्निः स्वस्तयेऽस्तु यमः सदा ॥
स्वस्तयेऽस्तु निर्ऋत्याख्यः स्वस्तये वरुणोऽस्तु नः ।

स्वस्तयेऽस्तु सदा वायुः स्वस्तयेऽस्तु धनेश्वरः ॥
स्वस्तयेऽस्तु सदेशानः स्वस्तयेऽस्तु मरुद्गणाः ।
स्वस्तये सन्तु वसवो रुद्राश्च स्वस्तये तथा ॥
आदित्याः स्वस्तये सन्तु मुनयः स्वस्तये तथा ।
गन्धर्वाः स्वस्तये सन्तु स्वस्तये सन्तु किन्नराः ॥
स्वस्तये सन्तु नागाश्च स्वस्तये सन्तु पन्नगाः ।
स्वस्तये सन्तु विश्वेशाः स्वस्तयेप्सरसः सदा ॥
स्वस्तये सन्तु नद्यश्च स्वस्तये सन्तु सागराः ।
स्वस्तये सन्तु शैलाश्च वेदाश्च स्वस्तये तथा ॥
स्वस्तये मातरः सन्तु पितरः स्वस्तये तथा ।
देवपारिषदाः सर्वे स्वस्तये सन्तु नः सदा ॥
स्वस्ति भागवतानां तु स्वस्ति चाप्यग्रजन्मनाम् ।
स्वस्ति वै वैष्णवानां तु स्वस्ति चैव गवामपि ॥
स्वस्ति वै स्थावराणं तु जङ्गमानां तथैव च ।
स्वस्ति चैवाथ मन्त्राणां स्वस्ति वै कर्मणामपि ॥
बलिं नयामि देवस्य विष्णोस्तस्मै नमो नमः ।
(उत्सवेस्मिन् महादेव्या बलिभिः स्वस्ति वर्धताम् ।
महादेव्या स्थाने महेशस्य कपीशस्य इत्यादि योज्यम्)

**बलिक्रमः** - द्वारपालादिदेवताः जलगन्धपुष्पदूपदीपादिभिः सम्पूज्य नैवेद्यकाले पूर्वोत्तरजलपूर्वकघृताक्तमाषानेन बलिं दत्त्वा, महाबलिपीठे 'आगच्छतामरगणाः प्रागाशां' इत्यादिमन्त्रैः (लक्ष्म्यादिषु 'ये भूताः पुरःसदो निशाचरेन्द्राः' इत्यादि) पूर्वोक्तक्रमेण, अन्ते आलयस्य परितः भूतेभ्यः बलिं दद्यात् ।

**बलिपात्रलक्षण** - बलिपात्रं भवेन्मुख्यं तत्रतिष्ठन्ति देवताः ।
सौवर्णं राजतं वापि तथा ताम्रमयं तु वा ॥
पात्रमेवात्र सम्प्रोक्तं यथावित्तानुसारतः ।
वृत्तं वा चतुरश्रं वा बलिपात्रं तु कारयेत् ॥

पद्मपत्रं लिखेत् सम्यक् कर्णिकाकेसरान्वितम्।
तद् द्वादशदलं तत्र दले द्वादशदेवता: ॥
मासाश्च द्वादशाप्रोक्ता विष्ण्वाद्या: क्रमयोगत:।
रुद्रादित्यस्तु वसवश्चाश्विनौ मरुतस्तथा॥
माहेन्द्रसहितायान्तु द्रष्टव्यस्ते यथादिशम्।
अत्र वै कर्णिकायां तु मध्ये नारायण: स्थित: ॥
स्थाने तिष्ठन्ति सर्वत्र सर्वेऽय बलिपात्रगा: ।

चरुपात्रलक्षण - चरुपात्रं भवेत् ताम्रं तदलाभे तु मृण्मयम्॥

बलिद्रव्या: - व्रीहयश्च यवा मुद्गा: प्रियङ्गुतिलवेणुका: ।
श्यामाकाश्चापि नीवारा: प्रशस्ता: बलिकर्मणि॥
तण्डुलैस्तु बलि: प्रातर्मध्याह्ने चरुणैव तु।
पुष्पैरेव बलि: सायं सर्वदाप्येमिरेव वा॥
तण्डुलान् क्षालयेत् तोयैर्ब्रह्मबीजेन साधक: ।
पात्रेतु प्रक्षिपेत् पश्चान्मूलमन्त्रेण मन्त्रवित् ॥
अत्र पुष्पद्वयं वर्ज्यं रक्तं कृष्णं तथाऽशुभम्।

गमनक्रम: - रङ्गे वा शिबिकायां वा परिचारकमूर्धसु ।
आरोप्यालङ्कृतान् देवान् वितानेन समन्वितम् ॥
छत्र चामर संयुक्तं नानाध्वजसमन्वितम् ।
गीतानृत्त समायुक्तं वाद्यध्वनि समन्वितम् ॥
धूपदीपसमायुक्तं प्रदक्षिणं समाचरेत् ।

बलिदानक्रम: - तत्तनाम तु देवानां चतुर्थ्या नामसान्वितम्।
प्रणवादि समुच्चार्य बलिदानं समाचरेत्॥
इदमर्घ्यं बलिरयं इदं ते उदकं त्विति।
तोयं पूर्वोत्तरं दद्यात् तालनृत्तस्वरान्वितम्॥
गन्धं पुष्पं तथा धूपं दीपमर्घ्यं बलिस्तत: ।
उदकं च प्रदातव्यं प्राङ्गणे बलिकर्मणि॥

द्वारपार्श्वे द्वारपालान् सद्वाराभिमुखो यजेत्।
मण्डपाग्रे वाहनं तु तदभिसंमुखो यजेत्॥
आचार्यस्य मुखं पूर्वं अर्केन्दुबलिदानके।
कामपीठे बलिं दत्वा पश्चिमाभिमुखो गुरुः॥
ब्राह्म्यादिसप्तमातॄणां दक्षिणाभिमुखो यजेत्।
श्रियादिशक्तयश्चैव पश्चिमाभिमुखो यजेत्॥
पूर्वः स्कन्दो गणेशश्च दुर्गाश्चैवोत्तरामुखः।
वागीश्वर्यादिमातॄणां दक्षिणाभिमुखो यजेत्॥
दक्षिणाभिमुखो दद्यात् धनेशाय बलिं ततः।
निर्माल्यधारी पीठे तु तदभिसंमुखो हरेत्॥
आचार्यस्य मुखं पूर्वं इन्द्रस्य बलिदानके।
दक्षिणाभिमुखाचार्यो वीतिहोत्रबलिं हरेत्॥
उत्तराभिमुखो दद्यात् यमस्य बलिदानके।
आचार्यः पश्चिमे स्थित्वा मुखमीशानतः क्रमात्॥
निर्ऋतिपीठे बलिं दद्यात् वारुणं पीठसन्निधौ।
वरुणपीठे बलिं दद्यात् पूर्वाभिमुखतः क्रमात्
आचार्यस्य मुखं पूर्वं वातस्य बलिदानके।
सोमपीठे बलिं दद्यात् दक्षिणाभिमुखो बुधः॥
पूर्वाभिमुखो आचार्यः ईशपीठे बलिं चरेत्।
अनन्तोत्तराभिमुखो दद्यात् ब्रह्माणं पीठसन्निधौ ॥
ब्रह्माणं च बलिं दत्त्वा बाह्ये पुनर्बलिं चरेत् ।
सभान्तर्द्वारि बहिश्च द्वारपालान्क्रमाद्यजेत्॥
सपूर्वं पश्चिमं चैव उत्तराभिमुखं पुनः।
ईशानं प्राङ्मुखं चैव दक्षिणाभिमुखं तथा॥
दक्षिणं पश्चिममुखं सभूताष्टेषु च क्रमात् ।
महापीठे बलिं दत्वा सपूर्वोक्तक्रमेण च॥
पीठमध्ये बलिं दद्यात् पूर्वाभिमुखतो बुधः ।

क्षेत्रपालं समभ्यर्च्य ततो भूतबलिं चरेत् ॥

बलिदेवताः : विष्णौ - परिवाराः कृताः सर्वे पुनः श्रीविष्णुपार्षदाः ।

द्वाराग्रबलिपीठेऽर्च्याः पक्षीन्द्रश्च तदग्रतः ॥

नन्दं सुनन्दं गरुडं प्रचण्डं चण्डमेव च ।

जयं च विजयं चैव कुमुदं कुमुदेक्षणम् ॥

वज्रनाभो हरीशश्च प्रासादद्वारि बाह्यतः ।

अर्धमण्डपकद्वारे शङ्खचक्रोत्तमाङ्गिनौ ॥

गोपुरस्योत्तरे साले मन्दिराभिमुखो रविः ।

तस्यैव दक्षिणे साले चन्द्रमाः परिकल्प्यते ॥

आग्नेय्यां कामदेवश्च याम्ये तु चतुराननः ।

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥

वाराह्यैन्द्री च चामुण्डी याम्ये वै सप्तमातरः ।

गजाननस्तु नैर्ऋत्ये वारुणे च षडाननः ॥

वायौ दुर्गा तथा सौम्ये वागीश्वर्यादिमातरः ।

वागीश्वरी क्रिया कीर्तिर्लक्ष्मीः सृष्टिस्तथैव च ॥

विद्या कान्तिरिति ज्ञेयाः शङ्खचक्रगदाधराः ।

पुनर्धनाधिपो सौम्ये मध्ये सोमेशयोरपि ॥

विष्वक्सेनः समभ्यर्च्यः ईशान्ये शङ्करस्तथा ।

इन्द्रादयोः लोकपालाः पूज्याः स्वाशासु चाङ्गणे ॥

पद्मपाणिं गदापाणिं गोपुरद्वारि कल्पयेत् ।

बहिश्च गोपुरद्वारि दुर्जयं प्रबलं तथा ॥

चक्री च मुसली शङ्खी खड्गी चैव गदाधरः ।

शार्ङ्गी पद्मी तथा वज्री पूज्याः दिव्यास्त्रधारिणः॥

उपेन्द्रः प्राकृतः पुण्यः पुष्करो विश्वभावनः ।

असुरघ्नः कृतान्तश्च भूतनाथोऽष्टमः स्मृतः ॥

अङ्गणे पीठिकास्थाने कुमुदादीन् प्रकल्पयेत् ।

कुमुदः कुमुदाक्षश्च पुण्डरीकश्च वामनः ॥

शङ्कुकर्णः सर्पनेत्रः सुमुखस्सुप्रतिष्ठितः ।
पीठमध्ये हरिसेनः ऐशान्ये क्षेत्रपालिने ॥

बलिसमर्पणमन्त्र – ये समस्तं जगद्व्याप्य तिष्ठन्ति बलिकाङ्क्षिणः ।
विष्णुपारिषदास्त्वस्मिन् गृह्णन्तुबलिमुत्तमम् ॥

[अष्टोतरशतपारिषदेश्वराः - कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ।
शङ्कुकर्णः सर्पनेत्रः सुमुखः सुप्रतिष्ठितः ॥
चण्डश्चापि प्रचण्डश्च विश्वकर्मा वृषाकपिः ।
उपेन्द्रः प्राकृतः पुण्यः पुष्करो विश्वभावनः ॥
वासुभद्रः सुभद्रश्च विश्वनेत्रः प्रतापनः ।
विश्वभुग्विश्वभृद्विश्वः सर्वनेत्रः सहस्रधृक् ॥
सहस्रमूर्धा सर्वात्मा एकशृङ्गो विचक्षणः ।
असुरारिः कृतान्तश्च कृतो विश्वसहस्रभूः ॥
रथाङ्गी शार्ङ्गभृद्धन्वी वैनतेयो विहङ्गमः ।
वायुरुज्ज्वलगो रेणुर्महासत्वः समीहन ॥
सर्वकृत् सत्यवान् सत्यः सत्ववान् सर्वनाशनः ।
सम्भवः प्रभविष्णुश्च समस्तो व्यस्त एव च ॥
समाधानो महाभागो भागधेयी भगः शुचिः ।
सुभगः सूक्ष्मकेशश्च गुडाकेशः प्रकाशनः ॥
वर्तुलाक्षो विशालाक्षो वक्राक्षः कृष्णलोचनः ।
वीरसेनाधनो विष्णुरक्षयः क्षयकृत् क्षयी ॥
पावनो वामदेवश्च महादेवो हलायुधः ।
भूनाथोऽथ जगन्नाथो भूतेशो भूतनाशनः ॥
अक्षुद्रः पक्वसत्वश्च निराशीर्निष्परिग्रहः ।
विभागो भावनश्चापि चक्रपाणिर्गदायुधः ॥
भीषणो मोहनश्चापि विमानः समयी कृशः ।
कुबेराक्षो महायक्षः पद्माक्षः कृष्णलोहितः ॥
विश्वरूपो विरूपश्च कामः कामनिबर्हणः ।

विघ्नेशो गणनाथश्च देवलः कर्कटी जटी ॥
रक्ताक्षो लोहिताक्षश्च वसुर्वसुपतिस्तथा ।
समयी साधकश्चापि प्रथमः प्रथमेश्वरः ॥
अनिरुद्धः प्रजानाथः सर्वगः सर्वतोमुखः ।
वज्रपाणिर्गदापाणिः शार्ङ्गपाणिः शतक्रतुः ॥
अङ्कुशो वामभागश्च वीर्यवान् वीर्यवत्तरः ।
मानवास्याश्च केचित् प्लवगास्यास्तथापरे ॥
पिङ्गलास्यास्तथा केचित् चटकास्यास्तथा परे ।
दात्यूहवदनाः केचित् कृकरास्यास्तथा परे ॥
केचिदश्वमुखाश्चापि हस्तिवक्त्रास्तथापरे ।
एते चान्ये बहवो सन्ति विष्णोः परिषदाः स्मृताः ॥
अन्येषामपि चैतेषां भृत्या भूतगणाः स्मृताः ।
सहस्रं तु गणाः प्रोक्ताः प्रत्येकं विष्णुसंज्ञया ॥
गणाख्याः कोटिसंख्याता अस्मिन्तन्त्रे प्रकीर्तिताः ॥]

लक्ष्म्यां – चण्डी चैव प्रचण्डी च प्रथमद्वारपार्श्वयोः ।
मण्डपे वैनतेयं वा सिंहं वाऽपि यथारुचि ॥
याम्ये द्वारि बलाकिनी तथा च वनमालिनी ।
जया च विजया चैव पश्चिमद्वारपालिके ॥
विभीषिका शाङ्करी च उत्तरद्वारपार्श्वयोः ।
सावित्री चैव वाग्देवी प्रासादद्वारि बाह्यतः ॥
तथा च मण्डपद्वारे गङ्गा च यमुना स्मृताः ।
गोपुरस्योत्तरे साले मन्दिराभिमुखो रविः ॥
तस्यैव दक्षिणे साले चन्द्रमाः परिकल्प्यते ।
आग्नेय्यां कामदेवश्च याम्ये तु चतुराननः ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराह्यैन्द्री च चामुण्डी याम्ये वै सप्तमातरः ॥
गजाननस्तु नैर्ऋत्ये वारुणे च षडाननः ।

वायौ दुर्गा तथा सौम्ये वागीश्वर्यादिमातरः ॥
वागीश्वरी क्रिया कीर्तिर्लक्ष्मीः सृष्टिस्तथैव च ।
विद्या कान्तिरिति ज्ञेयाः शङ्खचक्रगदाधराः ॥
पुनर्धनाधिपो सौम्ये मध्ये सोमेशयोरपि ।
सुमुखिश्च समभ्यर्च्यः ईशान्ये शङ्करस्तथा ॥
इन्द्रादयोः लोकपालाः पूज्याः स्वाशासु चाङ्गणे ।
तथा च गोपुरद्वारि शङ्खपद्मनिधी उभे ॥
पद्मिन्यै च कुमुदिन्यै गोपुरद्वारि बाह्यतः ।
प्राच्यादि बलिपीठेषु अर्चयेद्वनमालिकाम् ॥
शचीं बलाकिनीं कालनायिकां च विभीषिकाम् ।
शीतलां शाङ्करीं सम्पद्देवीं च तदनन्तरम् ॥
ज्येष्ठां विद्यां तथा श्रद्धां कान्तिं सृष्टिं तथैव च ।
क्रियां क्षमां जयां चैव दिक्ष्वष्टसु प्रकल्पयेत् ॥
धृतिं लज्जां च सावित्रीं मायां शुद्धिं च तुष्टिकाम् ।
शान्तिं कीर्तिं दलाष्टेषु मध्ये तु भूतनायिकाम् ॥
यजेदेताश्चतुर्हस्ताः पद्ममालासुशोभनाः ।
चक्रशङ्खाञ्जलिधराश्चासीनाः पद्मविष्टरे ॥

बलिसमर्पणमन्त्र - ये समस्तं जगद्व्याप्य चरन्ति बलिकाङ्क्षया ।
लक्ष्मीपरिषदः सर्वे गृह्णन्तूपहृतं बलिम् ॥

दुर्गायाम् - नित्योत्सवे तु दुर्गायाः पूर्वादिद्वारपालिकाः ।
जया च विजया रौद्री भीषणी शूलिनी प्रभा ॥
अपराजिता जयन्ती च कन्याः वेत्रासिधारिकाः ।
सिंहाय मण्डपे वज्रनखदंष्ट्रायुधाय ते ॥
महासिंहाय हूं स्वाहा नमश्चेति बलिं क्षिपेत् ।
चण्डिका अम्बिका चैव प्रसादद्वारि बाह्यतः ॥
तथा च मण्डपद्वारे शङ्खिणी पुष्पिणी इति ।
मण्डपस्योत्तरे साले मन्दिराभिमुखो रविः ॥

तस्यैव दक्षिणे साले चन्द्रमाः परिकल्प्यते ।
आग्नेय्यां कामदेवश्च याम्ये तु चतुराननः ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा।
वाराह्यैन्द्री च चामुण्डी याम्ये वै सप्तमातरः ॥
गजाननस्तु नैर्ऋत्ये वारुणे च षडाननः ॥
वायौ दुर्गा तथा सौम्ये वागीश्वर्यादिमातरः ।
वागीश्वरी क्रिया कीर्तिर्लक्ष्मीः सृष्टिस्तथैव च ॥
विद्या कान्तिरिति ज्ञेयाः शङ्खचक्रगदाधराः ।
पुनर्धनाधिपो सौम्ये मध्ये सोमेशयोरपि ॥
मुण्डिनिश्च समभ्यर्च्या ईशान्ये शङ्करस्तथा ।
इन्द्रादयोः लोकपालाः पूज्याः स्वाशासु चाङ्गणे ॥
ह्लादिन्यै चापि मोदिन्यै द्वार्यान्तर्गोपुरस्यतु ।
कात्यायिन्यै विजयन्त्यै गोपुरद्वारि बाह्यतः ॥
काली कराली विरजा मन्दरा विन्ध्यवासिनी।
सुप्रभा सिंहवक्त्रा चाप्यष्टमी दैत्यमर्दिनी ॥
ब्रह्मघोषा सुघोषा च कुमारी वरवर्णिनी ।
आर्या च हेमवर्णा च कृत्तिका चाभयप्रदा ॥
प्रागाद्ताशास्थिता चाष्टौ ब्राह्मी कुमुदके स्थिता।

बलिसमर्पणमन्त्र - ये समस्तं जगद्व्याप्य चरन्ति बलिकाङ्क्षया ।
दुर्गापरिषदः सर्वे गृह्णन्तूपहृतं बलिम् ॥

अजे - सत्यो धर्मः प्रियोद्भवः यज्ञश्च विजयस्तथा ।
यज्ञभद्रो भवश्चैव विभवश्च क्रमाद्यजेत् ॥
मण्डपे तु समभ्यर्च्य हंसं पूर्णेन्दुसन्निभम् ।
बहिर्द्वारि समभ्यर्च्य धातारं च विधातृकम् ॥
अभयः पद्मपाणिश्च मण्डपद्वारपार्श्वयोः ।
गोपुरस्योत्तरे साले मन्दिराभिमुखो रविः ॥
तस्यैव दक्षिणे साले चन्द्रमाः परिकल्प्यते ।

वह्नौ कामो यमे ब्रह्मा नैर्ऋते स्याद्गजाननः ॥
वारुणे स्कन्दो गायत्री वायौ सौम्ये धनाधिपः ।
ईशाने शङ्करं तत्र मरीचिं तु प्रकल्पयेत् ॥
इन्द्रादयोः लोकपालाः पूज्याः स्वाशासु चाङ्गणे।
वरदो दण्डपाणिश्च गोपुरद्वारि पूजयेत् ॥
अद्ध्यश्च ध्रुवो वैतुण्डः श्रमः शान्तस्तथैव च ।
धनुषश्चैव प्रत्यूषः प्रभासश्चाष्टमः स्मृतः ॥
मरीच्यादीन्महापीठे दिशाष्टेषु प्रकल्पयेत् ।
मरीचिश्च वसिष्ठश्चाङ्गिरसोऽत्रिपुलस्तयः ॥
क्रतुश्च दक्षो मित्रश्च मध्ये प्रजापतिस्स्मृतः ।

बलिसमर्पणमन्त्र - ये भूताः वेदगर्भस्य पार्षदाः बलिकाङ्क्षिणाः ।
तृप्यन्तु ते मुदं यान्तु गृह्णन्तु बलिमुत्तमम् ॥

सरस्वत्याम् - नित्योत्सवे सरस्वत्या मेधाद्या द्वारपालिकाः ।
मेधा प्रज्ञे प्रभा विद्ये धीधृती गिरि च क्रमात् ॥
स्मृतिबुद्धी च यष्टव्ये द्वाःस्थे द्वारि चतुष्टये ।
सरस्वतीवाहनाय हंसायेत्यग्रमण्डपे ॥
गोपुरस्योत्तरे साले मन्दिराभिमुखो रविः ।
तस्यैव दक्षिणे साले चन्द्रमाः परिकल्प्यते ॥
वह्नौ कामो यमे ब्राह्मी नैर्ऋते स्याद्गजाननः ।
वारुणे स्कन्दो गायत्री वायौ सौम्ये धनाधिपः ॥
ईशाने शङ्करः तत्र मत्यै च प्रक्षिपेत् बलिम् ।
इन्द्रादीशानपर्यन्तं बलिं दद्यात् स्वकर्मसु ॥
कृत्यै च प्रतिभायै च गोपुरद्वारि कल्पयेत् ।
ततो द्वितीयहारायामष्टदिक्षु स्थिताः क्रमात् ॥
दिग्गजास्तु बलिं तेभ्यः स्वाख्याभिः प्रक्षिपेदपि ।
ऐरावतः पुण्डरीकः कुमुदाञ्जनवामनाः ॥
पुष्पदन्तः सार्वभौमः सुप्रतीकस्तथाऽष्टमः ।

क्रतुर्दक्षः सुवः स्तव्यः कालो कामश्च धनुषः ॥
कुरुमानष्टमस्ते तु पीठस्याष्टदिशि स्थिताः ।
मधुमान्वै कुमुदकैः रोचमानस्तदूर्ध्वतः ॥

बलिसमर्पणमन्त्रः - ये समस्तं जगद्व्याप्य चरन्ति बलिकाङ्क्षया ।
सरस्वतीपारिषदा गृह्णन्तूपहृतं बलिम् ॥

हनुमति - वज्रदन्ताय शान्ताय चानिवेगाय मण्डपे ।
धर्मिणे वशिने पृष्ठे वेगिने द्वारि दक्षिणे ॥
बहिर्द्वास्थौ सुगन्धाय सुमन्ताय बलिं हरेत् ।
गोपुरस्योत्तरे साले मन्दिराभिमुखो रविः ॥
तस्यैव दक्षिणे साले चन्द्रमाः परिकल्प्यते ।
वह्नौ कामो यमे ब्रह्मा नैर्ऋते स्याद्गजाननः ॥
वारुणे स्कन्दो भारती वायौ सौम्ये धनाधिपः ।
ईशाने शङ्करं तत्र पिशङ्गिनं प्रकल्पयेत् ॥
इन्द्रादयोः लोकपालाः पूज्याः स्वाशासु चाङ्गणे ।
गोपुरद्वारि अभर्च्य वीरमन्तसुमन्तयोः ॥
दैत्यान्तकाय दक्षाय बहिश्चोभयपार्श्वयोः ।
कपीशो वज्रदेहश्च दीर्घदेहो हरीश्वरः ॥
सुमुखो रक्तनेत्रश्च हेमवानूर्ध्वरोमकः ।
बहिरावरणे चैषां दिग्विदिक्षु बलिं हरेत् ॥
हरीशं हर्षणं हन्तं सरमन्तं सनातनम् ।
सुगन्धिनं लङ्घिनं च चलनं चालनात्मजम् ॥
पीठोर्ध्वे ऊर्ध्वसेनं तु ध्वजे क्षेत्रेश्वरास्तथा ।
दिने दिने त्रिसन्ध्यासु सर्ववाद्यरवैः सह ॥
यजेद्देवं चाञ्जनेयं गणाश्च बलिमाहरेत् ।
वैष्णवसूक्तवत्तेषु गुरुः कुर्याद्विचक्षणः ॥

बलिसमर्पणमन्त्र - ये समस्तं जगद्व्याप्य तिष्ठन्ति बलिकाङ्क्षिणः ।
प्राणपारिषदास्त्वस्मिन् गृह्णन्तुबलिमुत्तमम् ॥

सदाशिवे - नित्योत्सवे महेशस्य नन्द्याद्याः द्वारपालकाः ।
नन्दीश्वरो महाकालो हेरम्बश्च भृङ्गिस्तथा ॥
दुर्मुखः पाण्डुरश्चैव सितश्चासितश्च यजेत् ।
वृषभायाग्रमण्डपे बलिं क्षिप्त्वा यथाविधि ॥
शूलपाणिं टङ्कपाणिं प्रसादद्वारि बाह्यतः ।
मण्डपद्वारि सम्पूज्य मन्दारं भैरवं तथा ॥
गणेशो वीरभद्रश्च महाशास्ता च षण्मुखः ।
धनेश्वरश्च चण्डश्च भास्करश्च यथाक्रमम् ॥
इन्द्रादीशानपर्यन्तं बलिं दद्यात् स्वकर्मसु ॥
ततोन्तर्गोपुरद्वारि तीक्ष्णनेत्रमृगास्ययोः ।
भृङ्गीशं च महाकालं भूतनाथं महीधरम् ॥
पर्वतेशं गुहेशं च कालपाशं कपालिनम् ।
तद्बहिस्तत्पारिषदाः महापीठे बलिस्तथा ॥
भूतिदो दुर्निरीक्षश्च भीमरूपः सुलोचनः ।
सुमुखश्च सुबाहुश्च त्रिशिरात्रिभुजस्तथा ॥
अधः पिङ्गळसेनश्च हरसेनस्तदूर्ध्वतः ।
तद्बाह्ये भूतपीठेषु दिग्विदिक्स्थापितेषु च ॥
रुद्रेभ्यो पूर्वतो दद्यान्मातृभ्यो दक्षिणे तथा ।
गणेभ्यः पश्चिमे भागे यक्षेभ्यश्चोत्तरे बलिम् ॥
ग्रहेभ्यश्च तथैशान्यां असुरेभ्योऽग्निगोचरे ।
पालाश्यां पलभक्षेभ्यो नागेभ्यो वायुगोचरे ॥
नक्षत्रराशिवर्गेभ्यस्तथा विश्वगणाय च ।
ऐशान्यां बलिदानं स्यात् तत्रैव क्षेत्रपालिने ॥

बलिसमर्पणमन्त्र - ये समस्तं जगद्व्याप्य तिष्ठन्ति बलिकाङ्क्षिणः ।
ते रुद्रपार्षदाः सर्वे गृह्णन्तुबलिमुत्तमम् ॥

पार्वत्याम् - जया च विजया प्राच्यामजिता चापराजिता ।

विभक्ता मगङ्ला चैव मोहिनी स्तम्भिनी तथा ॥
वृषभायाग्रमण्डपे बलिं क्षिप्त्वा यथाविधि ।
पालिन्यै चापि प्लाविन्यै प्रासादद्वारि बाह्यतः ॥
गणेशो वीरभद्रश्च महाशास्ता च षण्मुखः ।
धनेश्वरश्च सुभगा भास्करश्च यथाक्रमम् ॥
इन्द्रोऽग्निश्च यमश्चैव निर्ऋतिर्वरुणस्तथा ।
वायुः सोमश्चैवाशनी दिक्ष्वष्टसु प्रकल्पयेत् ॥
त्रिशूलिन्यै च खड्गिन्यै दत्त्वा निष्क्रम्य गोपुरात् ।
कुन्दी कुमुदिनी बाह्ये विद्यमाली विभूषणी ॥
कलुषी घोषणी चैव करवीराक्षि रेवती ।
तद्बहिस्तत्पारिषदाः महापीठे बलिस्तथा ॥
देहली पेषणी चुल्ली खण्डनोलूखली तथा ।
मुसली मुद्गरी देवी वर्धमानी मनोन्मनी ॥

बलिसमर्पणमन्त्र - ये समस्तं जगद् व्याप्य चरन्ति बलिकाङ्क्षया ।
गौरीपारिषदाः सर्वे गह्णन्तूपहृतं बलिम् ॥

सुब्रह्मण्ये - द्वारपालं ततो वक्ष्ये श्रुणुष्व मुनिपुङ्गव ।
गुहस्य गर्भगेहस्य चतुर्दिक्षु द्वाररक्षकाः ॥
सुदेहा सुमुखा रक्षा कृपा सत्यविचक्षणाः ।
अभया कामरूपाश्च खड्गखेटकृपाणयः ॥
सुब्रह्मण्यवाहनाय मयूरायाग्रमण्डपे ।
वज्रपाणिं शक्तिपाणिं प्रासादद्वारि बाह्यतः ॥
महामण्डपिकाद्वास्थौ विजयो जय इत्यपि ।
गोपुरस्योत्तरे साले मन्दिराभिमुखो रविः ॥
तस्यैव दक्षिणे साले चन्द्रमाः परिकल्प्यते ।
वह्नौ कामं यमे वल्लीं पुनस्सेनापतिं तथा ॥
नैर्ऋत्ये चैव शास्तारं वारुणे विशिखं तथा ।
ज्येष्ठां च पूजयेत् तत्र विघ्नं तु वायुकोणके ॥

कुबेरं देवसेनां च चोत्तरे दिशि कल्पयेत् ।
बृहस्पतिं तथैशान्यां गजादिभ्यः बलिं हरेत् ॥
गजाग्नी च यमश्चैव रक्षो वरुणवायवः ।
सोमः सुमित्रो वसुवान् परिवाराः प्रकीर्तिताः ॥
वीरबाहुमहावीरौ गोपुरद्वारपार्श्वयोः ।
पद्मश्चैव महापद्मो गोपुरद्वारि बाह्यतः ॥
उन्माथश्च प्रमाथश्च सुभासो भास्वरो मणिः ।
सुमणिश्च तथा ज्योतिर्ज्वालाजिह्वास्तथाऽष्टमः ॥
ततस्तु दशमूर्तिभ्यो बलिपीठे बलिं क्षिपेत् ।
परिघो विकटो भीमः उत्क्रोशो वज्रवल्कलौ ॥
दण्डहस्तौ वर्धनश्च कुमुदो नन्दनस्तथा ।
स्कन्दसेनोऽथ दशमः पीठे पद्मस्य मध्यतः ॥

पुनः महापीठस्यष्टदिक्षु -

कुमुदः कुन्दरश्चाथ डम्बराडम्बरौ पुरः ।
वक्रोऽनुवक्रः सुमुखः सुव्रतो वह्निदिग्गताः ॥
सत्यसन्धः सुप्रभश्च शुभकर्मा च लङ्गिली ।
याम्येऽथ नैर्ऋत्ये कालो बलश्चातिबलोऽलसः ॥
सुवर्चाश्चतिवर्चाश्च काञ्चनातिधनावपि ।
पश्चिमे त्वथ वायव्ये मेघमाली स्थिरस्तथा ॥
अतिथिरश्चोच्छ्रितश्च चतुर्थस्त्वतिथिप्रियः ।
उदीच्यां मेघनादश्च सङ्ग्रहोन्माथविग्रहाः ॥
ऐशान्ये पुष्पदन्तश्च शङ्कुकर्णजयावपि ।
महाजयश्च चत्वारः कोटिकोटिगणेश्वराः ॥

बलिसमर्पणमन्त्र - ये भूताः स्कन्दसेनाद्याः स्कन्दपारिषदेश्वराः ।
ते तृप्यन्तु मुदं यान्तु तेभ्यस्तेभ्यो नमो नमः ॥

दिवाकरे - दण्डी च पिङ्गलश्चैव आनन्दश्चान्तकस्तथा ।
चित्रो विचित्रो ज्ञातव्यः किरणाक्षः सुलोचनः ॥

अरुणो मण्डपस्याग्रे सप्तच्छन्दस्तुरङ्गमाः ।
शुक्लो जयन्तो विजयो नैकवर्णो हुताशनः ॥
हुतार्चिर्व्यापकश्चैव अश्वाः सप्त प्रकीर्तिताः ।
उग्रप्रशान्तनामानौ प्रासादद्वारि बाह्यतः ॥
वह्नौ गणेश्वरो याम्ये रेवन्तश्च यमस्तथा ॥
नैर्ऋत्ये चैव राज्ञी स्यात् वारुणे यमुना पुनः ।
लेखकवीरं सम्पूज्य निक्षुभा वायुगोचरे ॥
अश्विनौ च तथा सौम्ये पुनः पूज्यो धनेश्वरः ।
तेजश्चण्डं तथैशान्यां यजेन्निर्माल्यधारिणम् ॥
लोकेशस्थानगास्त्वष्टौ ग्रहाः सोमादयः क्रमात् ।
अन्तःस्थौ गोपुरद्वाःस्थौ पक्षौ शुक्लासितौ यजेत् ॥
तथैव तद्बहिष्ठावाप्ययने दक्षिणोत्तरे ।
ततो द्वादशराशिभ्यो यथास्थानं प्रदक्षिणम् ॥
मेषादिभ्यो बलिं दद्यान्मासेभ्यश्चापि तैः सह ।
मधुमाधवशुक्रेभ्यः शुचये नभसे तथा ॥
नभस्याय तथेषोर्जसहोभ्यश्च ततः परम् ।
सहस्यायाथ तपसे तपस्याय बलिं क्षिपेत् ॥
ततस्तु बलिपीठस्य परितोऽष्टदिशास्वपि ।
क्षिपेद् गणानामष्टानां स्वाख्यागणनमोन्तकम् ॥
गन्धर्वाश्चासुरगणाः पितृरक्षोगणस्ततः ।
नागामरुद्गणास्तद्वद् यक्षभूतगणास्तथा ॥
पद्मपत्रे ऋषिगणाः रविसेनस्तदूर्ध्वतः ।

बलिसमर्पणमन्त्र - ये समस्तं जगद् व्याप्य चरन्ति बलिकाङ्क्षया ।
सूर्यपारिषदाः सर्वे गह्णन्तूपहृतं बलिम् ॥

गणपतौ - नित्योत्सवे गणेशस्य अविघ्नाद्याश्च द्वरपाः ।
अविघ्नो विघ्नराजश्च सुवक्त्रो बलवान्तथा ॥
गजकर्णश्च गोकर्णो सुसौम्यशुभदायकौ ।
कल्पयेत् पूर्ववत् सम्यग् द्वाराग्रे मूषिकं च वै ॥
द्वारपौ च बहिर्द्वारि विकटं भीममेव च ।
वह्नौ विघ्नो यमे पुष्टिः महाशास्ता च नैर्ऋते ॥

भृङ्गीशः पश्चिमे वायौ तारो नागे धनेश्वरः।
कुम्भोदरं तथा सोमे यजेन्निर्माल्यधारिणम्॥
ईशान्येऽङ्कुशी पूज्या बलिं तत्र विनिक्षिपेत्।
विश्वरूपं विशालाक्षं अक्षयं मदविभ्रमम्॥
उन्मत्तं ललितं भीमं तीक्ष्णदंष्ट्रं यथाक्रमम्।
अस्याष्टमूर्तीशान्वाष्ट पीठानिन्द्राद्यधिष्ठितम्॥
विमलश्च सुबाहुश्च गोपुरद्वारि पूजयेत्।
ततस्तु मध्यहारायामष्टदिक्षु गणेश्वराः॥
वज्रदन्तो गजास्यश्च भीमश्च महिषाननः।
मेघनादो विरूपाक्षो विकटो बहुभक्ष्यभुक्॥
पीठस्याष्टदलेषूक्ता अमोदाद्यष्टमूर्तयः।
आमोदश्च प्रमोदश्च सुमुखो दुर्मुखस्तथा॥
अविघ्नो विघ्नराजश्च भक्ष्याशी पञ्चहस्तकः।
भूतेशः कर्णिकायाभ्यां ऐशान्ये क्षेत्रपालिने॥

बलिसमर्पणमन्त्र - ये समस्तं जगद् व्याप्य चरन्ति बलिकाङ्क्षया।
विघ्नपारिषदाः सर्वे गह्णन्तूपहृतं बलिम्॥

क्षेत्रपाले अष्टमूर्तयः - अनलश्चाग्निकेशश्च कालो घण्टारवस्तथा।
महाक्रोधाह्वयश्चाथ पिशिताशनसंज्ञितः॥
पिङ्गलाक्षोऽर्ध्वकेशश्च चतुर्थ्या ठवयान्तकाः।

भूतबलिमन्त्राः - उत्सवेषु प्रवृत्तेषु दृष्ट्वा तुष्टिमवाप्नुयुः।
ये भूताः उत्तमगुणाः तेभ्यस्तेभ्यश्चायं बलिः॥
विनियुज्य च कार्येषु फलार्थं विन्दते च ये।
राजसा मध्यमगुणाः तेभ्यस्तेभ्यश्चायं बलिः॥
कुर्वन्ति विघ्नं ये भूताः धर्मकार्येषु ये भुवि।
ये हरन्ति च पुण्यानि तेभ्यस्तेभ्यश्चायं बलिः॥

अष्टादशगणाः - आदित्या वसवो रुद्राः साध्याश्च मरुतस्तथा।

विश्वेदेवाश्च पितरो मातरो गृहदेवताः ॥
अङ्गिराश्चाश्विनीदेवौ तथा स्त्रीदेवतागणाः ।
लोकेशा वास्तुदेवाश्च नक्षत्राणि च पार्षदाः ॥
तत्वानां पतयश्चैव उत्तमाः परिकीर्तिताः ।
सिद्धाश्च ऋषयो नागाः असुरा राक्षसा अपि ॥
यक्षविद्याधराश्चैव सौरभेयाश्च गुह्यकाः ।
गन्धर्वाप्सरसश्चैव प्रजानां पतयस्थता ॥
मर्त्याश्चैवाथ रोहिण्यो गणस्ते मध्यमाः स्मृताः ।
भूताः प्रेताः पिशाचाश्च कूश्माण्डाः प्रमथा अपि ॥
स्कन्दो बालग्रहाश्चैव तैतलाश्चैव भैरवाः ।
किन्नराश्चैव वेताला अपस्मारास्तथैव च ॥
योगिन्यश्चैव डाकिन्यः शाकिन्यश्चैव चारिकाः ।
मोहिन्यश्चैव सर्वेषु जघन्याः परिकीर्तिताः ॥

आलयप्रदक्षिणपूर्वक अन्तर्गत्वा 'देवतां' उत्सवबिम्बात् मूलबिम्बे उद्वास्य पूजयेत् ।

स्वरनृत्ततालादयः – चण्डादिद्वारपालानां सर्वेषामृषभस्वरः ।
नृत्तं तु वैजयन्ती स्यान्मल्लतालमुदाहृतम् ॥
विष्णुक्रान्तं खगेशस्य नृत्तं तालं तु गारुडम् ।
स्वरस्तु मध्यमः प्रोक्तः विष्वक्सेनस्य कथ्यते ॥
नृत्तं स्वस्तिकामित्युक्तं बलितालर्षभस्वरौ ।
तद्वनृत्तं गणेशस्य भद्रतालं तु पञ्चमः ॥
स्वरश्च कुम्भतनय दुर्गायाः धैवतः स्वरः ।
सर्वमङ्गलनृत्तं स्यात् भद्रतालमुदीरितम् ॥
ब्रह्मणो ब्रह्मतालं स्यान्नृत्तं स्यात्सर्वमङ्गलम् ।
स्वरास्तु मध्यमस्तस्य शुनासिरस्य कथ्यते ॥
विलासनृत्तमुदितं स्वरः षड्ज उदाहृतः ।
समतालं तथा वह्नेः कथ्यते ऋषभस्वरः ॥

बद्वावतालं नृत्तं तु सर्वतोभद्रमीरितम् ।
यमस्य खेटकं नृत्तं गान्धारः स्वर उच्यते ॥
तालं तु शृङ्गिणी प्रोक्ता निर्ऋतेर्मध्यमः स्वरः ।
मल्लताळं यथा नृत्तं कथितम् चक्रमण्डलम् ॥
वरुणस्यस्वरः प्रोक्तः पञ्चमो मङ्गलाह्वयः ।
तालं कान्तारनृत्तं स्यात् पृष्टकुट्टिमम् ॥
सोमस्यभद्रतालं स्यात् नर्तनं कटिबन्धनम् ।
स्वरो निषादः कथितः शङ्करस्यतु धैवतम् ॥
स्वरस्तुढक्करी तालं वामजानूर्ध्वनर्तनम् ।
अन्येषामपिदेवानां स्वरः पञ्चम इष्यते ॥
भद्रतालं तु कथितं सर्वमङ्गलनर्तनम् ।
भूतानां बलितालं स्यात् स्वरो गान्धार उच्यते ॥
सर्वमङ्गलनृत्तं च दर्शयेत् कुम्भसम्भव ।

**शयनोत्सवः** - तीर्थयात्रयाः पूर्वदिने रात्रौ गुरुः शुचिर्भूत्वा अग्रमण्डपे शय्यां प्रकल्प्य, सम्पूज्य शिरोदेशे निद्राकलशं पूजयेत् । शय्या परितः मङ्गलाङ्कुरपात्राणि, समीपे भद्रदीपधूपफलपुष्पादिकं विन्यसेत् । गर्भगृहं गत्वा पीठं सम्पूज्य यथाविधि पूजयित्वा, निवेद्य प्रार्थयेत् । बिम्बात् 'देवतां' मूलमन्त्रेण उत्सवबिम्बे आवाह्य, सम्पूज्य शय्यासमीपे नयेत् । उपचारमन्त्रेण शय्यातले शाययित्वा सम्पूज्य, पुण्याहवाचनं वाचयित्वा, कौतुकं बन्धयेत् । रात्रिसूक्तं पठित्वा, यवनिकामाच्छाद्य रात्रशेषमतिवाह्य प्रार्थयेत् ।

नमस्तेस्तु जगत्पाल(ले) शरणागतवत्सल(ले) ।
कवाटं बन्धयिष्यामि सुखनिद्रां कुरु प्रभो(शुभे) ॥

**प्रबोधोत्सवः** - प्रातः स्नानसन्ध्यावन्दनादिकं विधाय सङ्कल्प्य मङ्गलवेद वाद्यघोषैः सह प्रातः सूक्तं पठन् देवतां प्रबोधयेत् ।

प्रबुद्ध जगदीशान प्रबुद्ध कमलापते ।
प्रबुद्ध पुण्डरीकाक्ष प्रबुद्ध रमया सह ॥

प्रबुद्धानन्तकल्याणवारिधे करुणाम्बुधे ।
प्रबुद्ध चन्द्रवदन कमलाङ्घ्रिसरोरुह ॥
स्तुवन्ति वेदाश्चत्वारः नमन्ति द्रुहिणादयः ।
अस्ताचलं गतश्चन्द्रः उदयं याति भास्करः ॥
उन्मीलयाक्षियुगलं नृत्यत्यप्सरसां गणः ।
तुम्बुरुर्नारदश्चोभौ वीणया मञ्जुगायतः ॥
तिष्ठन्ति ऋषयः सर्वे सेवार्थं गोपुराद्बहिः ।
बालातपा विसर्पन्ति प्रबुद्धान्यम्बुजान्यपि ॥
षट्पदा मकरन्दाय भ्रमन्तिकमलोदरे ।
चक्रवाकद्विजगणैः गार्हस्थ्यमनुभूयते ॥

इति विष्णौ प्रार्थनामन्त्रः ।

अन्येषु - उत्तिष्ठोत्तिष्ठ देवेश(शि) शरणागतवत्सल(ले) ।
उत्तिष्ठ करुणापूर्ण(र्णे) त्रैलोक्यं मङ्गळं कुरु ॥

मङ्गलद्रव्याणि दर्शयित्वा, बिम्बं उत्थाप्य, भद्रपीठे स्थापयेत् । वर्धनीकटाहपूजां विधाय, उत्सवबिम्बे पीठपूजां, विधाय देवतां आवाह्य अर्घ्य पाद्याचमनं दत्त्वा दन्तशोधनार्थं अपामार्गदन्तकाष्ठं दत्त्वा, गण्डूषार्थं जलं दद्यात् । पुनराचमानदिकं दत्त्वा स्नानकाले पूजितजलेन बिम्बं सङ्क्षाल्य, तैलेन अभ्यञ्जनं कृत्वा, हरिद्राचूर्णैः संशोध्य, पूजितजलेन बिम्बं सङ्क्षाल्य, पञ्चगव्यादिभिः अभिषिच्य, निद्राकलशेन स्नापयेत् । वस्त्रादिकं दत्त्वा, निवेद्य, नीराज्य, इतिहासपुराणादिकं श्रावयित्वा, शय्यादिकं उद्वास्य, बिम्बं गर्भगृहे नीत्वा, देवतां मूलबिम्बे उद्वास्य पूजयेत् । यात्राहोमादि अवभृतस्नानान्तं कर्मान् विधाय, ध्वजमवतार्य तत् चैतन्यं वाहनबिम्बे उद्वासयेत् । सम्प्रोक्षणादिकं कृत्वा, कर्मसमर्पणं कुर्यात् ।

# ॥ प्रायश्चित्तपटलः ॥

चोरचाण्डालपतितश्वोदक्यादिप्रवेशने ।
शवाद्युपहतौ चैव पूजाविच्छेदने तथा ॥
स्नपनोक्तेन मार्गेण प्रायश्चित्तविधिः स्मृतः ।
सर्वत्र विष्णुगायत्र्या होमः स्यादयुतावरः ॥

प्रासादस्य अन्तर्भागे प्रसवः, मरणं मण्डपादिषु मूत्ररुधिरशवादीनां पतनं, चोरचाण्डालपतितादीनां श्वानादिप्रवेशं, पूजालोपं चेत्यादीनि दोषपरिहारार्थं प्रायश्चित्तानि कार्यम् । क्षेत्रगते दोषे सप्तशुद्धि, प्रासादशुद्धि, वास्तुपूजाहोमादिपुरस्सरं शान्तिप्रायश्चित्त होमाः सहितं यथाशक्ति कलशस्नपनं कार्यम् । शत्रुभिः कृताभिचारक्रियायां मरीचादिलेपनं क्षुद्रैः मन्त्रैश्च पूजा निषिद्धपुष्पैः पूजनादिभिः बिम्बे प्राप्त अशुद्धिदोषनिवारणार्थं क्षालनादि बिम्बशुद्धिं कुर्यात् ।

बिम्बशुद्धिविधानम् -

तथैवाशुचिसंस्पर्शे स्नापयित्वा मृदम्भसा ।
गवां रसैश्च संस्नाप्य दर्भतोयैर्विशोध्य च ॥
प्रोक्षयेत् प्रोक्षणीतोयैर्मूलेनाष्टोत्तरं शतम् ।
सपुष्पं सकुशं पाणिं न्यस्य देवस्य मस्तके ॥
पञ्चवारं जपेन्मूलमष्टोत्तरशतोत्तरम् ।
ततो मूलेन मूर्धादि पीठान्तं संस्पृशेदपि ॥
तत्वन्यासं लिपिन्यासं मन्त्रन्यासं च विन्यसेत् ।
पूजां च महतीं कुर्यात् स्वतन्त्रोक्तां यथाविधि ॥

पुण्याहवाचनं वाचयित्वा, पूजितपीठे आग्नेयादिविदिक्षु चतर्कुम्भानि संस्थाप्य, आग्नेयकुम्भे 'अग्निमीळे' इति मन्त्रेण वल्मीकमृज्जलं, नैर्ऋत्यकुम्भे 'इषेतोर्ज्वे' इति मन्त्रेण पञ्चगव्यं, वायव्यकुम्भे 'अग्न आयाहि' इति मन्त्रेण कुशोदकं, ईशान्यकुम्भे 'शंनो देविरिति' मन्त्रेण प्रोक्षणीतोयं (पुष्पचन्दनतिलबिल्वैर्युतजलम्) च पूरयेत् । कलशपूरणं विधाय, आवाहनं

न्यासादिकं विधाय विधिवत् सम्पूज्य, आग्नेयकलशं शं न सूक्तादिभिः, नैर्ऋत्यकलशं गायत्र्या, वायव्यकलशं वेदोक्तमन्त्रेण, ईशान्यकलशं मूलमन्त्रेण आपोहिष्ठादिमन्त्रैश्च अभिमन्त्रणं कुर्यात् । बिम्बशुद्धिहोमं विधाय, गर्भगृहे ईशकोणे व्रीह्यादिभिः पीठं विरचय्य, तदुपरि शुद्धकटाहं संस्थाप्य, शोधितजलमापूर्य, वर्धनीकटाहपूजां कुर्यात् ।

देवता पुरतः उपविश्य, 'बिम्बस्थसमस्तदोष निवारणार्थं बिम्बशुद्ध्यर्थं, सम्पूर्णसानिध्य सिद्ध्यर्थं च क्षालनादि शुद्धिं करिष्ये' इति सङ्कल्प्य, शङ्खपूजां विधाय, बिम्बं पूजितजलेन सङ्क्षाल्य, पीठपूजां कृत्वा, 'देवतां' आवाह्य पाद्याद्युपचारैः सम्पूज्य, स्नानकाले आग्नेयकलशोदकेन अभिषिञ्चेत् । पुनः पीठपूजां विधाय 'देवतां' आवाह्य पाद्याद्युपचारैः सम्पूज्य, स्नानकाले पञ्चगव्य कलशेनाभिषिच्य सम्पूजयेत् । पुनः पीठपूजां विधाय, 'देवतां' आवाह्य, पाद्याद्युपचारैः सम्पूज्य, स्नानकाले बिम्बशुद्धि होमस्य सम्पाताज्यं बिम्बे समर्प्य, चणकपिष्टैः उद्वर्त्य, पूजितजलेन सङ्क्षाल्य, वायव्यकलशस्थकुशोदकेन संशोध्य, पूजयेत् । पुनः पीठपूजां विधाय, 'देवतां' आवाह्य, पाद्याद्युपचारैः सम्पूज्य, स्नानकाले मूलमन्त्रमष्टोत्तरशतवारं जपन् बिम्बं ईशान्य कलशोदकेन सम्प्रोक्ष्य, पूजयेत् । पुष्पेण कुशेन च सहितं हस्तं बिम्बस्य शिरसि न्यस्य मूलमन्त्रमष्टोत्तरशतवारं जपेत् । मन्त्राक्षरन्यासं, प्राणादिन्यासादिकं च कुर्यात् । शान्तिप्रायश्चित्तहोमान् विधाय, विधिवत् ब्रह्मकलशस्नपनं कुर्यात् । बिम्बे गर्भगृहादिषु च वैकल्यं वर्तते चेत् सानिध्यं सङ्कोच्य वैकल्यं तं परिमार्ज्य, यथाक्रमं पुनर्प्रतिष्ठापनादिकं कुर्यात् । शिखरकलशध्वजादिपतने शान्तिप्रायश्चित्तहोमान् पञ्चवेद पारायणादिकं च विधाय, तत् चैतन्यं स्वर्णे उद्वास्य, नूतनं निर्माय, स्वर्णस्थचैतन्यं संयोजयेत् । यथाशक्ति परिकलशैः सह ब्रह्मकलशेन बिम्बं स्नापयेत् ।

**बिम्बं जीर्णे पतने वा प्रायश्चित्तः -** स्थण्डिले अग्निं प्रतिष्ठाप्य, अत्रप्रधानं 'देवतां' मूलमन्त्रेण सहस्रवारं मधुसिक्त दूर्वेण, व्याहृतिमन्त्रेण सहस्रवारं

अज्येन, 'देवतां' गायत्रिमन्त्रेण सहस्रवारमाज्येन...इत्यादि । होमसम्पाताज्यं हुतभस्मं च बिम्बे समर्प्य, शान्तिवाचनं कुर्यात् ।

पादौ हस्तावसंशोध्य अनाचम्य समर्चने ।
जपः पञ्चोपनिषदां नग्नो मुक्तशिरोरुहः ॥
श्वसन् हसन् वा कुप्यन् वा स्विन्नाङ्गः प्रलपन्नपि ।
अर्चयेद्देवदेवेशं शतमस्त्रमनुं जपेत् ॥
लोमलोष्ठास्थिकेशादिस्पर्शनेनैव निष्क्रिया ।
अनाप्लुत्य स्त्रियं गत्वा पूजयेत्पुरषोत्तमम् ॥
स्नापयेत्पञ्चगव्येन पञ्चोपनिषदं जपेत् ।
एवं रजस्वलावस्त्रं स्पृष्ट्वा देवसमर्चने ॥
वेदविक्रयचण्डालयूपश्वानरजस्वलाः ।
काकपाषण्डपतितप्रतिलोमखरादिकान् ॥
चैत्यवृक्षं चितिं स्पर्शायोग्यं स्पृष्ट्वा समर्चने ।
पञ्चवारुणिकैर्मन्त्रैः स्नपनं कुशवारिणा ॥
क्षीरेण स्नापयेद्देवं सकेशकुसुमार्चने ।
रूषितैर्मलमूत्राद्यैः पूजिते परमेश्वरे ॥
कुशोदकेन स्नपनं मन्त्रेण परमेष्ठिना ।
म्लेच्छपुल्कसचण्डालप्रतिलोमानुलोमजैः ॥
श्वभिः सृगालैश्च खरैः स्पृष्टमन्नं निवेदितम् ।
अयाज्ञियैः कोद्रवाद्यैः हविः कृत्वा निवेदितम् ॥
प्रमादेन घृतस्नानं स्नानमुष्णाम्बुभिस्ततः ।
अत्युष्णमतिशीतं वा विना शाकादिभिस्तु वा ॥
हविर्निवेदने कुर्यात् 'पञ्चोपनिषदां' शतम् ।
शवादिदूषिते ग्रामे पक्वान्नं विनिवेदयेत् ॥
पयसा स्नपनं कृत्वा 'पञ्चोपनिषदां' जपः ।
आरब्धायां तु पूजायामन्तरा म्रियते यदि ॥
तन्त्रेण सकलं कृत्वा देवदेवं समापयेत् ।

न स्नानादिक्रिया तत्र न होमो न बलिर्महः ॥
नैवेद्यमेकं कुर्वीत तत्तन्त्रमिति कथ्यते ।
भूयो निवेदयेत्पूर्वम् अन्यस्मै वा निवेदितम् ॥
कुशोदकैः स्नापयित्वा `मूलमन्त्रा'युतं जपः ।
अन्यदेवार्चितं पुष्पम् अन्यदीयं रथादिकम् ॥
पूजादिषूपयुक्तं चेत् गन्धवस्त्रादिकं तथा ।
कल्याणस्नपनं कृत्वा `मूलमन्त्रं' शतं जपेत् ॥
कृमिकीटादिभिर्दुष्टमन्यदेवाय निर्मितम् ।
पूजादिषूपयुक्तं चेत् दध्ना स्नानं समाचरेत् ॥
भुक्तशेषेण वा विष्णोर्दत्तशेषेण वा पुनः ।
`मूलमन्त्र'सहस्र तु जपेदष्टोत्तरं बुधः ॥
पूजायां स्नपने वापि यदि पर्युषितोदकम् ।
योजयेच्छान्तये तस्य कुशोदकघटाप्लवः ॥
मलमूत्रादिदुष्टेन वस्तुना पूजिते यदि ।
स्नापयेद्वैष्णवैः कुम्भैः पुनः पूजादि कारयेत् ॥
शवादिदूषितात् कूपात् जलं सर्वं समुद्धरेत् ।
पुण्याहं वाचयित्वान्ते प्रोक्षयेज्जलशुद्धये ॥
क्लृप्तोपचारभङ्गे तु द्विगुणं कारयेत्ततः ।
शान्तयेऽष्टोत्तरशतं `मूलमन्त्रं'जपेत्सुधीः ॥
वैकल्ये देवदेवस्य पूजायाः द्विगुणार्चनम् ।
पूजावैकल्यकालानां द्विगुणैर्वस्तुभिः पुनः ॥
प्रायश्चित्तावसाने तु पूजयेत्परमेश्वरम् ।
एकाहपूजावैकल्ये स्नपनं शान्तिवारिणा ॥
दिनमेकमतिक्रम्य वैकल्यञ्चेद्दिनत्रये ।
मङ्गलोदककुंभेन स्नपनं कारयेत्सुधीः ॥
अत ऊर्ध्वं द्वादशाहं पूजावैकल्यसंभवे ।
स्नापयेत्सर्वगन्धेन पक्षान्तं विकले सति ॥

मूलौषधीभिः स्नपनं मासं पूजाविपर्यये ।
ब्राह्मेण कारयेत्स्नानं वत्सरान्तं यदा भवेत् ॥
स्नापयेत्पारमेष्ठेन वत्सरद्वयलङ्घने ।
वासुदेवं भवेत्स्नानं ततः संवत्सरावधि ॥
संप्रोक्षणं प्रकुर्वीत प्रतिष्ठावत्सरत्रयात् ।
प्रायश्चित्तेषु सर्वेषु कुर्याद्ब्राह्मणभोजनम् ॥
अशास्त्रीयेण पूजां वा बलिं वा होमकर्म वा ।
कुरुतेऽक्षततोयेन स्नपनं तस्य निष्कृतिः ॥
एवं बहुदिने जाते विधिवर्जितपूजने ।
स्नापयेद्वासुदेवेन तेन शान्तिर्भविष्यति ॥
अस्पृश्यस्पर्शने वह्नेः कृमिकेशादिदूषणे ।
अष्टोत्तरशतं होमो व्याहृत्या तेन शाम्यति ॥
चण्डालसूतकोदक्यांशवपुल्कसदूषिते ।
अयुतं होम उदितो व्याहृत्या हव्यवाहने ॥
परिवारार्चने नष्टे भङ्गे वा बलिकर्मणः ।
तत्तन्मन्त्रैर्यथाकालं द्विगुणीकृत्य पावके ॥
जुहुयाच्छान्तये तेषां समिधा वा घृतेन वा ।
पतिते तु बलिद्रव्ये पुनरन्येन कारयेत् ॥
शान्तये स्नपनं कुर्यात् नारिकेलाम्भसा हरेः ।
बलिबिम्बे निपतिते यानादेः स्थापयेत्पुनः ॥
बलिशेषं समाप्याथ वैष्णवं स्नपनं चरेत् ।
अज्ञातजातिभिश्चौरैः स्पृष्टे बिम्बे जगत्पतेः ॥
प्राजापत्यं प्रकुर्वीत स्नपनं तस्य शान्तये ।
मृण्मयं चित्रलिखितं कौतुकं च त्रिवस्तुकम् ॥
चण्डालाद्यैर्दुषितं चेत् त्यक्त्वा सर्वं पुनः सृजेत् ।
बिम्बे पातकिभिः सपृष्टे ब्राह्मं स्नपनमाचरेत् ॥
शूद्रेण कौतुके स्पृष्टे पुण्येन स्नापयेद्धरिम् ।

सामान्यैर्ब्राह्मणैः स्पृष्टे कौतुके परमेष्ठिनः ॥
स्नापनं कुशतोयेन तस्य निष्कृतये भवेत् ।
दुष्टस्त्रीभिस्तथाऽस्पृश्यैः कुण्डेर्वा गोलकैस्तु वा ॥
स्पृष्टे तच्छान्तये कुर्यात् पुण्येन स्नपनं हरेः ।
गर्भगेहप्रवेशश्चेत् चण्डालैः पुल्कसादिभिः ॥
मृदादिकौतुकं त्याज्यं क्षालयेत् गोमयाम्बुभिः ।
प्रोक्षयेत्पञ्चगव्येन पुण्याहं वाचयेत्ततः ॥
पुनः सृष्ट्वा यथापूर्वं सर्वमन्यद्यथा पुरम् ।
शैलादीनां तु बिम्बानां स्पर्शे ब्राह्मं समाचरेत् ॥
अशौचवत्प्रवेशेऽपि स्नानं चण्डालवत् स्मृतम् ।
खद्योतवर्षसंस्पर्शे यात्रायामथवाग्निना ॥
कुर्वीत पुण्यस्नपनं दग्धश्चेत् सर्वथा ततः ।
पुनर्निर्माय विधिवत् यथापूर्वं समाचरेत् ॥
स्नापयेद्वासुदेवेन प्रतिष्ठान्ते जगत्पतिम् ।
स्थापिते यागशालायां कलशेऽग्नौ प्रतिष्ठिते ॥
चण्डालप्रतिलोमाद्यैरस्पृश्यैरितरैरपि ।
स्पृष्टे त्यक्त्वापरं स्थाप्य मूलेनाष्टौ शताहुतीः ॥
तत्तद्देवतमन्त्राणि जपेदष्टोत्तरं शतम् ।
स्नपने वापि यात्रायां पतिते कौतुके भुवि ॥
पुनः संस्थाप्य तद्बिम्बं पुण्यस्नपनमाचरेत् ।
मण्डूकमूषिकाद्यैस्तु सर्वैर्मार्जारकादिभिः ॥
स्थापिते कलशे स्पृष्टे नष्टे वा तं परित्यजेत् ।
कुंभान्तरं तु संस्थाप्य तत्तदावाहनं चरेत् ॥
तद्दैवत्यान् जपेन्मन्त्रान् ध्वजपूर्वे महोत्सवे ।
हीननित्योत्सवे धाम्नि कार्यं न ध्वजपूर्वकम् ॥
उत्सवं कारयेद्धीमान् कृते तन्निष्कृतये पुनः ।
स्नानेन पारमेष्ठ्येन प्रीणयेत्परमेश्वरम् ॥

महोत्सवे वर्तमाने ध्वजे केनापि हेतुना ।
नष्टे ध्वजान्तरं कृत्वा भोजयेद्ब्राह्मणान् बहून् ॥
ध्वजे तु पतिते भूमौ हेतुना येन केन वा ।
पुनरारोप्य तं पश्चात् विप्रेभ्यो भूरिभोजनम् ॥
भङ्गच्छिद्रादिविषये वर्णलोपादिसंभवे ।
संधाय च यथायोगं संप्रोक्ष्य विधिपूर्वकम् ॥
पुनरारोप्य तच्छान्त्यै ब्राह्मणेभ्योऽन्नतर्पणम् ।
चण्डालादिप्रवेशेन यथाकुंभान्तरं भवेत् ॥
तथैव पालिकादीनां मृण्मयानां भवेद्ध्रुवम् ।
अङ्कुराण्यर्पयेद्भूयः तच्छान्त्यै विप्रभोजनम् ॥
अङ्कुरेष्वप्रशस्तेषु मूषिका पशुवाजिभिः ।
भक्षितेष्वपि तच्छात्यै वल्मीकादिसमुद्भवे ॥
शान्तिहोमो व्याहृतिभिः ब्राह्मणानां च भोजनम् ।
ग्रामादिरहिते धाम्नि धामन्येन परिक्रमः ॥
महोत्सवे वर्तमाने वर्षवातानलादिभिः ।
ग्रामादौ शिथिले पश्चात् प्रायश्चित्तं पुनर्महः ॥
प्राजापत्यविधानेन स्नपनं निष्कृतिर्भवेत् ।
उत्सवे दैवयोगेन विघ्निते मानुषेण वा ॥
बलिमेव क्षिपेद्धाम्नि ग्रामे वीथ्यां चतुर्दिशम् ।
नष्टकर्माण्यशेषाणि पुनः कृत्वा यथापुरम् ॥
कर्तव्यमखिलं पश्चात् कुर्याद्विध्युक्तवर्त्मना ।
बलिप्रदानेऽप्यकृते अतिक्रान्तं पुराचरेत् ॥
अन्यद्यथावत कर्तव्यं महावाताद्युपद्रवे ।
चण्डप्रचण्डयोरेव भूतेभ्यश्च तदन्तरे ॥
हीनायां तीर्थयात्रायां स्नपनं वासुदेवजम् ।
नष्टे चोरादिभिर्बिम्बे कुर्यात्कर्मार्चया महः ॥
बिम्बे तु पतिते वीथ्यां यानमारोप्य तत्पुनः ।

वीथीपरिक्रमं कृत्वा प्राजापत्यमथाचरेत् ॥
पतनेनाङ्गहीनं चेत् कुर्यात् कर्मार्चया महः ।
सन्धाय विधिवत् सर्वमन्यत् कार्यं विचक्षणैः ॥
यानभङ्गे नयेद्देवं यानेनान्येन केनचित् ।
कर्मण्यधिकृता ये च प्रतिष्ठायाः सवस्य वा ॥
दैवाद्वा मानुषाद्यद्वा विघ्निता यदि कारणात् ।
तां क्रियां पूरयेदन्यैः सदृशैरधिकारिभिः ॥
पवित्रभूषणानां वा कुण्डानां मण्डलस्य वा ।
न्यूनातिरेकशान्त्यर्थमस्त्रमन्त्रं शतं जपेत् ॥
जलाधिवासरहितं प्रतिष्ठा कारिता यदि ।
स्नपनं पारमेष्ठ्येन `मूलमन्त्रं' शतं जपेत् ॥
मासादूर्ध्वं द्वादशाब्दादर्वाक्क्लेशं सहेद्धरिः ।
अत ऊर्ध्वं क्लेशवासं वासुदेवो न मन्यते ॥
क्लेशावधावतिक्रान्ते कुर्यात् बालालयान्तरम् ।
प्रायश्चित्तं वासुदेवं स्नपनं परिकल्पयेत् ॥
सा मूर्तिस्तच्च तन्त्रं च स एव स्थापकः पुनः ।
पुनः प्रकल्पनेनैव क्रियाजालविपर्ययः ॥
लुप्ते पुरातने धाम्नि प्रतिमा वा पुरातनी ।
न ज्ञायते चाधिकारी पुनः सृष्टिर्यथेच्छया ॥
अधिकारी परिज्ञातः अजीर्णं ध्रुवकौतुकम् ।
मन्दिरं च मनोहारि पूजालोपश्चिरादभूत् ॥
पूर्वतन्त्रानुरोधेन भूयस्तेनाधिकारिणा ।
कुर्वीत सकलं कर्म राष्ट्रक्षोभो विपर्यये ॥
क्लेशवासं गते देवे ग्रामे वा पत्तनेऽपि वा ।
आमूलकर्मनिर्वृत्तिर्न कुर्यात्तत्र मङ्गलम् ॥
किं पूनर्देवदेवस्य पूजावैकल्यसंभवे ।
तस्मात् सर्वात्मना तीव्रं संप्रोक्ष्याथ समर्चयेत् ॥

हेतुना येन केनापि पूजालोपे तु शार्ङ्गिणः ।
तन्त्राधिकार्यलाभश्चेत् यजमानेच्छयार्चनम् ॥
वैकल्यशान्तिं कृत्वाथ संप्रोक्ष्य विधिवत्प्रभुः ।
तन्त्रान्तरेण यजनं ततः प्रीतो भवेद्धरिः ॥
सिद्धान्ते वाऽथवा तन्त्रे शास्त्रे वा न व्यतिक्रमः ।
कार्योऽनापदि शास्त्रज्ञैः भूतिकामैर्विशेषतः ॥
पूजालोपे गृहार्चायाः पञ्चगव्याभिषेचनम् ।
मासादुपरि षण्मासं पुण्यस्नपनमाचरेत् ॥
षण्मासाद्वत्सरादर्वाक् संप्रोक्षणविधिर्भवेत् ।
अत ऊर्ध्वं प्रतिष्ठा स्याद्गृहार्चाराधनक्षये ॥
त्रिदशादिप्रतिष्ठायां पूजावैकल्यसंभवे ।
केवलं पौरुषैः सूक्तैः स्नपनं नान्यदिष्यते ॥
सालग्रामशिलादीनां पूजावैकल्यसंभवे ।
अस्पृश्य स्पर्शने वापि क्षालयित्वार्च्चयेज्जलैः ॥
पीठानां वा यथापूर्वं कृत्वा कुर्याच्च निष्कृतिम् ।

## ॥ जीर्णोद्धारपटलः ॥

अशक्ये तुच्छिते धाम्नि बिम्बे त्यक्त्वा पुनः सृजेत् ।
पूर्वद्रव्यं पुनः सृष्टौ योग्यं संयोज्य कल्पयेत् ॥
अजीर्णं धाम बिम्बं वा त्यक्त्वा नान्यत्र कल्पयेत् ।
कल्पने तु महान् दोषः आचार्ययजमानयोः ॥
अन्यथा वा कुर्वीत निर्दुष्टे बिम्बमन्दिरे ।
अचलां विन्यसेत् गेहे अतिजीर्णं परित्यजेत् ॥
व्यङ्गां भग्नाश्च शैलादौ न्यसेत् अन्याश्च पूर्ववत् ।
भिन्नं वा स्फुटितं बिम्बं भूतिकामो न पूजयेत् ॥
सन्धाने तु विमानस्य शक्तिमावाहयेत् ध्रुवे ॥
ध्रुवबेरस्य सन्धाने कुम्भे वा बालकौतुके ।
देवयक्षमुनीन्द्राद्यैरन्यैः पौराणिकैस्तथा ॥
प्रतिष्ठिते तु बिम्बे तु यदङ्गं भङ्गमेष्यति ।
तदङ्गं सन्धयेद्यत्नात् सुवर्णेनैव नान्यथा ॥
भग्नेशिलामये बिम्बे देवमुन्यादि कल्पिते ।
तदङ्गं रुक्मजं कृत्वा तत्सन्धेयं यथापुरम् ॥
देवादिस्थापिते बिम्बे हीनाङ्गे मृण्मये सति ।
नकदाचित्परित्याज्यं तत्सन्धेयं यथाविधि ॥
एवं भङ्गे च जीर्णे च अङ्गं सन्धेयमादरात् ।
महाङ्गोपाङ्गप्रत्यङ्ग भङ्गश्चेद्वै प्रमादतः ॥
तत्तद्रूपानुसारेण सन्धेयं पूर्ववद्बुधः ।
उत्तमाङ्ग-विहीनेतु तद्बिम्बं परिवर्जयेत् ॥
यःपूजयति तद्बिंबं लोभमोहदि हेतुभिः ।
तद्ग्रामनाशनं सिद्धं राजा राष्ट्रं च नश्यति ॥
हीनाङ्गानि तु बिम्बानि तानि हित्वा पुनसृजेत् ।
अङ्गमात्र समाधाने सृष्टो नर्वात्मनापि च ॥
अङ्गं चतुर्विधं ज्ञेयं महाङ्गादिविभेदतः ।

शिरः कण्ठमुरःकुक्षिर्ललाटं बाहुकूर्पकम् ॥
कटी चोरूजानुपादौ महाङ्गानि प्रकीर्तिताः ।
चक्षुश्च नासिकाकर्णौ ओष्ठमङ्गुलयः स्मृताः ॥
इमान्यङ्गानि प्रोक्तानि सर्वशास्त्रेषु निश्चिताः ।
दन्ताश्च नखरोमाणि केशहारादिकं च यत् ॥
उपाङ्गानीति देवस्य प्रोक्तं तन्त्रेषु निश्चितम् ।
शिरश्चक्रं शंखचक्राद्यायुधानिच भूषणा ॥
च्छत्रचामरपीठानि पादपीठं प्रभातथा ।
एते प्रत्यंग संज्ञास्युर्देवदेवस्य शार्ङ्गिणः ॥
एतान्यंगानिविज्ञाय पूर्वोक्तेनैव वर्त्मना ।
असुरैर्मुनिभिर्देवैः तत्त्वविद्भिः प्रतिष्टितम् ॥
जीर्णं वाप्यथवा भग्नं विधिनापि न चालयेत् ।

प्रासादादि जीर्णे बालालयं निर्माय, सप्तशुद्ध्यादिकं कुर्यात् । सङ्कोचात् पूर्वे 'देवता'सम्पूर्णसानिध्यसिद्धिद्वारा सम्पूर्णानुग्रहसिद्ध्यर्थं सद्रव्यकलशैः संस्नाप्य, प्रसन्नपूजां विधाय, पार्षदेभ्यः बलिं दद्यात् ।

सङ्कोचविधिः -

जीर्णालयोद्धृतौ चैव तत्वमन्त्रान् स्वकं तथा ।
प्रतिलोमेन जप्त्वैव मूर्तौ सङ्कोचयेद्धरिम् ॥

अथ सङ्कोचाङ्ग गुरुः पुण्याहवाचनं वाचयित्वा, गर्भगृहं गत्वा, विधिवत् पूजयेत् । देवस्यपुरतः मण्डपे कुण्डे अग्निं प्रतिष्ठाप्य, तत् वामे कलशं संस्थाप्य, सम्पूज्य, (कलशे संहारक्रमेण न्यासाः कार्यः) सङ्कोचहोमं कुर्यात् ।

अन्वाधानम् - अत्रप्रधानं 'देवतां' मूलमन्त्रेण समिदाज्यचरुतिलघृतेति पञ्चद्रव्यैः प्रत्येकं अष्टाविंशतिवारं, पुनः गायत्रीमन्त्रेण अष्टोत्तरशतवारं आज्येन, समष्टिमन्त्रादि गुरुमन्त्र पर्यन्तं (विष्णौ - परमन्त्रपर्यन्तं) पीठदेवता मन्त्रैराज्येन, प्रतिलोम क्रमेण आवरणदेवतामन्त्रैराज्येन, समस्त व्याहृत्या

पूर्णाहुत्या आज्येन, संहारक्रमेण शक्त्याद्यखिलतत्वमन्त्रैः अष्टाष्टवारं आज्येन, संहारक्रमेण अजादिमातृकामन्त्रैः अष्टाष्टवारं (एकैकवारं वा) आज्येन, शिंशुमारादि केशवान्तमूर्तिभ्यः एकैकवारमाज्येन, 'स्वस्तिनो मिमीता' इत्यादि पञ्चमन्त्रैः विश्वान् देवान् एकैकवारमाज्येन, 'शकुन्तं कनिक्रदादि' षड्भिर्मन्त्रैराज्येन, 'वास्तोष्पते' इत्यादि पञ्चभिर्मन्त्रैः अष्टाष्टवारमाज्येन, शेषेण स्विष्ट...इत्यादि । होमं परिसमाप्य, ब्राह्मणान् फलताम्बूलदक्षिणादिभिः सन्तोष्य, यजमानं ग्रामजनानां सहितं प्रार्थयेत् । उपचारमन्त्रेण 'देवतां' सम्प्रार्थ्य, ब्राह्मणान् विज्ञापयेत् । तद्यथा -

पूजालयमिदं विष्णोः निर्मितं पूर्वसूरिभिः ।
अनेन दूषणेनाद्य दूषितं चेह वर्तते ॥
दुष्टगेहस्य चोद्धारः कर्तव्य इति शासनात् ।
आगमस्य वयं कर्तुं व्यवसायमुपास्महे ॥ इति आलयस्योद्धारे ।
पूजाबिम्बमिदं विष्णोः स्थापितं पूर्वसूरिभिः ।
अनेनदूषणेनाद्य दूषितं चेह वर्तते ॥
दुष्टबिम्बस्य चोद्धारः कर्तव्य इति शासनात् ।
आगमस्य वयं कर्तुं व्यवसायमुपास्महे ॥ इति बिम्बस्योद्धारे ।

(अन्येषु देव्या, शम्भोः इत्यादि योजयेत्) इति सम्प्रार्थ्य, विप्रैः 'ॐ क्रियताम्' इति अनुज्ञां गृहीत्वा, सामान्यजनान् विज्ञापयेत् । तद्यथा - यथैव देवपूजायां विनियुक्तमनिन्दितम् ।

द्रव्यं पुष्पादिकं पश्चात् निर्माल्यमिति निन्द्यते ॥
एवं बिम्बमदुष्टं यत्पूजायां विनियुज्यते ।
तदेव दूषितं पश्चात् निर्माल्यमिति निन्द्यते ॥
तस्माद्दुष्टमिदं बिम्बं(गेहं) भवद्भिर्युक्तसंशयैः ।
निर्माल्यबुद्ध्या त्यक्तव्यमिति शास्त्रस्य शासनम् ॥

ततः कर्तॄन् प्रति -

क्रियन्तं कालमत्रेशः प्रवासवसतिं वसेत् ।

मासादूर्ध्वं द्वादशाब्दादर्वाक्कालावधिः स्मृतः ॥

इत्युक्त्वा, तेभ्यः पुनः प्रतिष्ठाकर्मणः कालावधिं निश्चित्य, तत्तत् क्षेत्रस्थिता देवताः प्रार्थयेत्। तद्यथा -

श्रृण्वन्तु देवताः सर्वाः प्रसादमिममाश्रिताः ।
यदुच्यमानं अस्माभिरनुगृह्णन्तु तेन नः ॥
पूर्वैः पूर्वं कृतमिदं देवालयमसारवत् ।
जातं तस्मात् नवं कर्तुं वयं सर्वे समुद्यताः ॥
कालेनैतावता भूयः प्रासादेस्मिन्पुनर्नवे ।
प्रापयामो वयं सत्यं तदनुज्ञातुमर्हथ ॥

इति निवेद्य, पुनः -

भगवन् (हे देव(वि)) वास्त्वभिनवं बिम्बं वा तव शोभनम् ।
कारयिष्यन्ति ते भक्ताः तदनुज्ञातुमर्हसि ॥
क्लेशवासस्त्वया देव(वि) रोचनीयोऽल्पके गृहे ।
यावन्नवं शुभं कृत्वा पुनः संस्थापयामहे ॥
जीर्णगेह(बिम्ब)मिदं देव(वि) सर्वदोषावहं नृणाम् ।
अस्योद्धारकृते शान्तिरित्येवं भाषितं त्वया ॥
तत्त्वयाधिष्ठितं देव(वि) ह्युद्धरामि तवाज्ञया ।
तदुपक्रान्तमस्माभिस्तदनुज्ञातुमर्हसि ॥

इति 'देवतां' प्रार्थयेत् । गर्भगृहं गत्वा, जीर्णोद्धारं कर्तुं बिम्बं स्थलान्तरं नेतुं (बिम्बस्योद्धाराङ्ग) चालनविधिं करिष्ये इति सङ्कल्प्य, बिम्बादिषु सन्निहित 'देवतां' सङ्कल्प्य, सङ्कोचहोमस्य सम्पाताज्यं बिम्बे समर्प्य, प्रतिलोममातृकामन्त्रैः, तत्वमन्त्रैः मूलमन्त्रेण च सङ्कोचकलशमभिषिञ्चेत् । संहारक्रमेण क्रमात् केशवादिमूर्तिन्यासं, मातृकान्यासं, तत्वन्यासं, च विधाय, संहारक्रमेण मूलमन्त्रं जपित्वा, प्रासादादिषु व्याप्त स्थूलरूपं मनसि ध्यात्वा, अञ्जलौ पुष्पं गृहित्वा, उपचारमन्त्रं उक्त्वा,

विष्णौ - देव त्वं विश्वरूपेण गेहमावृत्य तिष्ठति ।

नवीकरणसिद्ध्यर्थं बिम्बे सन्निहितो भव ॥

अन्येषु - देव(वि) त्वं(त्वां) स्थूलरूपेण गेहमावृत्य तिष्ठति ।

नवीकरणसिद्ध्यर्थं बिम्बे सन्निहितो भव ॥

इति प्रार्थ्य, बिम्बे मूलमन्त्रेण पुष्पाञ्जलिं समर्पयेत् । सन्निधापनमुद्रां प्रदर्श्य, पीठावरणदेवतामन्त्रान् प्रतिलोमेन पठित्वा, ॐ सर्वेभ्यो पीठदेवताभ्यो नमः, सर्वेभ्यो आवरणदेवताभ्यो नमः, सर्वेभ्यो प्रासादादिषु आश्रितदेवताभ्यो नमः, यथा स्थानं उद्वासयामि इति पुष्पाञ्जलिं समर्प्य, प्रार्थयेत् । प्रणवमूलमन्त्रैः प्रासादे, ब्रह्मशिलायां, पीठे, अष्टबन्धे च स्थित चैतन्यं बिम्बे संयोजयेत् ।

शान्तिरस्तु शिवं चास्तु पुष्टिरस्तु सुमङ्गलम् ।
स्वस्तिः चास्तु समृद्ध्यस्तु सर्वेषां सन्तु सम्पदः ॥
गोब्राह्मणेभ्यो क्षेत्रेभ्यो विट्च्छूद्रेभ्यस्तथैव च ।
लोकेभ्यः सर्वभूतेभ्यो राज्ञे जनपदाय च ॥
ग्रामाय यजमानाय गुरवेऽस्मै गृहाय च ।
बिम्बोद्धारविधेरस्तु साकल्यमिह सर्वदा ॥

इति ब्राह्मणैः सह स्वस्तिवाचनं कृत्वा, अष्टबन्धमूलं संशोध्य, मङ्गलसूक्तादि पठन् बिम्बं विचल्य, 'उत्तिष्ठ ब्रह्मणस्पते' इति मन्त्रेण बिम्बं उद्धार्य, बालालये नीत्वा, भद्रासने संस्थाप्य, यथाशक्तिकलशैः संस्नाप्य, तत्र प्रतिष्ठान्तं नित्यं षोडशोपचारैः पूजयेत् ।

**बिम्बेजीर्णे -**

लघुसाध्येङ्गसन्धाने कुम्भे शक्तिं निवेशयेत् ।
अनन्तजीर्णे बिम्बादौ बालबिम्बेर्चयेद्धरिम् ॥
मूलबिम्बं समाराध्य कुम्भं न्यस्याग्रतो हरेः ।
तत्र तस्मात् समावाह्य संहारक्रममाश्रयन् ॥
अभ्यर्च्य कुम्भमर्घ्याद्यैर्वेदवाद्यपुरस्सरम् ।
दूर्वास्त्रिमधुरयुक्ता समिधः क्षीराणां तु वा ॥
सावित्र्या तत्र होतव्याः साज्याश्चाष्टसहस्रशः ।

सहस्रं नारसिंहेन हुत्वा तामुद्धरेत् गुरुः ॥
दारवीं दारयेत् वह्नौ शैलजां प्रक्षिपेज्जले ।
रत्नजं च परित्यज्यं ग्राह्यं वा घटनाय च ॥
लोहं द्रवीकृतं तत्र योजयेत् बेरकर्मणि ।
जीर्णं दग्धं कृशं स्थूलं हीनं मानाधिकं तथा ॥
भग्नं च सक्षतं लिङ्गमसमं यच्च दृश्यते ।
लक्ष्मोज्झतं वज्रहस्तं सम्पुटं स्फुटितं तथा ॥
अभिचारकं गर्भाद्यं व्यङ्गाङ्गं चेति कीर्तितम् ।
त्याज्यानि सर्वथैतानि लिङ्गानि षोडशैव तत् ॥

सङ्कोचकृत 'देवता' पुरतः धान्यादिभिः कृत पूजितपीठे विधिवत् कलशं संस्थाप्य, पीठपूजां विधाय, गन्धपुष्पादिभिर्युक्तकरेण बिम्बस्य हृदयं स्पृष्ट्वा, प्रणवमूलमन्त्राणि जपन्, बिम्बात् 'देवतां' कलशे आवाह्य, मुद्राः प्रदर्शयेत् । कलशे मूलमन्त्रस्य ऋष्यादिन्यासादिकं विधाय, ध्यात्वा, मूलमन्त्रमष्टोत्तर शतवारं जपित्वा, गोलकचिन्तनं विधाय, असुनीतेति मन्त्रेण प्रतिष्ठापनं, प्राणादिन्यासं च कुर्यात् । पुनः हुं फडान्ताः तत्वमन्त्राः प्रतिलोमेन जप्त्वा, गधपुष्पादिभिर्युक्तकरेण बिम्बस्य हृदयं स्पृष्ट्वा, प्रणवमन्त्रं जपन्, बिम्बस्थ शक्त्यादिसकलतत्वादियुतं मन्त्रमयतेजः कलशे आवाहयामि (संयोजयामि) इति कलशे आवाह्य, विष्णौ षडङ्गन्यासादि केशवादिमूर्तिन्यासान्तं, अन्येषु वेदोक्तसूक्तन्यासादि केशवादिमूर्तिन्यासान्तं कुर्यात् । ॐ 'ॐ ॐ बिम्बस्थ सम्पूर्णचैतन्यं कलशे संयोजयामि' इति कलशे पुष्पाञ्जलिं समर्प्य,

नमस्तेऽस्तु जगत्पाल(ले) भक्तानुग्रहकारक(रिणी) ।
नवीकरणसिद्ध्यर्थं कुम्भेऽस्मिन् सन्निधिं कुरु ॥ इति प्रार्थयेत् ।

ॐ भूर्भुवःस्वः ॐ इति कलशं उत्थाप्य, मण्डपप्रक्षिणापूर्वक शय्यायाः समीपे नीत्वा, शय्यायां नूतनबिम्बस्य दक्षिणे संस्थाप्य, शिरस्तत्वहोमं कृत्वा,

षोडशोपचारैः सम्पूज्य, नीराज्य अधिवासयेत्। नूतनबिम्बं विधिवत् प्रतिष्ठाप्य, आवाहनानन्तरं सानिध्यकलशेन अभिषिञ्चेत्।

**बिम्बत्यागविधिः** - बिम्बं पीठं च उद्धृत्य, स्थण्डिले अग्निं प्रतिष्ठाप्य, शान्तिहोमं कुर्यात् । अन्वाधानम् - अत्र प्रधानं सवितृनारायणं गायत्र्या त्रिमधुराप्लुतदूर्वाभिः अष्टोत्तरसहस्रवारं, पुनः व्यस्तसमस्तव्याहृतिभिः क्रमेण घृताक्त अश्वत्थोदुम्बरवटप्लक्ष समिद्भिः प्रत्येकं अष्टोत्तरसहस्रवारं, पुनः लक्ष्मीनरसिंहं अष्टाक्षरमन्त्रेण सहस्रवारं आज्येन, लक्ष्म्याद्यावरणदेवताः... इत्यादि । होमं समाप्य, सम्पाताज्यं बिम्बे समर्प्य, शंन सूक्तादिभिः कलशेन मार्जयेत् । बिम्बगतं चैतन्यं प्रणवेन सूर्यमण्डले उद्वास्य, बिम्बं वस्त्रदर्भरज्ज्वादिभिः परिवेष्ट्य, बिम्बपीठादिभिः सहित जलाशयं गच्छेत् । अगदजले ॐ पं पद्माय नमः इति पीठं सम्पूज्य, निर्माल्यधारिणं आवाह्य, पञ्चोपचारैः सम्पूज्य, बिम्बं पीठादिकं च जले विसर्जयेत् । दारुबिम्बपक्षे औपासनक्रमेण अग्निं प्रतिष्ठाप्य, अग्नौ निर्माल्यधारिणं सम्पूज्य, बिम्बं तदग्नौ दाहयेत् । लोहबिम्बपक्षे लोहं द्रवीकृत्य नूतनबिम्बनिर्माणार्थं संयोजयेत् । जलाशयादिषु यजमानेन सह स्नात्वा, गायत्रीमन्त्रेण तर्पयेत् । आलयं गत्वा, शान्तिप्रायश्चित्तहोमादिकं कुर्यात् । बिम्बगेहजीर्णे चेत् सानिध्यं कलशेतर उत्सवबिम्बे अन्य अल्पबिम्बे वा उद्वास्य, बालालये संस्थाप्य, नित्यं सम्पूज्य, नूतनबिम्बं कारयेत् । शय्याधिवासदिवसे उत्सवबिम्बादिषु गतचैतन्यं कलशे संयोज्य, विधिवत् नूतनबिम्बप्रतिष्ठापनं सानिध्यकलशस्नपनाधिकं पूर्वोक्त क्रमेण कुर्यात् । अष्टबन्धजीर्णे प्रणवमूलमन्त्रैः अष्टबन्धगतचैतन्यं बिम्बे संयोज्य, जीर्णाष्टबन्धमूलं संशोध्य, नूतनं अष्टबन्धं प्रपूर्य, शान्तिप्रायश्चित्त होमान् कृत्वा, ब्रह्मकलशाभिषेकं कुर्यात् । पीठजीर्णे सङ्कोच्य, नूतनपीठे विधिवत् प्रतिष्ठापयेत् । जीर्णपीठं जले विसर्जयेत् ।

# परिशिष्ट

**ब्रह्मरथोत्सवविधिः** - पौर्णमास्युपवासं तु कृत्वा भक्त्या नराधिप ।
अनेन विधिना यस्तु विरिञ्चिं पूजयेन्नरः ॥
प्रतिपद्यां महाबाहो स गच्छेद्ब्रह्मणः पदम् ।
ऋग्भिर्विशेषतो देवी विरिञ्चेर्वास्तुदेवताः ॥
कार्त्तिके मासि देवस्य रथयात्रा प्रकीर्तिता ।
यां कृत्वा मानवो भक्त्या याति ब्रह्मसलोकताम् ॥
कार्तिके मासि राजेन्द्र पौर्णमास्यां चतुर्मुखम् ।
मार्गेण चर्मणा सार्धं सावित्र्या च परन्तप ॥
भ्रामयेन्नगरं सर्वं नानावाद्यैः समन्वितम् ।
स्थापयेद् भ्रामयित्वा तु सलोकं नगरं नृप ॥
ब्राह्मणं भोजयित्याग्रे शाण्डिलेयं प्रपूज्य च ।
आरोपयेद्रथे देवं पुण्यवादित्रनिस्वनैः ॥
रथाग्रे शाण्डिलीपुत्रं पूजयित्वा विधानतः ।
ब्राह्मणान्वाचयित्वा च कृत्वा पुण्याहमङ्गलम् ॥
देवमारोपयित्वा तु रथे कुर्यात्प्रजागरम् ।
नानाविधैः प्रेक्षणकैर्ब्रह्मघोषैश्च पुष्कलैः ॥
कृत्वा प्रजागरं ह्येवं प्रभाते ब्राह्मणं नृप ।
भोजयित्वा यथाशक्त्या भक्ष्यभोज्यैरनेकशः ॥
पूजयित्वा जनं वीर वज्रेण विधिवन्नृप ।
बीजेन च महाबाहो पयसा पायसेन च ॥
ब्राह्मणान्वाचयित्वा च च्छान्देन विधिना नृप ।
कृत्वा पुण्याहशब्दं च रथं च भ्रामयेत्पुरे ॥
चतुर्वेदविदैर्विप्रैर्भ्रामयेद्ब्रह्मणो रथम् ।
बह्वृचाथर्वणोच्चारैश्छन्दोगाध्वर्युभिस्तथा ॥
भ्रामयेद्देवदेवस्य सुरज्येष्ठस्य तं रथम् ।
प्रदक्षिणं पुरं सर्वं मार्गेण सुसमेन तु ॥

न वोढव्यो रथो वीर शूद्रेण शुभमिच्छता ।
नारुहेत रथं प्राज्ञो मुक्त्वैकं भोजकं नृप ॥
ब्रह्मणो दक्षिणे पार्श्वे सावित्रीं स्थापयेन्नृप ।
भोजको वामपार्श्वे तु पुरतः कञ्जजं न्यसेत् ॥
एवं तूर्यनिनादैस्तु शङ्खशब्दैश्च पुष्कलैः ।
भ्रामयित्वा रथं राजन्पुरं सर्वं प्रदक्षिणम् ॥
स्वस्थाने स्थापयेद्भूयः कृत्वा नीराजनं बुधः ।
य एवं कुरुते यात्रां भक्त्या यश्चापि पश्यति ॥
रथं चाकर्षते यस्तु स गच्छेद्ब्रह्मणः पदम् ।
कार्तिके मास्यमावास्यां यस्तु दीपप्रदीपनम् ॥
शालायां ब्रह्मणः कुर्यात्स गच्छेद्ब्रह्मणः पदम् ।
प्रतिपदि ब्राह्मणांश्चापि गुडमिश्रैः प्रदीपकैः ॥
वासोभिरहतैश्चापि स गच्छेद्ब्रह्मणः पदम् ।
गन्धैपुष्पैर्नवैर्वस्त्रैरात्मानं पूजयेच्च यः ॥
तस्यां प्रतिपदायां तु स गच्छेद्ब्रह्मणः पदम् ।
महापुण्या तिथिरियं बलिराज्यप्रवर्तिनी ॥
ब्रह्मणः सुप्रिया नित्यं बालेया परिकीर्तिता ।
ब्राह्मणान्पूजयित्वास्यामात्मानं च विशेषतः ॥
स याति परमं स्थानं विष्णोरमिततेजसः ।
चैत्रे मासि महाबाहो पुण्या प्रतिपदा परा ॥
तस्यां यः श्वपचं स्पृष्ट्वा स्नानं कुर्यान्नरोत्तम ।
न तस्य दुरितं किञ्चिन्नाधयो व्याधयो नृप ॥
भवन्ति कुरुशार्दूल तस्मात्स्नानं प्रवर्तयेत् ।
दिव्यं नीराजनं तद्धि सर्वरोगविनाशनम् ॥
गोमहिष्यादि यत्किंचित्तत्सर्वं भूषयेन्नृप ।
तैलशस्त्रादिभिर्वस्त्रैस्तोरणाधस्ततो नयेत् ॥
ब्राह्मणानां तथा भोज्यं कुर्यात्कुरुकुलोद्वह ।

तिस्रो ह्येताः पराः प्रोक्तास्तिथयः कुरुनन्दन ॥
कार्त्तिकेश्वयुजे मासि चैत्रे मासे च भारत ।
स्नानं दानं शतगुणं कार्त्तिके या तिथिर्नृप ॥
बलिराज्याप्तिसुखदा पांशुलाशुभनाशिनी ।

सूर्यरथोत्सवविधिः - शुक्लपक्षे तु सप्तम्यां मासि भाद्रपदे हर ।
घृतेनाभ्यङ्गयेद्देवं पञ्चपूताङ्गजेन वै ॥
अभ्यङ्गयेद्ग्रहेशं यः सर्षपैः श्रद्धयान्वितः ।
दिने दिने जगन्नाथं प्रविष्टं वर्णके रविम् ॥
शाल्योदनं खण्डमिश्रं वज्रं वज्रसमन्वितम् ।
वर्णभक्तं प्रयच्छेद्यो भास्कराय दिने ॥
आरूढः स विमानं तु ज्वालामालाकुलं शुभम् ।
गच्छेन्मम पुरं देव स्तूयमानो महर्षिभिः ॥
तस्मात्सर्वप्रयत्नेन भास्कराय नरः शिव ।
वर्णभक्तं प्रदातव्यं प्रविष्टस्येह वर्णकम् ॥
घृतपूर्णं खण्डवेष्टं कासारं मोदकं पयः ।
दध्योदनं पायसं च संयावं गुडपूपकान् ॥
ततस्तं स्नापयेद्देवं पौषे मासि विधानतः ।
सप्तम्यां शुक्लपक्षस्य शृणुष्वैकमनास्तथा ॥
तीर्थोदकमुपानीय अन्यद्वाथ जलं शुभम् ।
वेदोक्तेन विधानेन प्रतिमां स्थापयेद्बुधः ॥
यजेद्धि तीर्थनामानि मनसा संस्मरन्बुधः ।
प्रयागं पुष्करं देवं कुरुक्षेत्रं च नैमिषम् ॥
पृथूदकं चन्द्रभागां शौरं गोकर्णमेव च ।
ब्रह्मावर्तं कुशावर्तं बिल्वकं नीलपर्वतम् ॥
गङ्गाद्वारं तथा पुण्यं गङ्गासागरमेव च ।
कालप्रियं मित्रवनं शुण्डीरस्वामिनं तथा ॥
चक्रतीर्थं तथा पुण्यं रामतीर्थं तथा शिवम् ।
वितस्ता हर्षपंथा वै तथा वै देविका स्मृता ॥
गङ्गा सरस्वती सिन्धुश्चन्द्रभागा सनर्मदा ।
विपाशा यमुना तापी शिवा वेत्रवती तथा ॥
गोदावरी पयोष्णी च कृष्णा वेण्या तथा नदी ।

शतरुद्रा पुष्करिणी कौशिकी सरयूस्तथा ॥
तथान्ये सागराश्चैव सान्निध्यं कल्पयन्तु वै ।
तथाश्रमाः पुण्यतमा दिव्यान्यायतनानि च ॥
एवं स्नानविधिं कृत्वा अर्चयित्वा प्रणम्य च ।
धूपमर्घ्यं प्रदत्त्वा तु प्रतिमामधिवासयेत् ॥
त्रिरात्रं सप्तरात्रं वा मासं मासार्धमेव च ।
स्थितं स्नानगृहे देवं पूजयेद्भक्तितो ॥
चत्वरे लेपयेद्वेदिं चतुरस्रां शुभे कृताम् ।
चतुर्दिशं श्वेतकुम्भैर्वितानवरशोभिताम् ॥
कृष्णपक्षे तु माघस्य सप्तम्यां त्रिपुरांतक ।
कृत्वाग्निकार्यं विधिवत्कृत्वा ब्राह्मणभोजनम् ॥
शङ्खभेरीनिनादैस्तु ब्रह्मघोषैश्च पुष्कलैः ।
पुण्याहघोषविविधैर्ब्राह्मणान्स्वस्ति वाच्य च ॥
ततोऽस्य परया भक्त्या सूर्यस्य परमात्मनः ।
रथेन दर्शनीयेन किङ्किणीजालमालिना ॥
सूर्यश्च भ्रामयेद्देवं महोत्सवपुरःसरम् ॥
शुक्लपक्षे तु माघस्य रथमारोपयेद्रविम् ।
कृत्वाग्निहोमं विधिवत्तथा ब्राह्मणभोजनम् ॥
प्रीणयित्वा जनं सर्वं दक्षिणाभोजनादिना ।
प्रपूज्य ब्राह्मणान्दिव्यान्भौमांश्चापि सुवाचकान् ॥
इतिहासपुराणाभ्यां वाचको ब्राह्मणोत्तमः ।
ततो देवश्च इष्टश्च सम्पूज्यो यत्नतस्तदा ॥
माघस्य शुक्लपक्षस्य पञ्चम्यामेकभक्तकम् ।
अयाचितं चतुर्थ्यां तु षष्ठ्यां नक्तं प्रकीर्तितम् ॥
सप्तम्यामुपवासं तु आश्रमाद्रोपयेद्रथम् ।
अग्निकार्यं तु वै कृत्वा रथस्य पुरतः शिव ॥
षष्ठ्यां च रात्रौ भूतेश रथस्येहाधिवासनम् ।
ब्राह्मणान्भोजयित्वा तु दिव्यान्भौमांश्च वाचकान् ॥
रथमारोपयेद्देवं सप्तम्यां भूतभावनम् ।
सितायां माघमासे तु तस्य देवालयाग्रतः ॥
तत्रस्थस्यैव देवस्य कुर्याद्रात्रौ प्रजागरम् ।

नानाविधैः प्रेक्षणकैर्दीपवृक्षोपशोभितैः ॥
शंखतूर्यनिनादैश्च ब्रह्मघोषैश्च पुष्कलैः ।
कुर्यात्प्रजागरं भक्त्या देवस्य पुरतो निशि ॥
ततोऽष्टम्यां च यत्नेन देवं रथगतं नयेत् ।
नगरस्योत्तरं द्वारं शङ्खभेरी निनादितम् ॥
ततः पूर्वं दक्षिणं च द्वारं चापि तथा परम् ।
एवं हि क्रियमाणायां यात्रायां वत्सरावधौ ॥
मानवाः सुखमेधन्ते राजा जयति चाहितान् ।
नीरुजश्च जनाः सर्वे गवां शान्तिर्भवेत्तथा ॥
प्रजानामिह शान्त्यर्थं प्रतिसंवत्सरं सदा ।
काञ्चनो वाथ रौप्यो वा दृढदारुमयोऽपि वा ॥
दृढाक्षयुगचक्रश्च रथः कार्यः सुयन्त्रितः ।
तस्मिन् रथवरे श्रेष्ठे कल्पिते सुमनोरमे ॥
आरोप्य प्रतिमां यत्नाद्योजयेद्वाजिनः शुभान् ॥
हरिल्लक्षणसम्पन्नान्सुमुखान्वशवर्तिनः ।
कुङ्कुमेन समालब्धांश्चामरस्रग्विभूषितान् ॥
सदश्वान्योजयित्वा तु रथस्यार्घ्यं प्रदाय च ।
विबुधाम्पूजयित्या तु धूपमाल्यानुलेपनैः ॥
आहारैर्विविधैश्चापि भोजयित्वा द्विजोत्तमान् ।
दीनान्धकृपणादींश्च सर्वान्संतर्प्य शक्तितः ॥
न कञ्चिद्विमुखं कुर्यादुत्तमाधममध्यमम् ।
सूर्यक्रतौ तु वितते एवमाहुर्मनीषिणः ॥
यश्चिन्तयति भग्नाशः क्षुधावातप्रपीडितः ।
अदातुर्हि पितॄंस्तेन स्वर्गस्थानपि पातयेत् ॥
यज्ञश्च दक्षिणाहीनः सवितुर्न प्रशस्यते ।
तस्मान्नानाविधैः कामैर्भक्ष्यलेह्यसमन्वितैः ॥
पूजयित्वा जनं सर्वमिममुच्चारयेन्मनुम् ।
बलिं गृह्णन्तु मे देवा आदित्या वसवस्तथा ॥
मरुतोथाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ।
असुरा यातुधानाश्च२ रथस्था यास्तु देवताः ॥
दिग्पाला लोकपालाश्च ये च विघ्नविनायकाः ।

जगतः स्वस्ति कुर्वंतु ये च दिव्या महर्षयः ॥
मा विघ्नं मा च मे पापं मा च मे परिपन्थिनः ।
सौम्या भवन्तु तृप्ताश्च देवा भूतगणास्तथा ॥
वामदेव्यैः पवित्रैश्च मानस्तोकरथन्तरैः ।
आकृष्णेन रजसा ऋचमेकामुदाहरेत् ॥
ततः पुण्याहशब्देन कृतवादित्रनिःस्वनैः ।
रथक्रमणकं कुर्याद्वर्त्मना सुसमेन तु ॥
पुरुषैश्चापि वोढव्यः सूर्यभक्तिसमन्वितैः ॥
सुकृतैः च ३प्रग्रहैर्दान्तैर्बलीवर्द्दैरथापि वा ।
यथा पर्यटनं च स्याद्विषमे पथि गच्छतः ॥
उपवासस्थितैर्विप्रैर्दिव्यैर्भौमैश्च सुव्रतैः ।
त्रिंशद्भिः षोडशैर्वापि प्रतिमां भास्करस्य तु ॥
स्थानात्प्रचाल्यं वै रुद्र रथमारोपयेच्छनैः ।
राज्ञी च निक्षुभा रुद्र भार्ये तस्य महात्मनः ॥
शनैरारोपयेद्रुद्र उभयोः पार्श्वयो रथे ।
निक्षुभां दक्षिणे पार्श्वे राज्ञीं चाप्युत्तरे तथा ॥
आतपत्रं तथा श्वेतं स्वर्णदण्डमनौपमम् ॥
सुवर्णबिन्दुभिश्चित्रं मणिमुक्ताफलोज्ज्वलम् ।
ततस्त्विन्द्रधनुःप्रख्यं स्वर्णदण्डमथाव्रणम् ॥
ध्वजं प्रकल्पयेत्तस्य पताकाभिरलङ्कृतम् ।
भूतेशनानावर्णाभिस्सप्तभिः कामनाशनः ॥
ध्वजोपरिचरं व्योम अरुणाधिष्ठितं भवेत् ।
रथतुण्डगतान्विप्रान्नयेद्रथवरं रवेः ॥
सारथ्यं रुद्र कुर्याद्वै श्रेयोऽर्थमात्मनः सदा ।
नारुहेत रथेऽश्रद्धो यदीच्छेच्छ्रेय आत्मनः ॥
रथमारोहतस्तस्य क्षयं गच्छति सन्ततिः ।
उपवासव्रतोपेतैर्वोढव्यः पार्वतीप्रिय ॥
स्वस्थानाच्चलितो रुद्र पूर्वद्वारं व्रजेत३ वै ।
दिनमेकं वसेत्तत्र पूज्यमानो नृपेण वै ॥
नानाविधैः प्रेक्षणकैः पुराणश्रवणेन च ।
नानाविधैर्ब्रह्मघोषैर्ब्राह्मणानां च तर्पणैः ॥

स्थित्वा तु तत्राष्टम्यन्तं नवम्यां चलते पुनः ।
व्रजेत दक्षिणं द्वारं नगरस्य त्रिलोचन ॥
तत्रापि दिनमेकं तु तिष्ठन्तेन्धकसूदन ।
स्थितेऽत्र तैः पूज्यमानो यथा राज्ञा तथा नृपैः ॥
तस्मादपि चलेद्रुद्र द्वारं पश्चात्ततोत्तरम् ।
तत्रापि पूज्यः शूद्रैस्तु विधिवत्प्रियदर्शन ॥
तस्माच्च चलते रुद्र व्रजेन्मध्यं पुरस्य तु ।
तत्रस्थं पूजयन्ति स्म ब्राह्मणाः श्रद्धयान्विताः ॥
शंखवादित्रनिर्घोषैस्तथा प्रेक्षणकैर्वरैः ।
ब्रह्मघोषैश्च विविधैः समन्ताद्दीपकैः शुभैः ॥
नानाविधैर्वित्तदानैर्ब्राह्मणानां च तर्पणैः ।
दीनान्धकृपणानां च तर्पणैस्त्रिपुरान्तक ॥
पुरमध्यात्तु चलितस्तिष्ठेत्प्राप्य स्वमंदिरम् ।
इत्थं प्राप्य स्थितो देवः पुरतो मंदिरस्य तु ॥
तत्र स्थितः पूजनीयो भवेत्पौरेण कृत्स्नशः ।
पूज्यमानस्त्वहोरात्रं रथारूढस्तु तिष्ठति ॥
अपरे दिने व्रजेत्स्थानं तच्चिरन्तनमादरात् ।
त्रयोदश्यां व्यतीतायां चतुर्दश्यां त्रिलोचन ॥
सदैवं भ्रामयेद्देवं ग्रहेशं दुरितापहम् ।
परिवारयुतं रुद्र सानुगं परमेश्वरम् ॥
शनैर्नयेद्रथं रुद्र वर्त्मना सु समेन तु ।
यथा पर्यटनं तु स्याद्विषमे पथि गच्छतः ॥
प्रतीहाररथं पूर्वं नयेन्मार्गविशुद्धये ।
तस्मादनन्तरं रुद्र दण्डनायकमादरात् ॥
पिङ्गलं च ततस्तस्य पृष्ठगं चादरान्नयेत् ।
रक्षको द्वारको यस्माद्रथारूढौ तु पृष्ठतः ॥
रथारूढस्तथा दिण्डी देवस्य पुरतः स्थितः ।
तस्मादपि तथा रुद्र लेखको भास्करप्रियः ॥
शनैःशनैर्नयेद्रुद्र रथं देवस्य यत्नतः ।
युगाक्षचक्रभङ्गो वा यथा न स्यात्त्रिलोचन ॥
ईषाभङ्गे द्विजभयं भग्नेऽक्षे क्षत्रियक्षयः ।

तुलाभङ्गे तु वैश्यानां शय्याशूद्रक्षयो भवेत् ॥
युगभङ्गे त्वनावृष्टिः पीठभङ्गे प्रजाभयम् ।
परचक्रागमं विद्याच्चक्रभङ्गे रथस्य तु ॥
ध्वजस्य पतने चापि नृपभङ्गं विनिर्दिशेत् ।
व्यङ्गितप्रतिमायां तु राज्ञो मरणमादिशेत् ॥
छत्रभङ्गाद्भयं रुद्र युवराज्ञो विनिर्दिशेत् ।
उत्पन्नेष्वेवमाद्येषु उत्पातेष्वशुभेषु च ॥
बलिकर्म पुनः कुर्याच्छांतिहोमं तथैव च ।
ब्राह्मणान्वाचयेद्भूयो दद्याद्दानानि चैव हि ॥
पूर्वोत्तरे च दिग्भागे रथस्याग्निं प्रकल्पयेत् ।
समिद्भिस्तु घृताक्ताभिर्होमयेज्जातवेदसम् ॥
स्वाहाकारान्वदन्सम्यग्दैवतेभ्यस्त्वनुक्रमात् ।
ग्रहेभ्यश्च प्रजाभ्यश्च नामान्युद्दिश्य होमयेत् ॥
प्रथमं चाग्नये स्वाहा स्वाहा सोमाय चैव हि ।
स्वाहा प्रजापतये च देया आहुतयः क्रमात् ॥
स्वस्त्यस्त्विह च विप्रेभ्यः स्वस्ति राज्ञे तथैव च ।
गोभ्यः स्वस्ति प्रजाभ्यश्च जगतः शान्तिरस्तु वै ॥
शं नोऽस्तु द्विपदे नित्यं शान्तिरस्तु चतुष्पदे ।
शं प्रजाभ्यस्तथैवास्तु शं सदात्मनि चास्तु वै ॥
भूः शान्तिरस्तु देवेश भुवः शान्तिस्तथैव च ।
स्वश्चैवास्तु तथा शान्तिः सर्वत्रास्तु तथा रवेः ॥
त्वं देव जगतः स्रष्टा पोष्टा चैव त्वमेव हि ।
प्रजापाल ग्रहेशान शान्तिं कुरु दिवस्पते ॥
इदमन्यच्च वक्ष्यामि शान्त्या परमकारणम् ।
यात्राकारणभूतस्य पुरुषस्य स्वजन्मनः ॥
दुःस्थान्ग्रहांश्च विज्ञाय ग्रहशान्तिं समाचरेत् ।
प्रादेशमात्राः कर्त्तव्याः समिधोऽथ प्रमाणतः ॥
अर्कमय्यो रवेः कार्या पालाश्यः शशिनः स्मृताः ।
खादिर्यश्चैव भौमाय आपामार्ग्योऽब्जसूनवे ॥
आश्वत्थ्यश्चाथ जीवाय औदुम्बर्यः सिताय च ।
असिताय शमीमय्यो दूर्वा कार्यस्तु राहवे ॥

केतवे तु कुशाः कार्याः दक्षिणाश्चाप्यतः शृणु ।
सूर्याय शोभनां धेनुं शंखं दद्यादथेन्दवे ॥
रक्तमनड्वाहं भौमाय काञ्चनं सोमसूनवे ।
जीवाय वाससी देये शुक्रायाश्वं सितं हर ॥
शनैश्चराय गां नीलां राहवे भाण्डपायसम् ।
छागं तु केतवे दद्याच्छृण्वेषां भोजनान्यपि ॥
गुडौदनं तु सूर्याय सोमाय घृतपायसम् ।
हविष्यमन्नं भौमाय क्षीरान्नं सोमसूनवे ॥
दध्योदनं तु जीवाय शुक्रायाथ घृताशनम् ।
तिलपिष्टांश्च माषाश्च सूर्यपुत्राय दापयेत् ॥
राहवे दापयेन्माषं केतवे चित्रमोदनम् ।
सौवीरमारनालं च स्विन्नबीजं च काञ्जिकम् ॥
यथा बाणप्रहाराणां वारणं कवचं स्मृतम् ।
तथा दैवोपघातानां शान्तिर्भवति वारणम् ॥
अहिंसकस्य दान्तस्य धर्मार्जितधनस्य च ।
नित्यं च नियमस्थस्य सदा सानुग्रहा ग्रहाः ॥
ग्रहाः पूज्याः सदा रुद्र इच्छता विपुलं यशः ।
श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् ॥
वृष्ट्यायुःपुष्टिकामो वा तथैवाभिचरन्पुनः ।
यानपत्या भवेन्नारी दुष्प्रजाश्चापि या भवेत् ॥
बाला यस्याः प्रम्रियन्ते या च कन्याप्रजा भवेत् ।
राज्यभ्रष्टो नृपो यस्तु दीर्घरोगी च यो भवेत् ॥
ग्रहयज्ञः स्मृतस्तेषां मानवानां मनीषिभिः ।
तस्मादसौ सदा कार्यः श्रेयोऽर्थं जानता हर ॥
दत्तपुष्यः क्रूरदृक्च पुष्पजो धिषणस्तथा ।
सितासितौ तथा रुद्र उपरागः शिखी तथा ॥
एते ग्रहा महाबाहो विद्वद्भिः पूजिताः सदा ।
ताम्रकात्स्फाटिकाद्रक्तचन्दनात्स्वर्णकादपि ॥
राजतादायसात्सीसाद्ग्रहाः कार्याः प्रयत्नतः ।
स्वर्णे वाथ पटे लेख्या यथाशास्त्रं महेश्वर ॥
यथावर्णं प्रदेयानि वासांसि कुसुमानि च ।

गंधाश्च बलयश्चैव धूपो देयश्च गुग्गुलः ॥
कर्तव्या मन्त्र३वंतश्च चरवः प्रतिदैवतम् ।
आकृष्णेन इमं देवा अग्निर्मूर्धा दिवः ककुत् ॥
उद्बुध्यस्व यथासंख्यमृच एताः प्रकीर्तिताः ।
बृहस्पते अतियदर्यस्तथैवान्नात्परिस्रुतः ॥
शं नो देवी तथा कांडात्केतुं कृण्वन्निमाः क्रमात् ।
पूर्वोक्ताः समिधस्त्वत्र यथाशास्त्रं प्रहोमयेत् ॥
एकैकस्याष्टशतकमष्टाविंशतिरेव वा ।
होतव्या मधुसर्पिभ्यां दध्ना चैव समन्विताः ॥
पूर्वोक्तभोजनं यद्धि ब्राह्मणेभ्यो निवेदयेत् ।
शक्तितो वा यथालाभं दक्षिणा तु१ विधानतः ॥
यश्च यस्य यदा दुःस्थः स तं यत्नेन पूजयेत् ।
मयैषा हि वरो दत्तः पूजिताः पूजयिष्यथ ॥
ग्रहाधीना नरेंद्राणामुच्छ्रयाः पतनानि च ।
भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः ॥
ग्रहा गावो नरेन्द्राश्च गुरवो ब्राह्मणास्तथा ।
पूजितः पूजयन्त्येते निर्दहन्त्यपमानिताः ॥
यथा समुत्थितं यन्त्रं यन्त्रेणैव प्रहन्यते ।
तथा समुत्थितां पीडां ग्रहशान्त्या ३ प्रशामयेत् ॥
यज्वनां सत्यवाक्यानां तथा नित्योपवासिनाम् ।
जपहोमपराणां च सर्वं दुष्टं प्रशाम्यति ॥
एवं कृत्वा प्रजाशान्तिं कृत्वा च स्वस्तिवाचनम् ।
पुनः सज्जं रथं कृत्वा कुर्यात्प्रकमणं हर ॥
मार्गं शेषं नयित्वा तु नयेद्देवालयं रविम् ।
पूजयित्वा ततः पूर्वा याः प्रोक्ता रथदेवताः ॥
यथा पूज्या ग्रहाः सर्वे उत्पातेषु त्रिलोचन ।
रथदेवास्तथा पूज्या याः स्थिता रथमाश्रिताः ॥
अवतार्य रथाच्चैनं मण्डले स्थापयेत्पुनः ।
कृत्वा त्वारार्तिकं यत्नाद्दीपतोययवाक्षतैः ॥
कार्पासबीजलवणतुषैर्दुर्दृष्टिशान्तये ।
वेदीमारोपयेत्पश्चात्पत्नीभ्यां सह सुव्रत ॥

तत्रस्थं पूजयेद्देवं दिनानि दश सुव्रत ।
दशाहिकेति विख्याता या पूजा भूतले हर ॥
तया सम्पूयेद्देवं चतुर्थेऽह्नि तथा हर ।
चतुर्थेऽहनि कर्तव्यं यत्नाद्धि स्नपनं रवेः ॥
अभ्यङ्गभोजनाद्यैस्तु पूजासत्कारमण्डलैः ।
अनेन विधिना पूज्य दशाहानि दिवाकरम् ॥
ततो नयेत्परं स्थानं यत्तत्पूर्वमथालयम् ।

**ध्वजप्रकरण** - हन्त ते कथयिष्यामि ध्वजारोपणमुत्तमम् ।
यदुक्तं ब्रह्मणा पूर्वमृषभाधिपते पुरः ॥
पुरा देवासुरे युद्धे यानि देवैर्जयेप्सुभिः ।
कृतान्युपरि चिह्नानि वाहनानि ध्वजानि तु ॥
लक्ष्मचिह्नध्वजं केतुरिति पर्यायनामभिः ।
कीर्तितः स च तस्येह प्रमाणं गदतः शृणु ॥
ध्वजो वंशस्य कर्तव्यस्त्वविद्ध ऋजुरव्रणः ।
प्रासादव्यास तुल्यस्य ध्वजवंशप्रमाणतः ॥
देवागारस्य ये प्रोक्ता मञ्जरीकलशादयः ।
अथ वा तत्प्रमाणस्तु ध्वजदण्डः प्रकीर्तितः ॥
अन्तर्गृहस्य या वेदी सूत्रतः परिकल्पिता ।
तस्या व्यासो भवेद्वंशः प्रसादस्य यदूत्तम ॥
अथ वा मूलसूत्रेण यो व्यासोऽन्तर्गृहस्य तु ।
प्रासादव्यास इति ते प्रोक्तश्चेह न संशयः ॥
केतुर्भवेद्वरो वंशो न निम्नो न ऋजुस्तथा ।
पत्रं ध्वजे युगं चैव नलिकापुरुषस्तथा ॥
चतुर्हस्ता भवन्त्येते प्रशस्ताः कृष्णनन्दन ।
अष्टहस्तप्रमाणस्तु विंशार्धस्य प्रमाणतः ॥
सामान्यो ध्वजदण्डस्तु सर्वसाधारणो मतः ।
दण्डपाणिध्वजो यस्तु स्मृतः षोडशहस्तवान् ॥
विंशद्धस्तात्परो दण्डो न कार्यः सर्वथा रवेः ।

युग्महस्तस्तु कर्तव्यो ध्वजदण्डो मनीषिभिः ॥
चतुरङ्गुलविस्तीर्णः सुवृत्तो द्व्यङ्गुलोपरि ।
नातिसूक्ष्मो न च स्थूलो न कार्यो नतपर्वकः ॥
समपर्वातु कर्तव्यः सुदृढः सूक्ष्म एव हि ।
वक्रः पुत्रविनाशाय सव्रणोऽर्थविनाशनः ॥
रोगदो युग्महस्तस्तु भिन्नो दुःखमनन्तकम् ।
करोति हानि धर्मस्य हीनो यस्तु प्रमाणतः ॥
वैषम्यमसमपर्वा दद्यात्कृच्छ्रमधोन्नतः ।
जयो जयन्तो जैत्रेयः शत्रुहन्ता जयावहः ॥
नन्दोपनन्दनौ चैवेन्द्रोपेन्द्रौ गदितौ तथा ।
दशैते कीर्तिता भेदा ध्वजस्यानन्दसम्मिताः ॥
द्विजहस्तस्तु जयो दण्डो जयन्तो द्विगुणो मतः ।
द्वादशहस्तस्तु जैत्रेयः शत्रुहन्ता कलान्वितः ॥
जयावहस्तु विंशार्धो नन्द आदित्यसन्निभः ।
चतुर्दशोपनन्दस्तु इन्द्रः षोडश उच्यते ॥
उपेन्द्रोऽष्टादशः प्रोक्तस्तथेन्द्रो विंशतिः स्मृतः ।
भिन्नो वक्रोऽसाधितश्च न कार्यो दण्ड एव हि ॥
मूलमन्त्रेण कर्तव्यो व्यासतोऽन्तर्गृहस्य तु ।
ध्वजदण्डो महाबाहो अथ वा वास्तुमानतः ॥
मञ्जरीमानतो वापि तदर्धेनाथवा विभो ।
पताका वै शुभा कार्या ध्वजवंशावलम्बिनी ॥
देवागारस्य शिखरात्त्रिभागपरिमार्जनी ।
सा प्रोक्ता दशधा वीर मानतोमानतस्तथा ॥
अङ्कुरः पल्लवश्चैव स्कन्धः शाखा तथैव च ।
पताका कदली वीर केतुर्लक्ष्म जयस्तथा ॥
ध्वजश्च दशमः प्रोक्तः सर्वदेवमयोव्ययः ।
अङ्कुरो द्वयंगुलः प्रोक्तः पल्लवश्चतुरङ्गुलः ॥

स्कन्धः षडङ्गुलः प्रोक्तः शाखा चाष्टाङ्गुलो मता।
एकादशपताका तु कदली च चतुर्दश ॥
केतुस्तु षोडशः प्रोक्तो लक्ष्माष्टादशमुच्यते।
जया विंशति वै प्रोक्ता एतावत्त्वङ्गुलानि तु ॥
देवागारस्य कुम्भस्य प्रसन्ना सा प्रमार्जनी।
अङ्कुरेति पताका सा विज्ञेया यदुनन्दन ॥
पल्लवेति द्वितीयस्य मार्जनी परिकीर्तिता।
त्रिभागमार्जनीस्कन्धः शाखा वै पञ्चमस्य तु ॥
षष्ठस्योक्ता पताका तु कदली सप्तमस्य तु।
अष्टमस्य तथा केतुर्लक्ष्म च नवमस्य तु ॥
ततस्तु दशमः प्रोक्तो जयन्तो यदुनन्दन।
वृषस्थानावमार्गी तु ध्वजस्तु परिकीर्तितः ॥
गजो मेषोऽथ महिषः कबन्धस्तु वृषस्तथा।
हरिणोऽथ नरश्चैव नरश्च नरसत्तम ॥
स्थानान्येतानि भूयोऽथ प्रयुक्तस्य ध्वजस्य तु।
दिशभागे तु पूर्वात्तु क्रमेण परिकल्पयेत् ॥
एवं दशविधा प्रोक्ता पताका तत्त्वदर्शिभिः।
कर्तव्या सा यथापूर्वं तच्छृणु त्वं नराधिप ॥
शुक्लवस्त्रमयी चित्रा सघण्टा सुमनोहरा।
नानाचामरसम्पन्ना किङ्किणीजालमण्डिता ॥
ध्वजाग्रे चैव कर्तव्यो देवतालिङ्गसूचकः।
काञ्चनो वाथ रौप्यो वा मणिरत्नमयोऽपि वा ॥
रङ्गकैर्लिख्यते वापि तद्वाहनसमाकृतिः।
ध्वजदण्डोऽत्र विन्यस्तः कर्तव्यो यदुनन्दन ॥
गरुत्मात्मांस्तु ध्वजो विष्णोरीश्वरस्य ध्वजो वृषः।
ब्रह्मणः पङ्कजं कार्यं रवेर्धर्मः स्मृतो ध्वजः ॥
हंसो जलाधिपस्योक्तः सोमस्य तु नरो ध्वजः।

बलदेवस्य कालस्तु कामस्य मकरध्वजः ॥
सिंहो ध्वजस्तु दुर्गायाः कीर्तितो यदुनन्दन ।
गोधा चापि उमादेव्या रैवतस्य हयः स्मृतः ॥
कच्छपो वरुणस्योक्तो वातस्य हरिणो मतः ।
पावकस्य तथा मेष आखुर्गणपतेर्मतः ॥
ब्रह्मर्षीणां कुशः प्रोक्त इत्येषा ध्वज कल्पना ।
यस्य यद्वाहनं प्रोक्तं तत्तस्य ध्वज उच्यते ॥
विष्णोर्ध्वजे तु सौवर्णं दण्डं कुर्याद्विचक्षणः ।
पताका चापि पीता स्याद्गरुडस्य समीपगा ॥
ईश्वरस्य ध्वजे दण्डो राजतो यदुनन्दनः ।
पताका चापि शुक्ला स्याद्वृषभस्य समीपगा ॥
पितामहध्वजे दण्डः स्मृतस्ताम्रमयो बुधैः ।
पद्मवर्णा पताका स्यात्पङ्कजस्य समीपगा ॥
आदित्यस्य च सौवर्णो ध्वजे दण्डः प्रकीर्तितः ।
पञ्चवर्णा पताका स्याद्धर्मस्याधोगता नृप ॥
किङ्किणीजालसम्पन्ना नानबुद्बुदसन्निभा ।
पुष्पमालोपसम्पन्ना नानावादिभिरावृता ॥
दण्ड इन्द्रध्वजस्योक्तः काञ्चनो यदुनन्दन ।
पताका बहुवर्णा स्यात्कुञ्जरस्य समीपगा ॥
आयसश्चापि दण्डोक्तो यमचिह्नं विचक्षणैः ।
पताका वर्णतः कृष्णा महिषस्य समीपगा ॥
जलाधिपध्वजो दण्डो राजतः परिकीर्तितः ।
पताका सर्वतः श्वेता विचित्रा सा च कथ्यते ॥
ध्वजे चापि कुबेरस्य दण्डो मणिमयः स्मृतः ।
पताका चापि रक्ता स्यान्नरपादसमीपगा ॥
बलदेवध्वजे दण्डो राजतो यदुनन्दन ।
पताका वर्णतः शुक्ला तालस्याधोगता स्मृता ॥

कामध्वजे त्रिलोहः स्याद्दण्डो यदुकुलोद्वह।
पताका रोहिणी तत्र मकरस्य समीपगा॥
मायूरं कार्त्तिकेयस्य चिह्नं लोकेषु गीयते।
त्रिलोहदण्डमारूढं बहुरत्नविभूषितम्॥
बहुवर्णकचित्रा तु पताका कथिता बुधैः।
हस्तिदन्तभवं दण्डं कुर्याद्गणपतेर्नृप॥
ताम्रदण्डं समारुढं संशुद्धं सम्प्रतिष्ठितम्।
शुक्ला पताका कर्तव्या सुप्रमाणा महीपते॥
मातॄणां चापि कर्तव्यो नैकरूपो ध्वजो बुधैः।
पताकाभिरनेकाभिबर्हुरत्नाभिरन्वितः॥
रेवतस्यापि कर्तव्यो ध्वजो वाजी नराधिप।
रक्ता पताका तत्रापि कर्तव्या यदुनन्दन॥
चामुण्डामन्दिरे कार्यः शिरोमालाकुलो ध्वजः।
नीला पताका कर्तव्या दण्डो लोहमयस्तथा॥
रीतीमयश्च मातॄणां रेवतस्य च कारयेत्।
गौर्या ध्वजस्ताम्रमयः पताका गोपसन्निभा॥
स्वर्णदण्डस्तु वीरस्य ध्वजो मेषसमन्वितः।
पताका बहुरत्नाढ्ये कर्तव्या यदुनन्दन॥
अश्मसारमयो दण्डो ध्वजो वातस्य उच्यते।
पताका कृष्णवर्णा तु हरिणस्य समीपगा॥
भगवत्या ध्वजो दण्डः सर्वरत्नमयः स्मृतः।
पताका तु त्रिवर्णा स्यात्सिंहस्याधोगता नृप॥
एवंविधमिमं कृत्वा ध्वजं लक्षणलक्षितम्।
अधिवास्य ततो राजंस्तत आरोपयेद्बुधः॥
ततः सर्वौषधीभिश्च स्नापयित्वा प्रयत्नतः।
समालभ्य च बध्नीयान्मध्ये प्रतिसरान्नृप॥
कल्पयित्वा शुभां वेदिं कलशैरुपशोभिताम्।

तस्यां वेद्यां समारोप्य तां रात्रिमधिवासयेत् ॥
नानाकुसुमचित्रां च स्रजं तस्यानुलम्बयेत् ।
समभ्यर्च्य प्रयत्नेन धूपमस्य निवेदयेत् ॥
बलिकर्म ततः कृत्वा कृशरापूपकादिभिः ।
पलालपूपिकाभिश्च दधिपायससूपकैः२ ॥
उद्दिश्य लोकपालेभ्यो बलिं दद्याच्च वायसैः ।
ब्राह्मणान्स्वस्ति वाच्याथ कृत्वा पुण्याहमङ्गलम् ॥
वादित्रकृतनिर्घोषं जलं संस्कारसंयुतम् ।
नानाबुद्बुदसपन्नं वेष्टितं नववाससा ॥
शुभे लग्ने दिने ऋक्षे ध्वजं चारोपयेद्बुधः ।
विन्यस्य स्वर्णकलशं श्वभ्रराजं ध्वजस्य तु ॥
एवमारोपयेद्यस्तु ध्वजं देवालयोपरि ।
स श्रिया वर्धते नित्यं प्राप्नोति परमां गतिम् ॥
असुरा वासमिच्छन्ति ध्वजहीने सुरालये ।
तस्माद्देवालयं प्राज्ञो ध्वजहीनं न कारयेत् ॥
पताकां पूर्वमन्त्रेण स्थित्या पूर्वमुखो नृप ।
क्षिपेदूर्ध्वमथाकाशं प्रासादशिखराद्विभोः ॥
यजमानस्ततः पश्येत्पताकां यदुनन्दन ।
प्रासादपुरतो वापि पताकां पातयेद्यदि ॥
इन्द्रलोकं तदा कर्ता विशेद्वै यदुनन्दन ।
आग्नेय्यामग्निलोकं तु याम्यां यमसदो भजेत् ॥
नैऋत्यां नैऋतं लोकं वारुण्यः वारुणं व्रजेत् ।
यस्य देवस्य यद्वेश्म कृतं यदुकुलोद्वह ॥
तस्य लोकमवाप्नोति वृषस्थानगतो यदि ।
वायव्ये वायुमाप्नोति सौम्यायां सोममाप्नुयात् ॥
ऐशान्यामीशमाप्नोति कर्ता वै देववेश्मनः ।
य एवं कारयेद्भक्त्या ध्वजस्यारोपणं रवेः ॥

स हि भुक्त्वा परान्भोगान्सूर्यलोके महीयते ।
तेजसाम्बुजसंकाशः कान्त्या चाम्बुजसन्निभः ॥
द्विजातितुल्यः प्रभया विक्रमेण च गोपतेः ।

## || बलिदाने उपस्थानमन्त्राः ॥

**विष्णौ** - नमस्ते द्वारपालाय नन्दायासुरहारिणे ।
चक्राद्यङ्कितदेहाय वैष्णवाय नमो नमः ॥
नमस्ते द्वारपालाय सुनन्दायारिहारिणे ।
चक्राद्यङ्कितदेहाय वैष्णवाय नमो नमः ॥
नमस्ते पक्षिराजाय वेदपक्षयुग प्रभो ।
वैनतेय नमस्तेऽस्तु गरुडाय नमो नमः ॥
नमस्ते द्वारपालाय चण्डायासुरहारिणे ।
चक्राद्यङ्कितदेहाय वैष्णवाय नमो नमः ॥
नमस्ते द्वारपालाय प्रचण्डायारिहारिणे ।
चक्राद्यङ्कितदेहाय वैष्णवाय नमो नमः ॥
नमस्ते द्वारपालाय जयायासुरहारिणे ।
चक्राद्यङ्कितदेहाय वैष्णवाय नमो नमः ॥
नमस्ते द्वारपालाय विजयायारिहारिणे ।
चक्राद्यङ्कितदेहाय वैष्णवाय नमो नमः ॥
नमस्ते द्वारपालाय कुमुदायारिहारिणे ।
चक्राद्यङ्कितदेहाय वैष्णवाय नमो नमः ॥
नमस्ते द्वारपालाय कुमुदाक्षाय धीमते ।
चक्राद्यङ्कितदेहाय वैष्णवाय नमो नमः ॥
नमस्ते वज्रनाभाय पद्महस्ताय धीमते ।
चक्राद्यङ्कितदेहाय वैष्णवाय नमो नमः ॥
नमस्तेऽस्तु हरीशाय वेत्रहस्ताय धीमते ।
चक्राद्यङ्कितदेहाय वैष्णवाय नमो नमः ॥

नमस्ते द्वारपालाय चक्रव्यग्रमहाभुज।
चक्राद्यङ्कितदेहाय वैष्णवाय नमो नमः ॥
नमस्ते द्वारपालाय शङ्खव्यग्रमहाभुज।
चक्राद्यङ्कितदेहाय वैष्णवाय नमो नमः ॥
नमस्ते दिननाथाय रवये लोकसाक्षिणे।
पद्महस्ताय सूर्याय संवत्सराय ते नमः ॥
नमस्ते सोमदेवाय पक्षमासाधिपाय च।
शीतदीधितबिम्बाय तारकापतये नमः ॥
नमस्ते कामदेवाय पुष्पशराय धीमते।
वासुदेवतनूजाय सर्वकामप्रदायिने ॥
नमस्ते भूतनाथाय पद्महस्ताय धीमते।
शातानन्दाय शान्ताय पद्मजाय नमो नमः ॥
मातरः सर्वलोकानां देव्या अंशसमुद्भवाः।
ब्राह्म्यादिभ्यश्च सप्तभ्यो मातृभ्यो वै नमो नमः ॥
नमस्ते गजवक्त्राय पाशाद्यायुधधारिणे।
उमापुत्राय शान्ताय विघ्नेशाय नमो नमः ॥
शक्तिहस्ताय मयूरवाहनाय यशस्विने।
शितिकण्ठकुमाराय नमस्तेऽस्तु षडानन ॥
रक्षायै सुरसत्यानां प्राणहन्त्र्यै सुरद्विषाम्।
चक्रशङ्खादिहस्तायै सदा दुर्गे नमोऽस्तुते ॥
शङ्खचक्रगदाहस्ताः देव्या अंशसमुद्भवाः।
वागीश्वर्यादिमातृभ्यः सर्वेभ्यो वै नमो नमः ॥
यक्षगुह्यकसेव्याय पौलस्त्याय महौजसे।
ईशप्रियाय शान्ताय नमस्तेऽस्तु धनेश्वर ॥
विष्वक्सेन नमस्तेऽस्तु देवनिर्माल्यधारिणे।
शङ्खचक्रगदापाणे महापारिषदेश्वर ॥
नमस्ते पार्वतीशाय शङ्कराय महात्मने।

रुद्राद्यष्टस्वरूपाय कुमाराय नमो नमः ॥
दैत्यदर्पविनाशाय सहस्राक्षाय धीमते ।
कुलिशव्यग्रहस्ताय नमस्तेऽस्तु शतक्रतो ॥
मुखं यः सर्वदेवानां येन हव्यं च नीयते ।
येन प्रवर्तते सर्वं नमस्तस्मै हविर्भुजे ॥
येन संह्रीयते सर्वं येन धर्मश्च रक्ष्यते ।
यस्माद्बिभेति लोकोऽयं प्रेतनाथ नमोऽस्तुते ॥
राक्षसा यातुधानाश्च पिशाचाश्चाश्रयन्ति यम् ।
तस्मै निर्ऋतिरूपाय रक्षसां पतये नमः ॥
येन संरक्ष्यते सर्वं यस्मिन् सर्वं प्रतिष्ठितम् ।
अमोघपाशहस्ताय तस्मैऽपांपतये नमः ॥
पूर्यन्ते च ह्रीयन्ते च येन प्राणादयः क्रमात् ।
भूतानां पतये नित्यं नमस्तस्मै मरुत्पते ॥
ताराधिपाय सौख्याय कुमुदोद्धृतबाहवे ।
सर्वौषधिगणेशाय निशाधिप नमोऽस्तुते ॥
येन कालाग्निना लोको युगान्तेष्ववदह्यते ।
तस्मै ते ब्रह्मणपुत्र विरूपाक्ष नमोऽस्तुते ॥
पन्नगाधिपतिर्देव अनन्तो नाम नामतः ।
पाताळवासिने तुभ्यं नागराजाय ते नमः ॥
येन सृष्टं जगत्सर्वं सर्गादौ विष्णुशासनात् ।
पितामह नमस्तुभ्यं सर्वलोकेश पद्मज ॥
नमस्ते द्वारपालाय पद्मव्यग्रमहाभुज ।
चक्राद्यङ्कितदेहाय वैष्णवाय नमो नमः ॥
नमस्ते द्वारपालाय गदाव्यग्रमहाभुज ।
चक्राद्यङ्कितदेहाय वैष्णवाय नमो नमः ॥
नमस्ते द्वारपालाय दुर्जयायारिहारिणे ।
चक्राद्यङ्कितदेहाय वैष्णवाय नमो नमः ॥

नमस्ते द्वारपालाय प्रबलायारिहारिणे ।
चक्राद्यङ्कितदेहाय वैष्णवाय नमो नमः ॥
चक्रशङ्खगदाहस्ताः तर्जयन्ताः महाबलाः ।
कुमुदादिभ्यः सर्वेभ्य सगणेभ्यो नमो नमः ॥
लक्ष्म्यां - नमस्ते द्वारिसंस्थायै चण्ड्यै च ज्वालयावृते ।
दृष्ट्या निहितदैत्यायै वैष्णव्यै ते नमो नमः ॥
नमस्ते द्वारिसंस्थायै प्रचण्ड्यै ज्वालयावृते ।
दृष्ट्या निहितदैत्यायै वैष्णव्यै ते नमो नमः ॥
नमस्ते द्वारिसंस्थायै बलाकिन्यै महौजसे ।
दृष्ट्या निहितदैत्यायै वैष्णव्यै ते नमो नमः ॥
नमस्ते द्वारिसंस्थायै वैष्णव्यै ज्वालयावृते ।
दृष्ट्या निहितदैत्यायै वनमालिन्यै ते नमः ॥
नमस्ते द्वारिसंस्थायै जयायै ज्वालयावृते ।
दृष्ट्या निहितदैत्यायै वैष्णव्यै ते नमो नमः ॥
नमस्ते द्वारिसंस्थायै विजयायै महौजसे ।
दृष्ट्या निहितदैत्यायै वैष्णव्यै ते नमो नमः ॥
नमस्ते द्वारिसंस्थायै  वैष्णव्यै ज्वालयावृते ।
दृष्ट्या निहितदैत्यायै विभीषिकायै ते नमः ॥
नमस्ते द्वारिसंस्थायै शाङ्कर्यै ज्वालयावृते ।
दृष्ट्या निहितदैत्यायै वैष्णव्यै ते नमो नमः ॥
नमस्ते द्वारिसंस्थायै सावित्र्यै वल्लकीयुते ।
पद्ममालाशोभितायै वैष्णव्यै ते नमो नमः ॥
नमस्ते द्वारिसंस्थायै वाग्देव्यै वाग्विलासिनि ।
पद्ममालाशोभितायै वैष्णवै ते नमो नमः ॥
कमलद्वयहस्तायै तर्जयन्त्यै महाबले ।
लक्ष्मीनिर्माल्यधारिण्यै सुमुख्यै ते नमो नमः ॥
नमस्ते शङ्खनिधये पुष्पनिधये ते नमः ।

गोपुरद्वारसंस्थाभ्यां युवाभ्यां वै नमो नमः ॥
नमस्ते द्वारिसंस्थायै पद्मिन्यै ज्वालयावृते ।
दृष्ट्या निहितदैत्यायै वैष्णव्यै ते नमो नमः ॥
नमस्ते द्वारिसंस्थायै कुमुदिन्यै महौजसे ।
दृष्ट्या निहितदैत्यायै वैष्णव्यै ते नमो नमः ॥
चक्रशङ्खाञ्जलिधराश्चासीनाः पद्मविष्टरे ।
धृत्यादिभ्यश्च सर्वेभ्य सगणेभ्यो नमो नमः ॥

दुर्गायाम् - नमस्ते द्वारियुक्तायै जयायै ज्वालयावृते ।
दृष्ट्या निहितदैत्यायै कन्यकायै नमो नमः ॥
नमस्ते द्वारियुक्तायै विजयायै महौजसे ।
दृष्ट्या निहितदैत्यायै कन्यकायै नमो नमः ॥
नमस्ते द्वारियुक्तायै रौद्र्यै च ज्वालयावृते ।
दृष्ट्या निहितदैत्यायै कन्यकायै नमो नमः ॥
नमस्ते द्वारियुक्तायै भीषण्यै ज्वालयावृते ।
दृष्ट्या निहितदैत्यायै कन्यकायै नमो नमः ॥
नमस्ते द्वारियुक्तायै शूलिन्यै ज्वालयावृते ।
दृष्ट्या निहितदैत्यायै कन्यकायै नमो नमः ॥
नमस्ते द्वारियुक्तायै प्रभायै ज्वालयावृते ।
दृष्ट्या निहितदैत्यायै कन्यकायै नमो नमः ॥
नमस्ते द्वारियुक्तायै कन्यकायै महौजसे ।
दृष्ट्या निहितदैत्यायै अपराजितायै नमः ॥
नमस्ते द्वारियुक्तायै जयन्त्यै ज्वालयावृते ।
दृष्ट्या निहितदैत्यायै कन्यकायै नमो नमः ॥
वाहनाय महादेव्या गम्भीरनिनदाय च ।
अतुल्यबलवीर्याय मृगराजाय ते नमः ॥
नमस्ते द्वारसंस्थायै प्रोज्वलन्त्यै महत्विषा ।
दृष्ट्या निहितदैत्यायै चण्डिकायै नमो नमः ॥

नमस्ते द्वारसंस्थायै विजयन्त्यै महाबले ।
दृष्ट्या निहितदैत्यायै त्वम्बिकायै नमो नमः ॥
नमस्ते द्वारियुक्तायै शङ्खोद्धृतमहाभुजे ।
दृष्ट्या निहितदैत्यायै कन्यकायै नमो नमः ॥
नमस्ते द्वारियुक्तायै पुष्पोद्धृतमहाभुजे ।
दृष्ट्या निहितदैत्यायै कन्यकायै नमो नमः ॥
वरदाभयहस्तायै तर्जयन्त्यै महाबले ।
दुर्गानिर्माल्यधारिण्यै मुण्डिन्यै ते नमो नमः ॥
नमस्ते ह्लादिनि सदा सर्वाह्लादविशारदे ।
नमस्ते मोदिनि सदा सर्वचित्तप्रमोदिनी ॥
अतिकोमलचार्वङ्गी कात्यायनि नमोऽस्तुते ।
विजिताखिलदैत्येन्द्रे विजयन्त्यै नमोऽस्तुते ॥

शिवे - नमोऽस्तु वेत्रहस्ताभ्यां द्वाःस्थाभ्यां वै पिनाकिनः ।
नन्दिने तु नमस्तुभ्यं महाकालाय ते नमः ॥
नमस्ते द्वारियुक्ताय हेरम्बाय महात्मने ।
दृष्ट्या निहितदैत्याय शाङ्कराय नमो नमः ॥
नमस्ते द्वारियुक्ताय भृङ्गीशाय महात्मने ।
दृष्ट्या निहितदैत्याय शाङ्कराय नमो नमः ॥
नमस्ते द्वारियुक्ताय दुर्मुखाय महात्मने ।
दृष्ट्या निहितदैत्याय शाङ्कराय नमो नमः ॥
नमस्ते द्वारियुक्ताय पाण्डुराय महात्मने ।
दृष्ट्या निहितदैत्याय शाङ्कराय नमो नमः ॥
नमस्ते द्वारियुक्ताय सितनामाय धीमते ।
दृष्ट्या निहितदैत्याय शाङ्कराय नमो नमः ॥
नमस्ते द्वारियुक्ताय असिताय महात्मने ।
दृष्ट्या निहितदैत्याय शाङ्कराय नमो नमः ॥
वाहनाय नमः शम्भोः क्षुब्दार्णवघनस्वन ।

वृषभाय नमस्तेऽस्तु सर्वदुष्टप्रशान्तये ॥
नमस्ते द्वारियुक्ताय शूलहस्ताय धीमते ।
दृष्ट्या निहितदैत्याय शाङ्कराय नमो नमः ॥
नमस्ते द्वारियुक्ताय परशुव्यग्रपाणये ।
दृष्ट्या निहितदैत्याय शाङ्कराय नमो नमः ॥
मन्दाराय नमस्तेऽस्तु पाशहस्ताय धीमते ।
दृष्ट्या निहितदैत्याय शाङ्कराय नमो नमः ॥
भैरवाय नमस्तेऽस्तु अहिहस्ताय धीमते ।
दृष्ट्या निहितदैत्याय शाङ्कराय नमो नमः ॥
नमस्ते गणनाथाय वीरभद्राय धीमते ।
दक्षयज्ञविनाशाय त्रिनेत्राय नमो नमः ॥
नमस्ते भूतनाथाय महाशास्ताय धीमते ।
प्रभासत्यकयुक्ताय शाम्भवाय नमो नमः ॥
चण्डेशाय नमस्तुभ्यं शिवनिर्माल्यधारिणे ।
रौद्राय च प्रसन्नाय प्रणतार्तिहराय ते ॥

## || द्वारपाललक्षणः ||

विष्णौ - नन्दसुनन्दौ प्राग्द्वारि वामनाकाररूपकौ ।
चक्रशङ्खधरौ ज्ञेयौ गदाहस्तौ महाबलौ ॥
तर्जयन्तौ ह्यभक्तानां दोषाणां ध्वंसनोद्यतौ ।
दंष्ट्राकरालौ भीमाक्षौ करण्डिमकुटान्वितौ ॥
चण्डप्रचण्डौ कर्तव्यौ खड्गखेटगदान्वितौ ।
सव्यापसव्ययोगेन तर्जयन्तौ महाबलौ ॥
तर्जनीबाणचापञ्च गदा तेषु प्रदक्षिणा ।
गदापि सव्यतः कुर्यात् जयश्च विजयस्तथा ॥
तर्जनीपद्मशङ्खश्च गदा तेषु प्रदक्षिणा ।
सव्यापसव्ययोगेन कुमुदः कुमुदेक्षणः ॥

लक्ष्मां - सर्वे चतुर्भुजाः प्रोक्ता पद्ममालासुशोभनाः ।
पद्मद्वयधराश्चैव वेत्रहस्ताः द्विलोचनाः ॥
पीताम्बरधराः शुभ्राः किरीटकुण्डलान्विताः ।
सव्यापसव्ययोगेन तर्जयन्त्यः विशेषतः ॥

अजे - पुरुषाकारगम्भीराः सकूर्चा मुकुटोज्ज्वलाः ।
पद्मं स्रुक्पुस्तकं दण्डं सत्यो वामेऽथ दक्षिणे ॥
सव्यापसव्यकरयोः पद्मदण्डश्च धर्मकः ।
अक्षपद्माङ्कुशान्दण्डं करे धत्ते प्रियोद्भवः ॥
दण्डागमसृक्फलकैर्यज्ञः स्यात् सर्वकामदः ।
अक्षसूत्रगदाखेटदण्डैर्विजयनामकः ॥
अधोहस्तापसव्येन खेटधृत् यज्ञभद्रकः ।
अक्षं पाशाङ्कुशौ दण्डं भवः स्यात् सर्वकामिकः ॥
दण्डाक्षाङ्कुशपद्मैश्च विभवः सर्वशान्तिदः ।

शिवे - मातुलिङ्गञ्च नागेन्द्रं डमरुं चाक्षसूत्रकम् ।
नन्दी मुकुटशोभाड्यः सर्वाभरणभूषितः ॥
खट्वाङ्गश्च कपालञ्च डमरुं बीजपूरकम् ।
दंष्ट्राकरालवदनं महाकालन्तु दक्षिणे ॥
तर्जनी च त्रिशूलञ्च डमरुं गजमेव च ।
हेरम्बो वामभागे स्याद् भृङ्गी दक्षिणतः स्मृतः ॥
गजं डमरुखट्वाङ्गं तर्जनीं वामहस्ततः ।
उभौ च दक्षिणे द्वारे भृङ्गी दक्षिणतः स्मृतः ॥
त्रिशूलं डमरुश्चैव खट्वागं च कपालकम् ।
कपालं डमरुं दन्तं बीजपूरं तथा दधत् ॥
दुर्मुखः पश्चिमे वामे पाण्डुरो दक्षिणे तथा ।
मातुलिङ्गं मृणालञ्च खट्वाङ्ग पद्मदण्डकौ ॥
सितो वामेऽसितो दक्षे उत्तरद्वारसंस्थितौ ।
पद्मदण्डश्च खट्वाङ्गं मृणालं बीजपूरकम् ॥

पार्वत्यां - अभयाङ्कुशपाशदण्डैर्जया चैव तु पूर्वतः ।
सव्यापसव्ययोगेन विजया नाम सा भवेत् ॥
अभयाम्बुजपाशदण्डैरजिता चापराजिता ।
अभयवज्राङ्कुशदण्डैर्विभक्ता मङ्गलाऽपि च ॥
अभयं शङ्खपद्मदण्डैर्मोहिनी स्तम्भिनी तथा ।

कुमारे - सुदेहसुमुखौ विप्रौ गुहस्य द्वारपालकौ ।
एकवक्त्रौ द्विबाहू च गदाभयकरौ स्मृतौ ॥
चतुर्भुजौ चेत्तस्योर्ध्वे वज्रशक्तिधरौ तथा ।
रक्तश्यामलवर्णाढ्यौ सर्वाभरणभूषितौ ॥
सुदंष्ट्रौ स्मितवक्त्रौ च करण्डमकुटोज्ज्वलौ ।
द्वारपालं ततो वक्ष्ये श्रृणुष्व मुनिपुङ्गव ॥
जया च विजया रक्षा कृपा सत्यविचक्षणाः ।
अभया कामरूपाश्च खड्गखेटकृपाणयः ॥
रक्तवर्णा विभूषाढ्या रक्तरूपापराधमाः ।
श्यामकुङ्कुमसङ्काशौ  द्विभुजौ वा चतुर्भुजौ ॥
वज्रशक्तिधरौ चैव गदायुधधरौ स्मृतौ ।
खड्गखेटकधरौ वा मुद्राविस्मयसंयुताः ॥
महामण्डपिकद्वास्थौ विजयो जय इत्यपि ।
वीरबाहुर्वीरसेनो वीरश्च वीरकुञ्चुकः ॥
वीरकेतुर्महावीरो वीरमौलिश्च वीर्यवान् ।
इमे प्रथमसालस्य पूर्वादिद्वारपालकाः ॥
पद्मश्चैव महापद्मः सुपद्मः पद्मलोचनः ।
पद्मगः पद्मकेतुश्च पद्माभः पद्मवर्णकः ॥
अन्तर्द्वारि चतुर्दिक्षु द्वारपालाष्टका इमे ।
निकुम्भः कुम्भकर्णश्च कुम्भः कुम्भोदरस्तथा ॥
कुम्भनासा कुम्भपृष्ठः कुम्भास्यः कुम्भगण्डकः ।
मध्यद्वारचतुर्दिक्षु द्वारपालाष्टका इमे ॥

वक्रदन्तो वक्रदष्टिर्वक्राङ्गो वक्रवर्णकः ।
वक्रनासो वक्रवर्णो वक्रास्यो वक्रशीर्षकः ॥
महामध्यादिपूर्वादि द्वारेषु द्वारपालकाः ।
शक्तिवज्रधरास्सर्वे सर्वाभरणभूषिताः ॥
श्यामकुङ्कुमसङ्काशा पीतकृष्णा भयङ्कराः ।
द्विभुजौ वा चतुर्बाहुः सर्वे खेटकधारिणः ॥
मुद्रा विस्मयहस्ताश्च तुङ्गाश्च विकृताननाः ।
एते सर्वे महाभागाः कुमारगणदेवताः ॥
यत्र देवस्य तु मुखं तत्र बुध्वा समर्चयेत् ।
परिवारदेवता एते विश्वामित्र महामुने ॥

सूर्ये - सर्वे च पुरुषाकाराः कर्तव्याः शान्तिमिच्छता ।
चतुर्द्वारेषु च स्थाप्या दिशाचैव प्रदक्षिणे ॥
मसीभाजनलेखन्यौ बिभ्रत् दण्डी तु दक्षिणे ।
वामेतु पिङ्गलो द्वारि दण्डभृत् स रवेर्गणः ॥
[तर्जन्यंशुताम्रचूडदण्डैर्दण्डी तु वामतः ।
तर्जनीशक्तिकिरणदण्डैः स्यात् पिङ्गलः परः ॥]
द्वे तर्जन्यौ वज्रदण्डवानानन्दो वामगो दद्यात् ।
तर्जनीदण्डापसव्ये ह्यन्तकः स तु दक्षिणे ॥
द्वे तर्जन्यौ पद्मदण्डे चित्रो धत्ते स वामतः ।
तर्जनीदण्डापसव्ये विचित्रो दक्षिणे स्थितः ॥
तर्जन्यौ किरणं दण्डं किरणाक्षः स धारयेत् ।
तर्जनीदण्डापसव्ये प्रतिहारः सुलोचनः ॥

गणेशे - सर्वे च वामनाकाराः सौम्याश्च पुरुषाननाः ।
तर्जनीपरशुपद्मविघ्नो दण्डहस्तकः ॥
तर्जनीदण्डापसव्ये भवेद् विघ्नराजकः ।
तर्जनीखड्गखेटस्य दण्डहस्तः सुवक्त्रकः ॥
तर्जनीदण्डापसव्ये दक्षिणे बलवान् भवेत् ।

तर्जनीबाणचापं च दण्डं च गजकर्णकः ॥
तर्जनीदण्डापसव्यो गोर्णः पश्चिमे स्थितः ।
तर्जनीपद्मान्चाकुड्शं दण्डहस्तः सुसौम्यकः ॥
तर्जनी दण्डापसव्ये स चैव शुभदायकः ।
पक्षद्वारादिके सर्वे प्राच्याद्यष्ट व्यवस्थिताः ॥

## ब्राह्म्यादिमन्त्राः -

ब्राह्म्यां मूलमन्त्रः- विश्वामित्र ऋषिः । पङ्क्ति छन्दः । ब्राह्मी देवता
ॐ आं हृदयाय नमः । ईं शिरसे स्वाहा । ऊं शिखायै वषट् । ऐं कवचाय हुम् ।
औं नेत्रत्रयाय वौषट् । अः अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ अं नमः (पादयोः) । ब्रां (हृदि) । ह्म्यैं (शिरसि) । नं (नाभौ) । मः (मुखे)

ध्यानम्- दण्डं कमण्डलुं बिभ्रत्यक्षसूत्रमथाङ्कुशम् ।
सुवर्णवर्णां श्रीब्राह्मीं कृष्णाजिनधरां शुभाम् ॥

मन्त्रः- ॐ अं ब्राह्म्यै नमः

माहेश्वर्य्यां मूलमन्त्रः- जमदग्नि ऋषिः । उष्णिक् छन्दः । माहेश्वरी देवता
ॐ हां हृदयाय नमः । हीं शिरसे स्वाहा । हूं शिखायै वषट् । हैं कवचाय हुम् ।
हौं नेत्रत्रयाय वौषट् । हः अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ हं नमः(पादयोः) । मां(हृदि) । हें (शिरसि) । श्वं (नाभौ) । यैं (मुखे) । नं (ललाटे) । मः (नासिकायां)

ध्यानम्- शूलं परश्वधं क्षुद्रदुन्दुभिं नृकरोटिकाम् ।
बिभ्रतीमभ्रशुभ्राभां स्मरेन्माहेश्वरीमपि ॥

मन्त्रः- ॐ हं माहेश्वर्यै नमः

कौमार्य्यां मूलमन्त्रः- भारद्वाज ऋषिः । त्रिष्टुप् छन्दः । कौमारी देवता
ॐ रां हृदयाय नमः । रीं शिरसे स्वाहा । रूं शिखायै वषट् । रैं कवचाय हुम् ।
रौं नेत्रत्रयाय वौषट् । रः अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ रं नमः(पादयोः) । कौं (हृदि) । मां(शिरसी) । यैं (नाभौ) । नं (मुखे) । मः (ललाटे)

ध्यानम् - अङ्कुशं दण्डखट्वाङ्गपाशाँश्च दधतीं भुजैः ।
ध्यायेत्सिन्दूरसङ्काशां कौमारीं शक्तिमालिकाम् ॥

मन्त्रः - ॐ रं कौमार्यै नमः

वैष्णव्यां मूलमन्त्रः- गौतम ऋषिः । गायत्री छन्दः । वैष्णवी देवता
ॐ ह्रां हृदयाय नमः । ह्रीं शिरसे स्वाहा । ह्रूं शिखायै वषट् । ह्रैं कवचाय हुम् । ह्रौं नेत्रत्रयाय वौषट् । ह्रः अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ह्रीं नमः(पादयोः) । वैं (हृदि) । ष्णं(शिरसि) । व्यैं (नाभौ) । नं (मुखे) । मः (ललाटे)

ध्यानम् - चक्रघण्टापताकाख्यशङ्खराजच्चतुर्भुजाम् ।
कळायश्यामळां ध्यायेद्वैष्णवीं पीतवाससम् ॥

मन्त्रः - ॐ ह्रीं वैष्णव्यै नमः

वाराह्यां मूलमन्त्रः- अत्रि ऋषिः । जगती छन्दः । वाराही देवता
ॐ हां हृदयाय नमः । हीं शिरसे स्वाहा । हूं शिखायै वषट्। हैं कवचाय हुम् । हौं नेत्रत्रयाय वौषट् । हः अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ हूं नमः(पादयोः) । वां (हृदि) । रां (शिरसि) । ह्यैं (नाभौ) । नं (मुखे) । मः ( ललाटे) ।

ध्यानम्- मुसलासिलसद्धण्टाहलोद्यत्करपङ्कजाम् ।
गदावरदसंयुक्तां वाराहीं नीरदप्रभाम् ॥

मन्त्रः - ॐ हूं वाराह्यै नमः

नारसिंह्यां मूलमन्त्रः- वसिष्ठ ऋषिः । अनुष्टुप् छन्दः । नारसिंही देवता
ॐ क्षां हृदयाय नमः । क्षीं शिरसे स्वाहा । क्षूं शिखायै वषट् । क्षैं कवचाय हुम् । क्षौं नेत्रत्रयाय वौषट् । क्षः अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ क्षं नमः(पादयोः) । नां (हृदि) । रं (शिरसि) । सिं (नाभौ) । ह्रौं (मुखे) । नं (ललाटे) । मः (नासिकायां)

ध्यानम् - नारसिंहीं चतुर्भुजां चक्रशङ्खविधारिणीम् ।
त्रिनयनां उग्ररूपां वरदाभयदां शिवाम् ॥

मन्त्रः- ॐ क्षं नारसिंह्यै नमः

ऐन्द्र्यां मूलमन्त्रः- कश्यप ऋषिः । बृहती छन्दः । ऐन्द्री देवता
ॐ लां हृदयाय नमः । लीं शिरसे स्वाहा । लूं शिखायै वषट् । लैं कवचाय हुम् । लौं नेत्रत्रयाय वौषट् । लः अस्त्राय फट्
मन्त्राक्षरन्यासः - ॐ लं नमः(पादयोः) । सुं (हृदि) । रें (शिरसि) । श्वं (नाभौ) । यैं (मुखे) । ऐं ( ललाटे) । द्रैं (नासिकायां) । नं (नेत्रयोः) । मः (जान्वो)

ध्यानम् - अङ्कुशं तोमरं वज्रं चक्रं च दधतीं शुभाम् ।
इन्द्रोपलाभामिन्द्राणीं संस्मरेदुज्ज्वलभूषणाम् ॥

मन्त्रः- ॐ लं सुरेश्वर्यै ऐन्द्रै नमः

चामुण्डायां मूलमन्त्रः- नारद ऋषिः । गायत्री छन्दः । चामुण्डा देवता
ॐ ऐं हृदयाय नमः । ह्रीं शिरसे स्वाहा । क्लीं शिखायै वषट् । चामुण्डायै कवचाय हुम् । विच्चे नेत्रत्रयाय वौषट् । ऐं ह्रीं क्लीं चामुण्डायै विच्चे अस्त्राय फट्

मन्त्राक्षरन्यासः - ॐ ऐं नमः (पादयोः) । ह्रीं (हृदि) । क्लीं (शिरसी) । चां (नाभौ) । मुं (मुखे) । डां ( ललाटे) । यैं (नासिकायां) । विं (नेत्रयोः) । च्चें (जान्वो)

ध्यानम्- शूलासिनृशिरोराजत्कपालविलसद्भुजाम् ।
वरदाभयदां देवीं चामुण्डां मुण्डमालिनीम् ॥

मन्त्रः - ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे


चक्रमुद्रा


शङ्खमुद्रा


गदामुद्रा


पद्ममुद्रा


वेणुमुद्रा


श्रीवत्समुद्रा


कौस्तुभमुद्रा


वनमालामुद्रा


तार्क्ष्यमुद्रा



नरसिंहमुद्रा



वराहमुद्रा



हयग्रीवमुद्रा



धनुर्मुद्रा



बाणमुद्रा



परशुमुद्रा



त्रैलोक्यमोहनमुद्रा



बिल्वमुद्रा



लिङ्गमुद्रा


त्रिशूलमुद्रा


अक्षमालामुद्रा


प्राणमुद्रा


अपानमुद्रा


व्यानमुद्रा


उदानमुद्रा


समानमुद्रा


ग्रासमुद्रा


दन्तमुद्रा



हृदयमुद्रा



शिरोमुद्रा



शिखामुद्रा



कवचमुद्रा



नेत्रद्वयमुद्रा



नेत्रत्रयमुद्रा



अस्त्रमुद्रा



गन्धमुद्रा



पुष्पमुद्रा


धूपमुद्रा


दीपमुद्रा


नैवेद्यमुद्रा


गालिनीमुद्रा


सुरभिमुद्रा


आवाहनामुद्रा


संस्थापनामुद्रा


सन्निधापिनीमुद्रा


सम्बोधिनीमुद्रा



सम्मुखीकरणमुद्रा



सकलीकरणमुद्रा

Picture Credits: **Mudra Vijnana**


बिम्बम्
योगपद्मपीठम्
ब्रह्मशिला
योगनालम्(अनन्तम्)
शिलाकूर्मम्
पद्मम्
निधिकुम्भम्(आधारशक्तिः)
आधारपीठम्(परमपुरुषः)



चक्राब्ज



श्रीपद्मोदर



शक्तिभद्रक



षड्दलमण्डल



पद्ममण्डल



वास्तुमण्डल



अङ्कुरार्पण



सप्तादशद्रव्यकलश



शय्याधिवास



द्वादशपद



भद्रकमण्डल

ನವಾರ್ಕಕಾಂತಿಂ ಸ್ಮಿತಸುಂದರಾಸ್ಯಮ್ ।
ಸುವರ್ಣಕೌಪೀನಭೃತಂ ಸುಸೌಮ್ಯಮ್ ॥
ಪ್ರಬೋಧಮುದ್ರಾಭಯಯುಕ್ತಹಸ್ತಮ್ ।
ಪ್ರಣೌಮಿ ವಿದ್ಯಾಧಿಗಮಾಯ ಮಧ್ವಮ್ ॥



– ಬೆಳ್ಳೆ ಸುದರ್ಶನ ಆಚಾರ್ಯ